सा॰ लक्ष्माबाइ भ्रतार भूपालप्पा
जिरगे कोल्हापूर यांनीं अर्पण केलें
वीर संवत् २४४८

# प्रस्तावना.

पूर्वी श्रीमदाशाधर या नांवाचे महाकवि होऊन गेले. त्यांनीं स्वोपदेशादि मोठमोठे ग्रंथ रचिले आहेत. हा पूजापाठही त्यांनींच रचिला. याचा प्रचार आमच्या दक्षिणदेशांत व उत्तरदेशांत फार आहे. त्यांत आमच्या दक्षिणदेशांत जिकडे पहावें तिकडे हा ग्रंथ कानडी लिपीमध्यें असल्या कारणानें सरकारी मराठी अगर इंग्रजी शाळेस जाऊन मराठी व इंग्रजी विद्याभ्यास करून तयार झालेलीं उपाध्यांचीं व श्रावकाचीं मुलें त्यांना तो ग्रंथ शिकण्यास अगोदर कानडी अक्षरें शिकून शिकणे ह्मणजे फारच त्रासदायक होऊं लागलें; ह्मणून मीं कांहीं जुन्या प्रतीवरून शोध करून बालबोध लिपींत हा ग्रंथ छापविला. या ग्रंथाची तपासणी श्री० रा० रा० कलाप्पा भरमाप्पा निटवे व श्री० रा० रा० कलाप्पा अनंत उपाध्ये या उभयता विद्वानांनीं केली. यावरून हा ग्रंथ शाणोल्लीढ मणिप्रमाणें उजळ झाला असें ह्मणण्यास कांहीं हरकत नाहीं.

या ग्रंथांत ज्या कांहीं टिपा दिल्या आहेत त्या श्रीभट्टाकलंकानीं केलेल्या ग्रंथाच्या आधारानें दिल्या आहेत. सिंहसंघ, नंदीसंघ, सेनसंघ व देवसंघ असे हे चार संघ जैनामध्यें होऊन गेले आहेत. त्यांनीं केलेल्या ग्रंथामध्यें परस्पर भेद नाहीं. जो कोणी भेद मानेल तो मिथ्यादृष्टी होय. या विषयीं समयभूषणामध्यें असें सांगितलें आहे कीं—

**चतुःसंघेषु यो नरो यस्तु कुरुते भेदभावनां । मिथ्यादृष्टिः स विज्ञेयो जिनधर्मविवर्जितः ॥**

यास अनुसरून जाणारा सम्यग्दृष्टी होय. नाहीं तर त्याला जैनमुद्रा ह्मणू नये. कारण, चतुःसंघानीं सांगितलेलें शास्त्र प्रामाण्य आहे. ह्या संघाची गणना आचार्यामध्येंच आहे. "आचार्यवचनं प्रोक्तं सर्वज्ञवचनोपमं" ह्मणून यांचें वचन कोणीही उल्लंघन करूं नये. केल्यास दोष आहे. श्रीभट्टाकलंक हे देवसंघापैकीं आहेत ह्मणून यांचे वचन प्रामाण्य मानलें पाहिजे. श्रीमदाशाधर हेही या संघापैकींच आहेत ह्मणून यांनीं केलेले ग्रंथ प्रमाण मानले पाहिजेत.

चौथी व पांचवी इयत्ता शिकून तयार झालेल्या मुलांना हा ग्रंथ वाचतां व त्यांतील विधि करतां येईल अशी तजवीज या ग्रंथांत केली आहे. हा आमच्या जैनबंधूनीं संग्रही ठेवावा.

**नेमीशा आदाप्पा उपाध्ये,** उदगांवकर.

# विषयानुक्रमणिका.

## ॥ ॐ नमः सिद्धेभ्यः ॥

ॐ श्रीवीतरागाय नमः ॥ श्रीमदाशाधरकृतनित्याभिषेकः ॥ ॐ जयजय नमः सिद्धेभ्यः ॥ श्रीमन्मंदरमस्तके शुचिजलैर्धौते सुदर्भाक्षते। पीठे मुक्तिवरं निधाय रचिता स्तत्पादपुष्पस्रजः ॥ इंद्रोऽहं निजभूषणार्थममलं यज्ञोपवीतं दधे । मुद्राकंकणशेखरानपि तथा जन्माभिषेकोत्सवे ॥ १ ॥ इति इंद्रस्थापनं ॥ ॐकारं बिंदुसंयुक्तं नित्यं ध्यायंति योगिनः । कामदं मोक्षदं चैव ॐकाराय नमो नमः ॥१॥ मंगलं भगवानर्हन् मंगलं भगवाञ् जिनः। मंगलं प्रथमाचार्यो मंगलं वृषभेश्वरः ॥२॥ मंगलं प्रथमं लोकेपूत्तमं शरणं जिनं । नत्वायमर्हतां पूजाक्रमः स्याद्विधिपूर्वकं ॥ ३ ॥ विज्ञानं विमलं यस्य भासते विश्वगोचरं । नमस्तस्मै जिनेंद्राय सुरेंद्राभ्यर्चितांघ्रये ॥ ४ ॥ श्रीमज्जिनराज-जन्मसमये स्नानक्रमप्राक्रियां । मेरोर्मूर्ध्नि पयःपयोनिधिपयःपूर्णैः सुवर्णात्मकैः ॥ कामं याम-मिताश्रियं घटशतैः शक्रादयश्चक्रिरे । तामत्रायंजनानुरागजननीं जातोत्सवे प्रस्तुवे ॥ ५ ॥ ॐ ह्रीं श्रीं क्ष्रीं भूः स्वाहा प्रस्तावनाय पुष्पांजलिः ॥ श्रीमज्जिनेंद्रकथिताय सुमंगलाय । लोकोत्तमाय शरणाय विनेयजंतोः ॥ धर्माय कायवचनादित्रिशुद्धितोऽहं । स्वर्गापवर्गफलदाय नमस्करोमि ॥ ६ ॥ पुण्यबीजोर्जितक्षेत्रं स्नानक्षेत्रं जगद्गुरोः । शोधये शातकुंभोरुकुंभसंभृतवारिभिः ॥ ७ ॥ ॐ ह्रीं क्ष्रीं भूः स्वाहा पवित्रतरजलेन भूमिशुद्धिं करोमि स्वाहा । भूमिशोधनं ॥ दुरंतमोहसंतानकां-तारदहनक्षमं । दर्भैः प्रज्वालयाम्यग्निं ज्वालापल्लवितांबरं ॥ ८ ॥ ॐ ह्रीं श्रीं क्ष्रीं अग्निं प्रज्वा-

लयामि निर्मलाय स्वाहा । अमिप्रक्षालनं ॥ नुष्टपष्टिमहस्रस्याप्यहीना सोदहेतवे । सिंचामि सुधया भूमिं भव्यमानेर्महामहे ॥ ९ ॥ ॐ ह्रीं क्षीं भूः पष्टिमहस्रसंख्येभ्यो नागेभ्योऽमृतांजलिं प्रसिंचामि स्वाहा । नागसंतर्पणं ॥ ब्रह्मादिहव्यवाहानां धर्मनिकम्युदन्वतां । मरुद्यदंडमौलीनां दिक्षु दर्भान् क्षिपाम्यहं ॥ १० ॥ ॐ ह्रीं दर्पमथनाय नमः स्वाहा । ब्रह्मादिदशदिक्षु दर्भाः ॥ तोयगंधाक्षतैः पुष्पैः सान्नाय्यैश्च यजामहे । यागभूमिं जिनेंद्रस्य दीपधूपफलैरपि ॥ ११ ॥ ॐ ह्रीं नीरजसे नमः स्वाहा । ॐ ह्रीं शीलगंधाय नमः स्वाहा । ॐ ह्रीं अक्षताय नमः स्वाहा । ॐ ह्रीं विमलाय नमः स्वाहा । ॐ ह्रीं परमसिद्धाय नमः स्वाहा । ॐ ह्रीं ज्ञानोद्योताय नमः स्वाहा । ॐ ह्रीं श्रुतधूपाय नमः स्वाहा । ॐ ह्रीं अभीष्टफलदाय नमः स्वाहा । ॐ ह्रीं भूर्भूमिदेवता इदं जलादिकमर्चनं गृण्हीध्वं २ नमः स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत् सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारा ॥ १२ ॥ मदीयपरिणामसमानविमलतमसलिलस्नानपवित्रीभूतसर्वांगयष्टिः । सर्वांगीणाद्रहरिचंदनसौगंधिदिग्धदिग्विवरो हंसांसधवलदुकूलांतरीयोत्तरीयः ॥ ॐ ह्रीं श्वेतवर्णे सर्वोपद्रवहारिणी सर्वजनमनोरंजिनी परिधानोत्तरीयं । धारिणी हंहं झंझं संसं तंतं पंपं परिधानोत्तरीयं धारयामि स्वाहा । वस्त्रावरणं ॥ अतिनिर्मलमुक्ताफलललितं यज्ञोपवीतमतिपूतं । रत्नत्रयमिति मत्वा करोमि कलुषापहरणमाभरणं ॥१३॥

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्राय नमः स्वाहा । यज्ञोपवीतसंधारणं ॥ स्नातानुलिप्तसर्वांगो धृत-धौतांबरः शुचिः । दधे यज्ञोपवीतादीन् मुद्राकंकणशेखरान् ॥ १४ ॥ ॐ ह्रीं सम्यग्दर्शनज्ञान-चारित्राय नमः स्वाहा शेखरमंत्रः ॥ धृत्वा शेखरपट्टहारपदकंग्रैवयकालंबकं । केयूरांगदमध्यबं-धुरकटीसूत्रं च मुद्रान्वितं ॥ चंचत्कुंडलकर्णपूरममलं पाणिद्वये कंकणं । मंजीरं कटकं पदे जिन-पतेः श्रीगंधमुद्रांकितं ॥ षोडशाभरणं ॥ १५ ॥ श्वेतसूत्रावृतान् पूर्णकुंभान् सदकभूषितान् । संस्थाप्य कोणकेष्टेषु पुष्पाणि प्रक्षिपाम्यहं ॥ १६ ॥ ॐ ह्रीं स्वस्तये कलशं स्थापयामि स्वाहा । कलशस्थापनं ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः नमोऽर्हते भगवते श्रीमते पद्ममहापद्मतिगिंछ-केशरी पुंडरीक महापुंडरीक गंगा सिंधु रोहिद्रोहितास्या हरिद्धरिकांता सीता सीतोदा नारी नर-कांता सुवर्णकूला रूप्यकूला रक्ता रक्तोदा क्षीरांभोनिधिशुद्धजलं सुवर्णघटं प्रक्षालितपरिपूरित-नवरत्नगंधपुष्पाक्षताभ्यर्चितमामोदकं पवित्रं कुरु २ झौं २ वं मं हं सं तं पं द्रां द्रीं असिआउसा नमः स्वाहा । कलशजलशुद्धिः ॥ अभ्यर्च्य कलशांस्तोयगंधवाहैश्चंदनैरहं । अक्षतैः कुसुमैश्चारुदीप-धूपफलैरपि ॥ १७ ॥ ॐ ह्रीं नेत्राय संवौषट् कलशार्चनं करोमि स्वाहा कलशार्चनं ॥ पांडु-काख्यशिलां मत्वा पीठमेतन्महीतले । स्थापयामि जिनेंद्रस्य मज्जनाय महोत्तरं ॥ १८ ॥ ॐ ह्रीं अर्हं क्ष्मं ठठ श्रीपीठस्थापनं करोमि स्वाहा । श्रीपीठस्थापनं ॥ पादपीठकृतस्वर्णपात्रमूल-

जिनेशिनः । शैलेंद्रस्नानपीठस्य पीठं प्रक्षालयाम्यहं ॥ १९ ॥ ॐ ह्राँ ह्रीं ह्रूँ ह्रौं ह्रः नमोऽर्हते भगवते श्रीमते पवित्रतरजलेन पीठप्रक्षालनं करोमि स्वाहा । पीठप्रक्षालनं ॥ क्षिपामि हरितान् दर्भान् पीठे पूतमनोहरान् विघ्ननाशेषमंगलाधान दीप्तकांचननिर्मिते ॥ २० ॥ ॐ ह्रीं दर्पमथनाय नमः स्वाहा । पीठदर्भाः ॥ प्रक्षाल्य पीठिकां प्राच्ये तोयैर्गंधैः सुतंदुलैः । प्रसूनैश्चरुभिर्दीपैर्धूपैर्नानाफलैरपि ॥ २१ ॥ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्राय नमः स्वाहा । पीठार्चनं ॥ श्रीवर्णं विदधे शुभ्रैः सदकैः शुचिभिः फलैः । देवदेवस्य पीठेऽस्मिन् सर्वलक्षणसंयुते ॥ २२ ॥ ॐ ह्रीं श्रीं श्रीकारलेखनं करोमि स्वाहा । श्रीकारलेखनं ॥ जलगंधाक्षतकुसुमैश्चरुप्रदीपधूपफलानिवहैः जितकर्मारिपुं ॥ जिनपतिमर्चामि प्रबलया भक्त्या ॥ २३ ॥ ॐ ह्रीं श्रीं श्रीयंत्रार्चनं करोमि स्वाहा । श्रीयंत्रार्चनं ॥ जिनराजप्रतिबिंबे सकलजगद्भव्यपुण्यपुजावलंबे । भक्त्या स्पृशामि परया निर्भूषणमखिललोकभूषणममलं ॥ २४ ॥ ॐ ह्रीं धात्रे वषट् प्रतिमास्पर्शनं करोमि स्वाहा । प्रतिमास्पर्शनं ॥ द्वीपे नंदीश्वराख्ये स्वयममृतभुजोऽकृत्रिमां स्नापयेयु— । भक्त्या भावार्हतो वा भवभयभिदया भाक्तिका चैत्यगेहात् ॥ आनीयास्मिन् स्थवीयस्यतिविमलतमे कृत्रिमां स्नानपीठे । सद्भावैः स्थापनार्हत्प्रतिकृतिममुना यक्षयक्षीसमेतां ॥ २५ ॥ प्रणमदखिलामरेश्वरमणिमकुटतटांशुखचितचरणाब्जं ॥ श्रीकामं श्रीनाथं श्रीवर्णे स्थापयामि जिनं ॥ २६ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं जगतां सर्वशांतिं कुर्वंतु

श्रीवर्णे प्रतिमास्थापनं करोमि स्वाहा । श्रीवर्णे प्रतिमास्थापनं ॥ श्रीपादपद्मयुगलं सलिलैर्जिनस्य । प्रक्षाल्य तीर्थजलपूततमोत्तमांगं ॥ आह्वानमंत्रकुसुमाक्षतचंदनाद्यैः । संस्थापनं च विदधेऽत्रच सन्निधानं ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः नमोऽर्हते भगवते श्रीमते पवित्रतरजलेन श्रीपादप्रक्षालनं करोमि स्वाहा । श्रीपादप्रक्षालनं ॥ करोमि परमां मुद्रां पंचानां परमेष्ठिनां । श्रीनिधेर्भव्यनाथस्य सन्निधौ त्रिजगद्गुरोः ॥ २८ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अ सि आ उ सा नमः पंचगुरुमुद्रावतरणं करोमि स्वाहा ॥ पंचगुरुमुद्रावतरणं ॥ ॐ उसहाय दिव्वदेहाय सज्जोजादाय महापण्णाय अणंतचउट्ठयाय परमसुहाय पइट्ठियाय णिम्मळाय सयंभुवे अजरामरपदपत्ताय चउमुहाय परमेट्ठिणे अरहंते तिळोयणाहाय तिळोयपूज्जाय अट्ठदिव्वदेवाय देवपरिपूज्जाय परमपदाय ममत्तहे सण्णिधाय स्वाहा ॥ अनंतज्ञानदृग्वीर्यसुखरूपजगत्पतेः । पाद्यं समर्चयाम्यद्भिर्निर्मलैः पादपंकजे ॥ २९ ॥ ॐ ह्रीं अर्हंत इदं पाद्यं गृण्हीष्व २ नमोऽर्हद्भ्यः स्वाहा ॥ कनत्कनकभृंगारनालाद्गलितवारिभिः । जगत्त्रितयनाथस्य करोम्याचमनक्रियां ॥ ३० ॥ ॐ ह्रीं क्ष्वीं क्ष्वीं वं मं हं सं तं पं द्रां द्रीं हं सः स्वाहा । अर्घ्यपाद्याचमनक्रियाः ॥ भस्मान्नमृद्गोमयपिंडदर्पैराज्यैः फलैर्मिश्रितगंधपुष्पैः । त्वां वर्धमानैः सह पात्रसंस्थैर्दर्भाग्निकोणैरवताग्येऽर्हन् ॥ ३१ ॥ ॐ ह्रीं दशविधपिंडावतरणं करोमि स्वाहा ॥ दशविधपिंडावतरणं ॥ नीराजनविधिद्रव्यैर्वर्धमानैः फलै-

रपि । विदधामि जिनेंद्रायतारं पापोपशांतये ॥ २२ ॥ ॐ ह्रीं समस्तनीराजनद्रव्यैर्नीराजनं करोमि स्वाहा । दुरितमस्माकमपनयतु भगवान् स्वाहा । नीराजनावतरणं ॥ करोमि भक्त्या कुसुमाक्षताद्यैः सुसंभृतैः पाणिपवित्रपात्रे । जिनेश्वराणामिह पादपीठे प्रकाशमाह्वाननपूर्वमादौ ॥ २३ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अत्र एहि २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधिकरणं ॥ ॐ ह्रीं परमेष्ठिने नमः जलं निर्वपामि स्वाहा । ॐ ह्रीं परमात्मकेवलिभ्यो नमः गंधं । ॐ ह्रीं अनादिनिधनेभ्यो नमः अक्षतान् । ॐ ह्रीं सर्वनृसुरासुरपूजितेभ्यो नमः पुष्पं । ॐ ह्रीं अनंतानंतसुखसंतृप्तेभ्यो नमः चरुं । ॐ ह्रीं अनंतानंतदर्शनेभ्यो नमः दीपं । ॐ ह्रीं अनंतानंतवीर्येभ्यो नमः धूपं । ॐ ह्रीं अनंतानंतसौख्येभ्यो नमः फलं ॥ सामोदैः स्वच्छतोयैरुपहितलुहिनैश्चंदनैः स्वर्गलक्ष्मी-लीलाढ्यैरक्षतैर्धम्मिल्लदलितकुसुमैरकैर्निसहृद्यैः । नैवेद्यैर्नव्यजाम्बूनदमदहमकैर्दीपकैः काम्यधूम-स्तूपैर्धूपैर्मनोज्ञैर्द्रुसुरभिफलैः पूजये त्वाऽर्हदीश ॥ २४ ॥ ॐ ह्रीं अर्हं नमः परमब्रह्मणे विनष्टाष्ट-कर्मणे अर्घ्यं निर्वपामि स्वाहा ॥ शांतिधारा । पुष्पांजलिः ॥ इंद्रमग्निं यमं रक्षो वरुणं नवमारुतं । कुबेरेशाननागेंद्रचंद्रानाहूय दिक्पतीन् ॥ २५ ॥ ॐ ह्रीं क्रों इंद्रादिदशदिक्पालकदेवा अत्र आग-च्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २

पावनमपदेवाधिदेवाय । परमकारुण्यरससंतृप्तजीवाय । वृंदारकवृंदवंदनसमर्थाय । वंदमानमंगलोत्तम-शरणभूताय । ज्ञानात्मने नमः । पूतात्मने नमः । शुद्धात्मने नमः । बुद्धात्मने नमः ॥

## ॥ अथ प्रशस्तिः ॥

ॐ जय जय जितामयांतक । जय जय निष्कलंक लोकविभो ॥ जय जय तीर्थंकर जय । जय देव मे सुखं दद्याः ॥ जय दुरितविनाश नमस्ते । वरभव्यांभोजसूर्य नमस्ते ॥ स्मरदर्पहर नमस्ते । वरगुणचिंतामणिधीर नमस्ते ॥ पूर्णस्वर्णगिरीन्द्रमस्तकलसन्माणिक्यसाभासिते । पीठे पांडुकनामधेयसुभगे जन्माभिषेकोत्सवे ॥ देवेन्द्रैः शुभमानसैर्विरचिते संसारसंतापहा । देवः पातु जिनेश्वरः शुभमतिः सुश्रावकीयां सभां ॥ १ ॥ आहार्यप्रातिहार्यप्रकटितमहिमा नव्यदिव्यादिभाषाभूषः श्रीचंद्रनाथः कलितवसुचयः संचितागण्यपुण्यः ॥ भव्यः श्रद्धानपूजागुणमणिनिवहस्त्यानकं जैनसंघं ॥ २ ॥ श्रीनाभेयोऽजितः शंभवनामिविमलाः सुव्रतानंतधर्माश्चंद्रांकः शांतिकुंथू सुसुमतिसुविधी शीतलो वासुपूज्यः ॥ मल्लिः श्रेयान् सुपार्श्वो जलदरुचिवरो नंदनः पार्श्वनेमी । श्रीवीरश्चेति देवः प्रविदधतु चतुर्विंशतिर्मंगलानि ॥ ३ ॥ स जयतु जिनचंद्रः सद्गुणांबोधिचंद्रः । कुगतिगजमृगेंद्रस्तुंगभद्रो नरेंद्रः ॥ शमदमयमरुंद्रश्चारुचारित्रसांद्रः । परमनुतसुरेंद्रः कालिपाकापुरींद्रः ॥ ४ ॥ विद्यानंदसमंतभद्रगुरवः श्रीपूज्यपादादयः । सद्धर्मार्हदनंतवीर्यविभवो भट्टाकलंकाश्रयः ॥ सिद्धांतोदधिषेणवीरजिनसेनाचार्यवर्यादयः । सद्धर्मं कलयंतु भव्यनिकरं स्वःश्रीपदं श्रीपदं ॥ ५ ॥

## ॥ अथ बिरुदावलिः ॥

श्रेयःपद्मविकासवासरमणिः स्याद्वादरक्षामणिः । संसारोरगदर्पगारुडमणिर्भव्यौघचिंतामणिः ॥ अश्रांताक्षयशांतमुक्तिरमणिः सामंतमुक्तामणिः । श्रीमान् देवशिरोमणिर्विजयते श्रीवीतरागः प्रभुः ॥१॥ आहारभयभैषज्यशास्त्रदानदत्तावधानानां । खंडस्फुटितजीर्णजिनचैत्यचैत्यालयोद्धारणैकधीराणां । यात्राप्रतिष्ठादिसप्तक्षेत्रधनवितरणकशीलानां । तर्कव्याकरणच्छंदोऽलंकारसाहित्यसंगीतकाव्यनाटकाभिधानशास्त्रसरोजरसास्वादनमदोत्कटमधुकरसमानानां । निजकुलकमलविकासनैकमार्तंडावताराणां । श्रीदिल्लिकोल्हापूरजिनकंचिपिनगोंडिचतुःसिंहासनाधीश्वरश्रीकोल्हापुरविराजमानभट्टारकश्रीजिनसेनतपस्तेजोलालसानां श्रीकरवीरक्षेत्रश्रीवृषभदेवपदकमलाराधकानां । श्रीमूलसंघपुण्यार्थं मंगलार्थं तुष्टिपुष्ट्यारोग्यार्थं भव्यजनक्रियमाणे जिनेश्वराभिषेके सावधाना भवंतु । पूर्वाचार्येभ्यो नमोऽस्तु नमोऽस्तु नमोऽस्तु ॥

## ॥ अथ कलशोद्धारणम् ॥

तूर्यगीतस्तुतिध्वानव्रातैः सद्बलिगेदमी । मया जिनाभिषेकाय पूर्णकुंभोऽयमुद्धृतः ॥ १ ॥ ॐ ह्रीं स्वस्तये कलशोद्धारणं करोमि स्वाहा । कलशोद्धारणं ॥

## ॥ अथ जलाभिषेकः ॥

मतैरिव जिनेंद्रस्य वारिभिस्तापहारिभिः । निर्मलं स्नापयामीशं विशुद्धं मद्विशुद्धये ॥ १ ॥
श्रीमद्भिः सुरसैर्निसर्गविमलैः पुण्याशयाभ्याहृतैः । शीतैश्चारुघटाश्रितैरवितथैः संतापविच्छेदकैः ॥
तृष्णोद्रेकहरैरजःप्रशमनैः प्राणोपमैः प्राणिनां । तोयैर्जैनवचोमृतातिशयिभिः संस्नापयामो जिनं ॥२॥
ॐ ह्रीं श्रीं क्लीं ऐं अर्हं वं मं हं सं तं पं वं वं हं हं सं सं तं तं पं पं झं झं झ्वीं झ्वीं क्ष्वीं क्ष्वीं द्रां द्रां
द्रावय द्रावय नमोऽर्हते भगवते श्रीमते पवित्रतरजलेन जिनमभिषेचयामि स्वाहा । जलस्नपनम् ॥
शीतैर्जलैर्मलयजैर्बहुलैरखंडैः । शाल्यक्षतैः सुखकरैः कुसुमैर्हविर्भिः ॥ दीपप्रदीपपटलै रुचिरैर्विचित्रैः ।
धूपैः फलैरपि यजे जिनमर्चयामि ॥ अष्टविधार्चनम् ॥ ३ ॥

## ॥ अथ नाळिकेरादिरसाभिषेकः ॥

सुस्निग्धैर्नवनाळिकेरफलजैराम्रादिजातैस्तथा । पुंड्रेक्ष्वादिसमुद्भवैश्च गुरुभिः पापापहैरंजसा ॥
पीयूषद्रवसन्निभैर्वररसैः संज्ञानसंप्राप्तये । सुस्वादैरमलैरलं जिनविभुं भक्त्याऽनघं स्नापये ॥ १ ॥
ॐ ह्रीं नाळिकेराम्रकदलीद्राक्षादिरसस्नपनं ॥ नाळिकेरजलैः स्वच्छैः शीतैः पूतैर्मनोहरैः । स्नान-
क्रियां कृतार्थस्य विदधे विश्वदर्शिनः ॥ २ ॥ ॐ ह्रीं नाळिकेररसेन जिनमभिषेचयामि स्वाहा ।
नाळिकेररसस्नपनं ॥ वनसुगंधसदक्षतपुष्पकैर्मनसिजातसुहव्यप्रदीपकैः । अनुपमागरुधूपसुमत्फलै-
र्जिनपतेः पदपद्मयुगं यजे ॥ अष्टविधार्चनम् ॥ ३ ॥

## ॥ अथ आम्ररसाभिषेकः ॥

सुपक्वैः कनकच्छायैः सामोदैर्मोदकारिभिः । सहकाररसैः स्नानं कुर्मः शर्मैकसद्मनः ॥ १ ॥ ॐ ह्रीं पवित्रतरचूतरसेन जिनमभिषेचयामि स्वाहा । चूतरसस्नपनम ॥ उदकचंदनतंडुलपुष्पकैश्चरुसुदीपसुधूपफलार्घ्यकैः । धवलमंगलगानरवाकुलैर्जिनगृहे जिननाथमहं यजे ॥ अष्टविधार्चनम ॥ २ ॥

## ॥ अथ शर्कराभिषेकः ॥

मुक्त्यंगनानामविकीर्यमाणैरिष्टार्थकर्पूररजोविलासैः । माधुर्यधुर्यैर्वरशर्करौघैर्भक्त्या जिनस्य स्नपनं करोमि ॥ १ ॥ ॐ ह्रीं पवित्रतरशर्करौघेन जिनमभिषेचयामि स्वाहा । शर्करास्नपनं ॥ जलेन गंधेन सदक्षतैश्च पुष्पेण शाल्यन्नचरुष्करेण । दीपेन धूपेन फलेन भक्त्या सुरासुरार्च्यं जिनमर्चयामि ॥ अष्टविधार्चनम ॥ २ ॥

## ॥ अथ इक्षुरसाभिषेकः ॥

देवानीकैरनेकैः स्तुतिशतमुखरैर्वीक्षिता याऽतिहृष्टैः । शक्रेणाद्यैः प्रयुक्ता जिनचरणयुगे चारुचामीकराभा ॥ धारांभोजाक्षितीक्षुप्रचुरवररसश्यामला वो विभूत्यै । भूयात् कल्याणकाले सकलकलिमलक्षालनेऽतिविदक्षा ॥ १ ॥ प्राणिनां प्रीणनं कर्त्तुं दक्षैरिक्षुरसैर्मुदा । सौवर्णकलशैः पूर्णैः स्नापयेऽहं निरंजनं ॥ २ ॥ ॐ ह्रीं पवित्रतरेक्षुरसेन जिनमभिषेचयामि स्वाहा । इक्षुरसस्नपनम् ॥

शीतोदकैर्मंजुलगंधलेपैः । सत्तंडुलैः पुष्पवरैश्च हव्यैः ॥ दीपैश्च धूपै रुचिरैः फलौघै । रंचामि भक्त्या जिननाथमेनम् ॥ अष्टविधार्चनं ॥



## ॥ अथ घृताभिषेकः ॥

दंडीभूततडिद्गुणप्रगुणया हेमाद्रिवत्स्निग्धया । चंचच्चंपकमालिकारुचिरया गोरोचनापिंगया ॥ हेमाद्रिस्थलसूक्ष्मरेणुविलसद्वातूलिकालीलया । द्राघीयोघृतधारया जिनपतेः स्नानं करोम्यादरात् ॥ १ ॥ कनत्कनकसंजातपालिकारुचिरत्विषा । प्राज्येनाज्येन निर्वाणराज्यार्थं स्नापयाम्यहं ॥ ॐ ह्रीं पवित्रतरघृतेन जिनमभिषेचयामि स्वाहा । घृतस्नपनम् ॥ अंचामि सलिलमलयजतंडुलपुष्पान्नदीपधूपफलनिवहैः । नमदमरमौलिमालालालितपदकमलयुगलमर्हंतं ॥ अष्टविधार्चनं ॥ ३ ॥

## ॥ अथ क्षीराभिषेकः ॥

माला तीर्थकृतः स्वयंवरविधौ क्षिप्ताऽपवर्गश्रिया । तस्येयं सुभगस्य हारलतिका प्रेम्णा तया प्रेषिता ॥ वर्त्मन्यस्य समीक्षितेति विनतद्दग्वीथिशंकाकृता । कुर्मः शर्मसमृद्धये भगवतः स्नानं पयोधारया ॥ स्थूलकल्लोलदुग्धाब्धेर्वेलाफेनानुकारिणा । क्षीरपूरेण मारारेः प्रारभे स्नपनक्रियां ॥ २ ॥ ॐ ह्रीं पवित्रतरक्षीरेण जिनमभिषेचयामि स्वाहा । क्षीरस्नपनम् ॥ सलिलघनसारसदकप्रसवहविर्दीपधूपफलनिवहैः । नमदमरमौलिमालालालितपदकमलयुगलमर्हंतं ॥ अष्टविधार्चनम ॥ ३ ॥

## ॥ अथ दध्यभिषेकः ॥

शुक्लध्यानमिदं समृद्धिमथवा तस्यैव भर्तुर्यशोराशीभूतमितस्वभावविशदं वाग्देवतायाः स्मितं ॥ आहो श्वेतसुपुष्पवृष्टिरियमित्याकारमातन्वता दध्नैनं हिमखंडपांडुररुचा संस्नापयामो जिनं ॥ १ ॥ लोकत्रयपतेः कीर्तिमूर्तिसाम्यादिव स्वयं । संलब्धस्तब्धभावेन दध्ना मज्जनमारभे ॥ २ ॥ ॐ ह्रीं पवित्रतरदध्ना जिनमभिषेचयामि स्वाहा । दधिस्नपनम् ॥ सलिलमलयजसदककुसुमसन्नाय प्रदीपधूपफलस्तबकशांतिधाराद्यष्टमंगलद्रव्यैराराधयामि ॥ अष्टविधार्चनम् ॥

## ॥ अथ कल्कचूर्णोद्वर्तनम् ॥

पिष्टैश्च कल्कचूर्णैश्च गंधद्रव्यसमुद्भवैः । जिनांगं संगताज्याद्यैः स्नेहपूतं करोम्यहं ॥ १ ॥ ॐ ह्रीं पवित्रतरकल्कचूर्णेन जिनांगोद्वर्तनं करोमि स्वाहा । सुगंधकल्कचूर्णोद्वर्तनम् ॥

## ॥ अथ लाजादिचूर्णोद्वर्तनम् ॥

सकलकलमलाजैर्मल्लिकाफुल्लजातैरिव सितसमवर्णैर्लाजचूर्णप्रपूर्णै ॥ बहुलपरिमलौघैर्हारहारिद्र-चूर्णैर्जिनपतिमहमुच्चैः संप्रसिंचे रजोभिः ॥ ॐ ह्रीं पवित्रतरलाजादिचूर्णोद्वर्तनम् ॥

## ॥ अथ नीराजनावतरणम् ॥

वर्णानां प्रमुखैर्द्रव्यैर्जिनेन्द्रमवतारये । संसारसागरोत्तारं पूतं पूतगुणालयं ॥ १ ॥ ॐ ह्रीं समस्त-

नीराजनद्रव्यैर्दुरितमस्माकमपनयतु भगवान् स्वाहा । नीराजनावतरणं ॥



## ॥ अथ कषायोदकस्नपनम् ॥

कंकोलै र्ग्रंथिपर्णागरुतुहिनजटाजातिपत्रैर्लवंगैः श्रीखंडैलादिचूर्णैः प्रतनुभिरवधूलींदुधूलीविमिश्रैः ॥ आलिप्तोद्वर्तशुद्धैः समलयजरसैः कालमैः पिष्टपिंडैः । प्रक्षादित्वक्कषायैर्जिनतनुमभितः स्नेहमाक्षालयामि ॥ १ ॥ संस्नापितस्य घृतदुग्धदधिप्रवाहैः । सर्वाभिरौषधिभिरर्हत उज्वलाभिः ॥ उद्वर्तितस्य विदधाम्यभिषेकमेवं । कालेयकुंकुमरसोत्कटचारुपूरैः ॥ २ ॥ क्षीरभूरुहसंजातत्वक्कषायजलैरहं । मज्जातमलविच्छित्यै मज्जनं विदधे विभोः ॥ ३ ॥ ॐ ह्रीं पवित्रतरकषायोदकेन जिनमभिषेचयामि स्वाहा । कषायोदकस्नपनं ॥

## ॥ अथ चतुष्कोणकुंभोदकस्नपनं ॥

हृद्योद्वर्तनकल्कचूर्णनिवहैः स्नेहापनोदं तनोः । वर्णाद्यैर्विविधैः फलैश्च सलिलैः कृत्वाऽवतारक्रियां ॥ संपूर्णैः सकृदुद्धृतैर्जलधराकारैश्चतुर्भिर्घटै । रंभःपूरितदिग्मुखैरभिषवं कुर्मस्त्रिलोकीपतेः ॥ १ ॥ अंभोभिः संभृतैः कुंभैरंभोधरानिभैः शुभैः । कोणस्थैरभिषिंचामि चतुर्भिर्भुवनप्रभुं ॥ २ ॥ ॐ ह्रीं पवित्रतरचतुष्कोणकुंभोदकेन जिनमभिषेचयामि स्वाहा । चतुष्कोणकुंभोदकस्नपनम् ॥

## ॥ अथ चंदनानुलेपनम् ॥

संसिद्धशुद्धया परिहारशुद्धया । कर्पूरसंमिश्रितचंदनेन ॥ जिनेंद्रदेवसुरपुष्पवृष्टिं । विलेपनं चारु करोमि भक्त्या ॥ चंदनानुलेपनम ॥ १ ॥

## ॥ अथ पुष्पोद्धारणम् ॥

वासंतिकाजातिशिरीपवृंदैर्बंधुकवृंदैरपि चंपकाद्यैः ॥ पुष्पैरनेकैरलिभिर्हृताग्रैः श्रीमज्जिनेंद्रांघ्रियुगं यजेऽहं ॥ पुष्पोद्धारणम ॥ १ ॥

## ॥ अथ गंधोदकस्नपनं ॥

कर्पूरोल्वणसांद्रचंदनरसप्राचुर्यशुभ्रत्विषा । सौरभ्याधिकगंधलुब्धमधुपश्रेणीसमाश्लिष्टया ॥ सद्यः संगतगांगयामुनमहास्रोतोविलासश्रिया । गंधोदकधारया जिनपतेः स्नानं करोमि श्रियै ॥ १ ॥ गंधोदकैर्भ्रमद्भृंगसंगीतध्वानिबंधुरैः । अभिषिंचामि सम्यक्त्वरत्नाकर विमल प्रभो ॥ २ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं नमोऽर्हते भगवते श्रीमते प्रक्षीणाशेषदोषकल्मषाय दिव्यतेजोमूर्त्तये नमः श्रीशांतिनाथाय शांतिकराय सर्वविघ्नप्रणाशनाय सर्वरोगापमृत्युविनाशनाय सर्वपरकृतक्षुद्रोपद्रवविनाशनाय सर्वक्षामडामरविनाशनाय ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा पवित्रतरगंधोदकेन जिनमभिषेचयामि । मम सर्वशांतिं कुरु कुरु । तुष्टिं कुरु कुरु । पुष्टिं कुरु कुरु स्वाहा ।

गंधोदकस्नपनम् ॥ स्नानानंतरमर्हतः स्वयमपि स्नानांबुशेषार्दितो। वार्गंधाक्षतपुष्पदामचरुकैर्दीपैः सुधूपैः फलैः ॥ कामोद्दामगजांकुशं जिनपतिं स्वभ्यर्च्य संस्तौति यः। स स्यादारविचंद्रमक्षयसुखप्रख्यातकीर्तिध्वजः ॥ १ ॥ इत्यर्चनाफलम् ॥

## ॥ अथ अष्टकम् ॥

आह्वयाम्यहमर्हंतं स्थापयामि जिनेश्वरं। सन्निधिकिरणं कुर्वे पंचमुद्रान्वितं महे ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अत्र एहि २ संवौषट् स्वाहा। आह्वाननं ॥ ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। सन्निधीकरण ॥ द्युगंगादिजैर्वारिपूरैः पवित्रैः। सुधासोपमैश्चंद्रद्रव्यादिमिश्रैः। बुधाः पूजयेऽहं सदा वीरनाथं। कलौ कल्मषकृत्तकं पूज्यपादं ॐ ह्रीं श्रीवीरवर्धमानतीर्थंकराय नमः जलं निर्वपामि स्वाहा ॥ १ ॥ सुरारम्यश्रीखंडजातैः सुगंधैः। द्रवैर्भूरिसौरभ्यकाश्मीरयुक्तैः ॥ बुधाः० ॥ ॐ० ॥ गंधं ॥ २ ॥ क्षताधव्रजैरक्षतैरक्षतौघै-। ज्वलद्दिग्विवारैर्निधीनप्रकाशैः ॥ बुधाः० ॥ ॐ० ॥ अक्षतं ॥ ३ ॥ जपाजातिमंदारकुंदादिपुष्पै। रणद्गंधलुब्धालिवारावकर्षैः ॥ बुधाः० ॥ ॐ० ॥ पुष्पं ॥ ४ ॥ महामंडकैर्मोदकैः शालिभक्ष्यैः। सितैर्हव्यपाकैः स्फुरद्भाजनस्थैः ॥ बुधा० ॥ ॐ० ॥ चरुं ॥ ५ ॥ ज्वलत्कीलजालैर्घृतादिप्ररोहै-। र्महामोहध्वांताहनैः सत्प्रदीपैः ॥ बुधा० ॥ ॐ० ॥ दीपं ॥ ६ ॥ लसद्धूपधूम्रैः सुगंधूपकौघै-। महा-

कर्मकाष्ठाहतैः सत्प्रधूपैः ॥ बुधा० ॥ ॐ० ॥ धूपं ॥ ७ ॥ मनोनेत्रहार्यैः सुपक्काम्रपूगैः । कदंबैश्च मोदैः सुनानाफलौघैः ॥ बुधा० ॥ ॐ० ॥ फलं ॥ ८ ॥ पानीयगंधाक्षतपुष्पचारु— । नैवेद्यसद्दीप-सुधूपवर्गैः ॥ फलैर्महार्घ्यैर्वरवर्धमान- । मुत्तारयध्वं खलु स्वेष्टसिद्ध्यै ॥ अर्घ्यं ॥ ९ ॥ ततो जिनेंद्रपादांते वारिधारां निपातये । भृंगारनालिकोद्भ्रांतां त्रिनमल्लोकशांतये ॥ शांतिधारां । दिव्यपुष्पांजलिः ॥ १० ॥

## ॥ अथ जयमाला ॥

चंद्रार्ककोटिसंकाशं कंदर्पाग्निशरं चिरं । कनत्कांचनसद्वर्णं भजेऽहं वृषवर्धनं ॥ १ ॥ सन्मति-जिनपं सरसिजवदनं । संजानिताखिलकर्मकमथनं ॥ पद्मसरोवरमध्यगतेंद्रं । पावापुरि महावीर-जिनेंद्रं ॥ १ ॥ वीरभवोदधिपारोत्तारं । मुक्तिश्रीवधुनगरविहारं ॥ पद्म० ॥ २ ॥ द्विर्द्वादशकं तीर्थ-पवित्रं । जन्माभिषवणकृतनिर्मलगात्रं ॥ पद्म० ॥ ३ ॥ वर्धमाननामाख्यविशालं । मानप्रमाणलक्षण-दशतालं ॥ पद्म० ॥ ४ ॥ शत्रुविमथनविकटभटवीरं । इष्टैश्वर्यधुरीकृतदूरं ॥ पद्म० ॥ ५ ॥ कुंडलपुरि सिद्धार्थभूपाल । स्तत्पत्नीप्रियकारिणिबालं ॥ पद्म० ॥ ६ ॥ नतकुलनलिनविकाशितहंसं । घात-पुरोघातिकविध्वंसं ॥ पद्म० ॥ ७ ॥ ज्ञानदिवाकरलोकालोकं । निर्जितकर्मारातिविशोकं ॥ पद्म० ॥८॥ बालत्वे संयमसुपालित । मोहमहानलमथनविनीतं ॥ पद्म० ॥ ९ ॥ घत्ता ॥ सर्वसाम्राज्यसंत्याज्यं कृत्वा तं श्रीमहानयं ॥ खंडितं कर्मवैरीणां लब्धश्रीसंगमं परं ॥ अर्घ्यम् ॥ १० ॥

## ॥ अथ श्रुतपूजा ॥

श्रीमज्जिनेंद्रलपनांबुरुहात्मलाभमाहात्म्यविश्वमहिते सुरसार्थसार्थे ॥ स्यात्कारलांछितपदप्रमितात्त्विषांगे एहीह तिष्ठ बत वाणि मम प्रसिद्ध्यै ॥१॥ ॐ ह्रीं शब्दब्रम्हमुखोत्पन्नद्वादशांगश्रुतदेवि अत्र एहि २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधींकरणं ॥ श्रीहेमकुंभपरिपूरितदिव्यतोयैः । संपूजयामि वरभव्य-सुखाय वाणीं ॥ ॐ० ह्रीं शब्दब्रम्हमुखोत्पन्नद्वादशांगश्रुतदेव्यै दिव्यजलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडसारघनसारसुकुंकुमाद्यैः । संपू० ॐ० ॥ गंधं ॥ २ ॥ सौगंध्यबद्धकलमाक्षतपुण्यपुंजैः । संपू० ॥ ॐ० ॥ अक्षतं ॥ ३ ॥ वासंतिकाबकुलमालतिचंपकाद्यैः । संपू० ॥ ॐ० ॥ पुष्पं ॥ ४ ॥ संसिद्धशुद्धपरमान्नसिताज्यभक्ष्यैः । संपू० ॥ ॐ० ॥ चरुं ॥ ५ ॥ प्रालेयकालवरनिर्मलरत्नदीपैः । संपू० ॐ० दीपं ॥ ६ कालागरुप्रसरसौरभधूपधूम्रैः । संपू० ॥ ॐ० ॥ धूपं ॥ ७ ॥ नारंगनिंबु-कदलीपनसाम्रपक्वैः । संपू० ॥ ॐ० फलं ॥ ८ ॥ क्षीरोदचिन्हादिविजांगविशेषवस्त्रैः । संपू० ॥ ॐ० ॥ वस्त्राभरणं ॥ ९ ॥ केयूरहारमणिकुंडलशेखराद्यैः । संपू० ॥ ॐ० ॥ षोडशाभरणं ॥ १० ॥ श्रीमज्जिनेंद्रमुखपद्मविराजमानां । संपू० ॥ ॐ० ॥ अर्घ्यं ॥ ११ ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ गुरुपूजा ॥

सम्यक्त्वमूलं सुमतिप्रकांडं । सुवृत्तशाखं विबुधालिसेव्यं ॥ अभीष्टदं सद्गुणगंधिपुष्पं । सुरेंद्रकल्पद्रुममर्चयेऽहं ॥ १ ॥ ॐ० ह्रीं चतुरशीतिलक्षगुणगणधरचरणा अत्र अवतरत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणम् ॥ हेमभृंगारनिर्यातहार्या वारिधारया । श्रीमत्साधुसमूहस्य पादमभ्यर्चयाम्यहं ॥ ॐ ह्रीं गणधरचरणेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडागरुकर्पूरमिश्रया गंधचर्चया । श्रीम० ॥ ॐ० गंधं ॥ २ ॥ अक्षतैरक्षयानंतसंपत्संपादनक्षमैः । श्रीम० ॥ ॐ० ॥ अक्षतं ॥ ३ ॥ पुष्पैश्चंपकपुन्नागमाल्लिकाबकुलादिभिः । श्रीम० ॐ० ॥ पुष्पं ॥ ४ ॥ नैवेद्येनानवद्येन सुधासारसमत्विषा । श्रीम० ॥ ॐ० चरुं ॥ दीपैः कर्पूरमाणिक्यवर्तिकाग्रविनिर्गतैः । श्रीम० ॥ ॐ० ॥ दीपं ॥ ६ ॥ सौरभ्यकृष्णभाधूमैर्धूपैरगरुसंभवैः । श्रीम० ॥ ॐ० ॥ धूपं ॥ ७ ॥ फलैर्नारंगजंबीरजंब्वाद्यैर्हृद्यतां गतैः । श्रीम० ॥ ॐ० ॥ फलं ॥ ८ ॥ यमनियमनिधीनामर्चयित्वा यतीना- । मपरिमितगुणानामंघ्रिपद्मानि भक्त्या ॥ तदनुसकलभव्यप्राणिकर्मोपशांत्यै । शुचिमुपरचयामो वारिभिः शांतिधारां ॥ अर्घ्यं ॥ शांतिधारां ॥ पुष्पांजलिः ॥

## ॥ अथ यक्षपूजा ॥

यस्य श्रीपादसेवानमदमरगणाः शंखभेरीमृगारिध्वानद्घंटानिनादादहमहमिकयाऽऽगत्य संभूरिभक्त्या॥ तद्देवस्योपतीर्थव्यवहृतिसमये नंदयन् भव्यलोकान् । धर्मद्रोहान् विलिंपन् जगति नुतिमितो यक्षदेवैः समेतः ॥ ॐ ह्रीं क्रों प्रशस्तवर्णसर्वलक्षणसंपूर्ण स्वायुधवधूचिन्हसपरिवार हे यक्ष अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसान्निधीकरणं ॥ सन्मंगलैः पूर्णघटातपत्रैर्ध्वजोह्रसच्चामरदर्पणाद्यैः । धर्मप्रभावप्रवणप्रवीणं धर्मानुरागेण यजामि यक्षं ॥ ॐ ह्रीं क्रों प्र० हे यक्ष इदमर्घ्यं इत्यादि ॥ यस्या० ॥ शांतिधारां ॥

## ॥ अथ यक्षीपूजा ॥

जाते भवान्वर्थविभावतो वा हुंडावसर्पिण्यतिदोषतो वा । मिथ्यामतं नाशयितुं समर्थां यक्षीं समाहूय वृषानुरक्तां ॥ ॐ ह्रीं क्रों प्रशस्तवर्णे सर्वलक्षणसंपूर्णे स्वायुधाचिन्हसपरिवारे हे यक्षिणि अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनंसान्निधीकरणं ॥ संगीतभृंगारपुरःसरेण सन्मंगलेनापि मनोहरेण । दुर्मार्गसक्तानमनुशासमानां यजामि यक्षीं वृषपक्षपातां ॥ ॐ ह्रीं क्रों प्र० हे यक्षिणि इदमर्घ्यं इत्यादि ॥ यस्यार्थं० ॥ शांतिधारां ॥

## ॥ अथ क्षेत्रपालपूजा ॥

अस्मिन् जैनमहामहोत्सवविधाविघ्नादिदिक्पालक—स्थित्यर्थं पग्निो दिशास्वभिमुखं निक्षिप्य दर्भासनं ॥ आरोप्यार्घ्यमनर्घ्यमंत्रयजनैर्विघ्नौघविच्छित्तये । शक्राद्यैरभिपूज्यते तरुभुवि श्रीक्षेत्रपालाधिपः ॥ १ ॥ ॐ ह्रीं क्रों प्रशस्तवर्ण सर्वलक्षणसंपूर्ण स्वायुधवाहनचिन्हसपरिवार हे क्षेत्रपाल अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ सन्मंगलार्घ्यैर्वरभाजनस्थैः । संपूर्णतोयादिसमन्वितैश्च ॥ रक्षन्सुचैत्यालयभूमिभागं । श्रीक्षेत्रपालं परिपूजयामि ॥ ॐ ह्रीं क्रों क्षेत्रपालाय अर्घ्यं समर्पयामि ॥ शांतिधारां ॥

## ॥ अथ मंगलारती ॥

जय मंगलं नित्यशुभमंगलं । जय विमल गुणनियल पुरुदेव ते ॥ जय मंगलं ॥ पल्लव ॥ वंदारुजिनवृषभवृंदवंदितचरण । मंदारकुंदासितकीर्तिधर ते ॥ इंदुकरघृणिकोटिजितविशदतनुकिरण । मंदरगिरींद्रनिभवरधीर ते ॥ जय० ॥ १ ॥ घोरतरसंसारवाराशिगततीर । नारीजनाकाररागहर ते ॥ मारवीरेशकरकोदंडभंगकर । सारशिवसाम्राज्यसुखसार ते ॥ जय० ॥ २ ॥ सुकिसलयततिविततकंकेलितरुनिकट । सुखविनुतसुरकुसुमवर्षयुत ते ॥ अकलंकजनहृदयातिमिरौघनुदानिनद । सकल-

शशिमितचमरनिकरधुत ते ॥ ३ ॥ चंडकेसरिविधृतपुंडरीकासनक । मंडितसुभामंडलभात ते ॥ खंडिताशनिघोषदिविजदुंदुभिनाद । पुंडरीकाञ्चितयजितचंड ते ॥ जय० ॥ ४ ॥ निरुपम निरतंक निःशेष निर्माय । निरशन निःशोष निर्मोह ते ॥ परमसुख परदेव परमेश परवीर्य । निरघ निर्मलरूप वृषभेश ते ॥ जय० ॥

## ॥ अथ सरस्वतीमंगलारती ॥

जय मंगलं भवतु शुभमंगलं । जय शीलविमलतरललितांगि ते ॥ जय मंगलं भवतु शुभमंगलं ॥ पल्लव ॥ सुरनरोरगमकुटकिरणरंजितचरणे परमजिनमुखकमलसंभवति ते ॥ दुरितघनवनविपयतरुनिकरपरशुनिभे ॥ वरसदागमसारसंदितनु ते ॥ जय० ॥ १ ॥ सारनिःसारसुविचारपरभाषणे । भूरिवरसारगुणमणिभूषणे ॥ मारसुरेशकरशरवारिरोपणे । नारीजनाकारनीताधिपणे ॥ जय० ॥ २ ॥ पद्मपादे पद्मदलविलसल्लोचने । पद्मनाभे सुभगे पद्मपाणे ॥ पद्मगंधि पद्मदलविलसदानने । पद्मयाने सुरभिपद्मानने ॥ जय० ॥ ३ ॥ पावनचरित्रधरभावज्ञमुनिशरणे । भावितसुभावनामतिरूपिणि ॥ भावजसुभामिनीरूपमददारिणि । भावसंदोहशुभभावजननि ॥ जय० ॥ ४ ॥ मंगलांगिनि तुंगमंगलोत्तमशरणे । मंगलाकारयुतमंगलाभरणे ॥ मंगलसुधासूक्तिरसपूरपूरणे । मंगलचिदानंदसंगधरणे ॥ जय० ॥ ५ ॥

## ॥ अथ गणधरमंगलारती ॥

जय मंगलं भवतु शुभमंगलं। जय योगिराज गणधरदेव ते ॥ जय मंगलं भवतु शुभमंगलं ॥ पल्लव ॥ अमलचतुरशीतिलक्षगुणगणधरण। विमलमूर्ते विरज निर्मोह ते ॥ अमरेंद्र नागेंद्रनुतचरण मुनिशरण। हिमरश्मिशांतरसमंदोह ते ॥ जय० ॥ १ ॥ मतिश्रुतावधिमनःपर्ययज्ञानधर ॥ शतमन्युवंद्यपदपद्मयुग ते ॥ श्रुतजलधिपार महावनधिसमगंभीर। जितकाम जितक्रोध जितराग ते॥ जय० ॥ पंचमहाचार पंचमहाव्रतधार। पंचेंद्रियमथक सन्मुनिनाथ ते ॥ पंचसत्समितिपालनचतुर महाधीर। पंचमस्थानयोविन्नाथ ते ॥ जय० ॥ ३ ॥ दध्युज्वलाक्षतमनोहरपुष्पदीपैः। पात्रार्पितैः प्रतिदिनं महतादरेण ॥ त्रैलोक्यमंगलसुखालय कामदाह। मालार्तिकां तव विभो अवतारयामि॥१॥ इति मंगलार्तिकावतरणम ॥

## ॥ अथ शांतिभक्तिः ॥

अथ जिनेंद्रमहापूजावंदनास्तवसमेतं श्रीमच्छांतिभक्ति कायोत्सर्गं करोम्यहं ॥ शांतिजिनं शशिनिर्मलवक्त्रम्। शीलगुणव्रतसंयमपात्रम ॥ अष्टशतार्चितलक्षणगात्रम्। नौमि जिनोत्तममंबुजनेत्रम ॥ १ ॥ पंचममीप्सितचक्रधराणाम्। पूजितमिंद्रनरेंद्रगणैश्च ॥ शांतिकरं गणशांतिमभीप्सुः। षोडशतीर्थकरं प्रणमामि ॥ २ ॥ दिव्यतरुः सुरपुष्पसुवृष्टिर्। दुंदुभिरासनयोजनघोषः ॥ आतप-

वारणचामरयुग्मे । यस्य विराजितमंडलतेजः ॥ ३ ॥ तं जगदर्चितशांतिजिनेंद्रम् । शांतिकरं शिरसा प्रणमामि ॥ सर्वगणाय तु यच्छतु शांतिं । मह्यमरैः पठितं परमं च ॥ ४ ॥ अशोकवृक्षः सुरपुष्पवृष्टि- । र्दिव्यध्वनिश्चामरमासनं च ॥ भामंडलं दुंदुभिरातपत्रं । सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ ५ ॥ येऽभ्यर्चिता मकुटकुंडलहाररत्नैः । शक्रादिभिः सुरगणैः स्तुतपादपद्माः ॥ तेऽमी जिनाः प्रवरवंशजगत्प्रदीपा- । स्तीर्थंकराः सततशांतिकरा भवंतु ॥ ६ ॥ संपूजकानां प्रतिपालकानां । यतींद्रसामान्यतपोधनानाम । देशस्य राष्ट्रस्य पुरस्य राज्ञः । करोतु शांतिं भगवान् जिनेंद्रः ॥ ७ ॥ क्षेमं सर्वप्रजानां प्रभवतु बलवान धार्मिको भूमिपालः । काले काले च सम्यग्वर्षतु मघवा व्याधयो यांतु नाशं ॥ दुर्भिक्षं चोरमारी क्षणमपि जगतां मास्मभूर्जीवलोके । जैनेंद्रं धर्मचक्रं प्रभवतु सततं सर्वसौख्यप्रदायि ॥ ८ ॥ प्रध्वस्तघातिकर्माणः केवलज्ञानभासुराः ॥ कुर्वंतु जगतः शांतिं वृषभाद्या जिनेश्वराः ॥ ९ ॥ इच्छामि भंते संतिभत्तिकाओसग्गो कओ । तस्स आलोचेउं । पंचमहाकल्लाणसंपण्णाणं । अट्ठमहापाडिहेरसहियाणं । चोत्तीस अइसयविसेससंजुत्ताणं । बत्तीसदेवेंदमणिमउलिमत्थयमहियाणं । बलदेववासुदेवचक्कहररिसिमुणिजयिअणगारोवगूढाणं । थुयिसयसहस्सणिळयाणं । उसहायिवीरवसाणाणं । मंगळमहापुरिसाणं । भत्तिये णिच्चकाळमच्चेमि पूजेमि वंदामि णमंसामि । दुक्खखओ कम्मखओ बोहिळाहो सुगइगमणं समाहिमरणं जिणगुणसंपत्ति होउ मज्झं ॥

## ॥ अथ मंगलाष्टकम् ॥

नाभेयादिजिनाधिपास्त्रिभुवनख्याताश्चतुर्विंशतिः । श्रीमंता भरतेश्वरप्रभृतयो ये चक्रिणो द्वादश ॥ ये विष्णुप्रतिविष्णुलांगलधराः सप्तोत्तरा विंशति- । त्रैकाल्ये प्रथितास्त्रिषष्टिपुरुषाः कुर्वंतु ते मंगलम् ॥ १ ॥ कैलासो वृषभस्य निर्वृतिमही वीरस्य पावापुरी । चंपा या वसुपूज्यसज्जिनपतेः संमेदशैलोऽर्हताम् ॥ शेषाणामपि चोर्जयंतशिखरी नेमीश्वरस्याऽर्हतो । निर्वाणावनयः प्रसिद्धविभवाः कुर्वंतु ते मंगलम् ॥ २ ॥ देव्योऽष्टौ च जयादिका द्विगुणिता विद्यादिका देवताः । श्रीतीर्थंकरमातृकाश्च जनका यक्षाश्च यक्ष्यस्तथा ॥ द्वात्रिंशत्त्रिदशा ग्रहास्तिथिसुरा दिक्कन्यकाश्चाष्टधा । दिक्पाला दश चेत्यमी सुरगणाः कुर्वंतु ते मंगलम् ॥ ३ ॥

## ॥ अथ पुष्पांजलिः ॥

कमलवकुलवालोत्फुल्लकल्हारमल्ली- । कुमुदकुरवकोद्यद्द्योतिताकेतकीनाम् ॥ दवनमरुवकाणां मालतीचंपकानाम् । जिनचरणपुरस्तादंजलिं प्रोक्षिपामः ॥ १ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हन् इदं पुष्पांजलिप्रार्चनं गृण्ह २ नमोऽर्हते स्वाहा ॥

## ॥ अथ पंचागप्रणामः ॥

प्रध्वस्ताशेषघातिप्रकटनिरवधिज्ञानदृग्वीर्यसौख्यः । कल्याणैः पंचभेदैः प्रविलसति चतुस्त्रिंशता चातिशेषैः ॥ तैरष्टप्रातिहार्यैस्त्रिजगदधिपतिर्यस्तमेनं प्रवंदे । स्याद्वादामोघवाक्यं सकलसुखकरं

सज्जनेंद्रं जिनेंद्रं ॥ १ ॥ इति पंचांगप्रणामः ॥

## ॥ अथ विसर्जनम् ॥

आह्वानं स्थापनं चैव । सान्निधीकरणं तथा ॥ पंचोपचारविधिना । पूजनं तु विसर्जनम् ॥ १ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः असिआउसा अर्हत्परमेष्ठिन स्वस्थानं गच्छ २ जः जः जः ॥ ॐ ह्रीं सरस्वतीदेवि स्वस्थानं गच्छ २ जः ३ ॥ ॐ ह्रीं गणधरदेव स्वस्थानं गच्छ २ जः ३ ॥ ॐ आं क्रों ह्रीं हे यक्ष स्वस्थानं गच्छ २ जः ३ ॥ ॐ आं क्रों ह्रीं हे यक्षि स्वस्थानं गच्छ २ जः ३ ॥ ॐ आं क्रों ह्रीं हे क्षेत्रपाल स्वस्थानं गच्छ २ जः ३ ॥ मोहध्वांतविदारणं विशद-विश्वोद्भासिदीप्तिश्रियम् । सन्मार्गप्रतिभासकं विबुधसंदोहामृतापादकम् ॥ श्रीपादं जिनचंद्रशांति-शरणं मद्भक्तिमानेऽमिते । भूयस्तापहरस्य देव भवतो भूयात् पुनर्दर्शनम् ॥१॥ इति नित्याभिषेकः समाप्तः ॥

### स्वामीस गंधोदक देणेचा मंत्र.

यत्प्रसादाद्धि चारित्ररत्नमासाध्यमुच्यते ॥ भता भवंतो भव्याश्च प्रणम्य गुरुपादयोः ॥ १ ॥

### समस्त श्रावक व श्राविका यांना गंधोदक देणेचा मंत्र.

निर्मलं निर्मलकरं पवित्रं पापनाशनम् ॥ श्रीमज्जिनगंधोदकं सकलकर्मनिवारणम् ॥ सकलदोष-निवारणम् ॥

# ॥ अथ ज्वालिनीपूजा॥

चंद्रोज्वलां चक्रफलां च पाश- । वर्मत्रिशूलां झषपाणिहस्तां ॥ श्रीज्वालिनीं सार्धधनुःशतोच्चां जिनांगनां कोणगतां यजामि ॥ १ ॥ ॐ आं क्रों ऱ्हीं ज्वालामालिनि महायक्षीदेवि अत्र एहि २ संवौषट् स्वाहा। ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा॥ आह्वानस्थापनसन्निधीकरणम् ॥ कर्पूरचंदनविमिश्रिततीर्थवारि- । धारा सुवर्णकनकालुकनालमुक्ता ॥ श्रीज्वालिनीरचितवज्रमुपंजराख्यं । सौभाग्यसिद्धिजननं सुरभीकरोतु॥ ॐ आँ क्रों ऱ्हीं ज्वालामालिनि महायक्षीदेवि जलं गृहाण २ ॥ १ ॥ आलेपनं सुरभिचंदनबंधुरैश्च । काश्मीरचंद्रमलयोद्भवादि-व्यगंधैः। श्रीज्वा० ॥ ॐ० ॥ गंधम् ॥ २ ॥ शाल्यक्षतैर्मसृणकुंकुमरंजितांतै- । र्दिव्यामयातिकलमौक्तिकजालपद्मैः ॥ श्रीज्वा० ॥ ॐ० ॥ अक्षतम् ॥ ३ ॥ मंदारकुंदकुवलोत्पलपाटलैश्च । पुन्नागचंपकसुगंधिलतांतमाल्यैः ॥ श्रीज्वा० ॥ ॐ० ॥ पुष्पम् ॥ ४ ॥ कैलासशैलधवलैः कलमाक्षतैश्च । सिद्धैर्वरैः कनकपात्रभृतैर्हविर्भिः ॥ श्रीज्वा० ॥ ॐ० ॥ चरुम् ॥ ५ ॥ अज्ञानसंतमसहारिनिजप्रकाशै- ॥ र्नीराजनांगविहितैर्घनमार्गदीपैः ॥ श्रीज्वा० ॥ ॐ० ॥ दीपं ॥ ६ ॥ आमोदिताखिलदिशैर्घननीलवर्णैः । कालागरूर्जितसुगंधिदशांगधूपैः ॥ श्रीज्वा० ॥ॐ०॥धूपम् ॥७॥ पुंड्रेक्षुकांडशुभभृत्कहसत्फलौघैः । संत्रामितंत्रमुकनागदलैः फलैश्च ॥ श्रीज्वा० ॥ ॐ० ॥

फलम् ॥ ८ ॥ वार्भिस्तु गंधकलमाक्षतपुष्पजाति- । नैवेद्यदीपवरधूपफलोत्तमार्घ्यैः ॥ श्रीज्वा० ॥ ॐ० ॥ अर्घ्यम् ॥ ९ ॥ तुभ्यं मया रचितमर्चनपूजनं च । दत्तं गृहाण कनकालुकनालमुक्तं ॥ आराधिताखिलजलं जगतां प्रशांत्यै । धर्मार्थकामफलदं च ममेष्टसिद्धैच ॥ शांतिधारां ॥ श्रीतीर्थ-कृतपरमभक्तिमुपाश्रितायाः पुष्पांजलिः क्रमसरोरुहयोर्विमुक्तः ॥ श्रीज्वालिनीरचितवज्रसुपंजराख्यं । सौभाग्यसिद्धिजननं सुरभीकरोतु ॥ पुष्पांजलिः ॥



## ॥ ज्वालिनीस्तोत्रम् ॥

श्रीमद्दैत्योरगेंद्रामरमकुटतटालीढपादारविंदे । मद्यन्मातंगकुंभस्थलदलनपटुश्रीमृगेंद्राधिरूढे ॥ ज्वाला-मालाकराले शशधरधवले पद्मपत्रायताक्षि । ज्वालामालिन्यभीक्ष्णं प्रहसितवदने रक्ष मां देवि नित्यं ॥ १ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः महाच्छेक्षणरुचिरुचिरांगांगदे देवि वं मं । हं सं तं पं बीजमंत्रैः कृतसकलजगत्क्षेमरक्षे विधाने ॥ क्षां क्षीं क्षूं क्षें समस्ते क्षितितलमहिते ज्वालिनि रौद्रमूर्ते। क्षैं क्षौं क्षौं क्षं क्षः क्षि बीजैर्विहिनदशादिशाबंधने रक्ष रक्ष ॥ ॥ हूंकारारावघोरभ्रुकुटिपुटहटद्रक्तकल्लो-लेक्षणाभि- । ज्वालाविक्षेपलक्षक्षपितनिजविपक्षोदयक्षूणरक्षे ॥ भास्वत्कांचीकलापे मणिमकुटहट-ज्ज्योतिषां चक्रवालैः— ॥ श्रंचच्चंडांशुमन्मंडलसमरजये पातु मां देवि नित्यं ॥ ३ ॥ ॐ ह्रीं कारो-पयुक्तं र र र र र र र रां ज्वालिनीसंप्रयुक्तं । ह्रीं क्लीं ब्लूं द्रां द्रीं सर्म्फं वियदमलकलापंचकोद्भासि

हूं हूं ॥ धूं धूं धूमांधकारिण्यखिलमिह जगन्मे विधेह्याशु वश्यं । वौषण्मंत्रं स्मरंतं प्रतिभयमथने ज्वालिनी मामव त्वं ॥ ४ ॥ ॐ ह्रीं क्रों सर्ववश्यं कुरु कुरु सरसंक्रामाणि तिष्ठ तिष्ठ । हूं हूं हूं रक्ष रक्ष प्रबलबलमहाभैरवारातिभीतेः॥ द्रां द्रीं द्रूं द्रावय द्रावय हन हन फट् फड् वषड् बंध बंध। स्वाहा मंत्रं पठंतं त्रिजगदभिनुते देवि मां रक्ष रक्ष ॥ ५ ॥ हं झं ऱ्व्वीं क्ष्वीं सहंसः कुवलय-कलिते भूरसि भूतदात्रि ॥ ऱ्व्वीं ऱ्व्वं ह्वः पक्षि हं हं हर हर हरहूं पाक्षिपः पक्षिकोपं ॥ वं झं हं सः परं झं सर सर सर सूं सः सुधाबीजमंवै-। मां ज्वालामालिनि स्थावरचरमविषसंहारिणि रक्ष रक्ष ॥ ६ ॥ हाहाकारोग्रनादैर्ज्वलदनलशिखाकल्पदीर्घद्विजिह्वै- । र्भीमास्यैस्तीव्रनेत्रैर्विषमविष-धरालंकृतैस्तीक्ष्णदंष्ट्रैः ॥ भूतैः प्रेतैः पिशाचैः स्फुटघटितरुषापादितोग्रोपसर्गाद् । दूरीकृत्य स्वधाम्ना घनकुचयुगले देवि मां रक्ष रक्ष ॥ ७ ॥ क्ष्मां क्ष्मं क्ष्मौं शाकिनीनां समुपनतभयध्वंसिनी नीरजास्ये। ग्लौं क्ष्मं ठं दिव्यजिह्वागतिमतिकुपितस्तंभिनि दिव्यदेहे ॥ फट् फट् सर्वापरोगग्रहमरणभयोच्चाटने घोररूपे । आं क्रों क्षीं मंत्रपूते मदगजगमने देवि मां पालय त्वं ॥ ८ ॥ इत्थं मंत्राक्षरोत्थं स्तवन-मनुपमं वन्हिदेव्याः प्रतीतं । विद्वेषोच्चाटनस्तंभनजनवशकृत् पापरोगापनोदि ॥ प्रोत्सर्पज्जंगमस्थावर-विषमविषध्वंसिनं स्वायुरारो- । ग्यैश्वर्यापादि नित्यं स्मरति पठति यः सोऽश्नुतेऽभीष्टसिद्धिं ॥ ९ ॥ इत्थं पंडितलक्ष्मिसेनरचितं श्रीज्वालिनीदेविका- । स्तोत्रं शांतिकरं भयापहरणं सौभाग्यसं-

पत्करं ॥ प्रातर्मन्त्रकसन्निवेशितकरो नित्यं पठेद्यः पुमान् । श्रीसौभाग्यमनोऽभिवांछितफलं प्राप्नो- 
त्यसौ लीलया ॥ ११ ॥

## ॥ ज्वालामालिनीमंगलारती ॥

जय मंगलं नित्यशुभमंगलं । जय जगज्जननि ज्वालिनिदेवि ते ॥ जय मंगलं नित्यशुभमंगलं ॥ पल्लव ॥ धवलांगि धवलमौक्तिकहारधारिणि । धवलभासुरकुंडलभासिनि ॥ धवलचामरधरस्त्री-जनविराजिनि । प्रविराजसच्छामयक्षराणि ॥ जय० ॥ १ ॥ पद्मपादे पद्मदलसमविलोचने । पद्मनाभे पद्मसौगंधिके ॥ पद्महस्ते पद्ममित्रसमकांतिके पद्मानने भासुरमूर्तिके ॥ जय० ॥ २ ॥ गजवैरिवाहने झषपाशधारिणि । कुजनमंहारिणि भव्यजननि ॥ वृजिनहरजिनबिंबमणिमकुटधा-रिणि । सुजनपोषिणि सुवांछितदायिनि ॥ जय० ॥ ३ ॥

## ॥ अथ पद्मावतीपूजा ॥

श्रीपार्श्वनाथजिननायकरत्नचूडा । पाशांकुशाभयफलांकितदोश्चतुष्टा ॥ पद्मारुणा त्रिनयना त्रिफणा-वतंसा । पद्मावती जयतु पद्मकुटाधिवासा ॥ १ ॥ ॐ आं क्रों ह्रीं प्रशस्तवर्णे सर्वलक्षणसंपूर्णे स्वायुधवाहनचिन्हसपरिवारे हे पद्मावतीदेवि अत्र एहि २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

भृंगारेण मनोहरेण विलसद्गंगादितीर्थोदकैः । शीतैः स्वर्णहिमांबुपूर्णरचनैः श्रीखंडसंमिश्रितैः ॥ श्रीमत्पंबुजपद्मने प्रविलसाग्निर्गुडिकावासिनी । वांछच्छ्रीजिनदत्तरायवरदे मां पाहि पद्मावति ॥ ॐ आं क्रों ह्रीं पद्मावतीदेवि जलं गृहाण २ ॥ १ ॥ काश्मीरागरुशीतभानुकलितैः सच्चंदनैर्बंधुरै- । र्गंधाढ्यैर्भ्रमरौघरागरचितैः श्रीखंडसंमिश्रितैः ॥ श्रीम० ॥ ॐ ॥ गंधं ॥ कुंदेंदुप्रवरप्रचूर्णनिकरैः शाल्यक्षतैरक्षतै- । र्मुक्तैर्भुक्तिसुधांशुकांतिसदृशैर्मंजुष्करैः पुंजकैः ॥ श्रीम० ॥ ॐ० ॥ अक्षतं ॥ ३ ॥ पुष्पैः सत्कुसुमैः प्रसूनरचितैः प्रौढीमनोहारिभि- । र्भृंगीमंगलगीतबंधुरतरैर्जात्यादि- पुष्पैर्वरैः ॥ श्रीम० ॥ ॐ० पुष्पं ॥ ४ ॥ नैवेद्यैर्वरपद्मरागरचितश्रीहेमपात्रस्थितै- । र्नानाव्यंज- नरंजनैः सितघृतैरित्यादिभक्ष्यैर्वरैः ॥ श्रीम० ॥ ॐ० ॥ चरुं ॥ ५ ॥ कर्पूरोज्वलरत्नज्योतिनिकरैः श्रीदीपकैः संपदै- । र्मोहध्वांतविनाशनैर्दिनकरैरेवोज्वलैर्वेष्टितैः ॥ श्रीम० ॥ ॐ ॥ दीपं ॥ ६ ॥ भक्त्या चागरुगलरागविलसद्घ्राणेन राजास्मितं । तातानेऽमलसौरभेण विलसद्धूपैर्दशांगादिभिः ॥ श्रीम० ॥ ॐ० ॥ धूपं ॥ ७ ॥ चोचैर्मोचकपित्थकैर्वररसैर्द्राक्षाफलैर्जंबिरै- । र्नारंगैर्वरदाडि- मादिकदलीपूगाम्रखर्जूरकैः ॥ श्रीम० ॥ ॐ० ॥ फलं ॥ ८ ॥ अर्घ्येण क्रमवर्त्तिसद्भुवतरैः सद्द्र- व्यमालावरै- । र्युक्तैर्भक्तिसमादितंडुलचयैः सिद्धार्थदूर्वावरैः ॥ श्रीम० ॥ ॐ० अर्घ्यं ॥ शांति- धारां । पुष्पांजलिः ॥

## ॥ पद्मावतीस्तोत्रम् ॥



श्रीमद्गीर्वाणचक्रस्फुरितितिमिरकोद्घृष्टपादारविंदे । सद्धर्मत्राणदक्षे प्रबलभुजबलोज्झंभणोत्क्रांतवक्त्रे॥ व्याघ्रारूढे सहस्रज्वलदनलशिखे लोलपाशांकुशाढ्ये । आं क्रों ऱ्हीं मंत्ररूपे क्षुभितकालिमले रक्ष मां देवि पद्मे ॥ १ ॥ स्थित्वा पातालमूले स्वकबलकलिते लीललोलाकराले । विद्युद्दंडे प्रचंडे प्रहरणकलिते तद्भुजे तर्जयंती ॥ दैत्येंद्रक्रूरदंष्ट्रे खिलि खिलि खिलितैः स्पष्टभीमाट्टहासे । माया-जीमूतवाहे कुहरतिगमने रक्ष० ॥ २ ॥ क्रौंन्नत्कोदंडखांडे डमरुगविदितक्रूरघोरोपसर्गे । दिव्यं वज्रातपत्रं प्रगुणमणिगणं किंकिणिक्वाणरम्यं ॥ भास्वद्वैडूर्यदंडं मदनविजयिनो बिभ्रती पार्श्वभर्तुः। स्याद्देवि पद्महस्ते कृतकरकमले रक्ष० ॥ ३ ॥ भृंगीकाळीकराळीपरिजनसहिते चंडि चामुंडि नित्ये । क्ष्मां क्ष्मीं क्ष्मूं क्ष्मौं क्ष्मः क्षणाद्रक्षत रिपुनिहिते ऱ्हीं महामंत्रवश्ये ॥ भ्रां भ्रीं भ्रूं भ्रौं भ्रः भृकुटि-चलमुखे त्रासितोद्दामदैत्ये । झ्रां झ्रीं झ्रूं झ्रौं झ्रः स्तुतिशतमहिते रक्ष० ॥ ४ ॥ चंचत्कांचीकलापे स्तनतटिविशदोद्दामहाकोमलीके । प्रोत्फुल्लपारिजातद्रुमकुसुममहामजंरीपुंजपादे ॥ द्रां द्रीं क्लीं ब्लूं समेते भुवनवशकरि क्षोभिणि द्राविणे ते । आं ईं ऊं औं अः कुरु कुरु कलिते रक्ष० ॥ ५ ॥ नीलाव्यालोत्पलादादलितदलिते तज्ज्वलद्वाडवाग्नि- । ज्वालाज्वालास्फुलिंगे स्फुरदुरुकिरणेऽत्यु-ग्रवज्राग्रहस्ते ॥ ॐ ऱ्हां ऱ्हीं ऱ्हूं ऱ्हौं ऱ्हः हर हर हूंकारभीमैकनादे । पद्मे पद्मासनस्थे कृत-

करकमले रक्ष० ॥ ६ ॥ कोपं वं झं ह्स्वीं क्ष्वीं हं सः कुवलयकलिते वानलीलाप्रबंधे । ह्रां ह्रीं ह्रः ह्रीं ह्रः पवित्रेतरशिशिरकरे पक्षिपक्षीरघोरे ॥ प्रत्नव्यावज्रजातं प्रबलबलमहाकालकूटं वदंति । हा हा हूंकारनादे वरकरकमले रक्ष मां० ॥ ७ ॥ प्रातर्बालार्करश्मिस्फुरिततरमहासांद्रसिंदूरधूली- संध्यारागारुणानां त्रिदशवरमहादेवि देवेंद्रवंद्ये ॥ चंचच्चंडांशुधाराप्रहरति कुटिले कुंतलोद्घृष्टगंडे । स्रां स्रीं स्रूं स्रौं स्रः मदगजगमने रक्ष० ॥ ८ ॥ दिव्यं स्तोत्रं नमस्ते पटुतरपटुना भक्तिपूर्वं त्रिसंध्यं । लक्ष्मीसौभाग्यमानं दलितकलिमलं मंगलानां सुपूर्वं ॥ पूज्यं कल्याणमानं जनयति सततं पार्श्वनाथप्रसादात् । देवी पद्मासनस्थे कृतकरकमले रक्ष० ॥ ९

## ॥ पद्मावतीमंगलारति ॥

जय मंगलं जयतु शुभमंगलं । जय नागपतियुवति पद्मांबिके ॥ जय मंगलं जयतु शुभमंगलं ॥ पल्लव ॥ मणिमकुटरत्नकुंडलहारराजिते । मणिखचितकेयूरकरभूषिते ॥ मणिहेमनिर्मितसुविष्टरा- धिष्ठिने ॥ फणिफणाटोपावतंसलसिते ॥ जय० ॥ १ ॥ वरदफलपाशांकुशकरविराजिनि । वरदिव्यवसन- भूषणशोभिनि ॥ सरसमृदुमधुरतरगंभीरवरवाणि । वरकमलमृदुलसममृदुलपादपाणे ॥ जय० ॥ २ ॥ मत्तगजगामिनि वृत्तकुचमंडने । चित्तजस्त्रीविजयरूपधरणे ॥ धत्तजिनशासने भक्तजनरक्षिणि । सत्तमे भयहरणे वरदायिनि ॥ जय० ॥ ३ ॥

## ॥ क्षेत्रपालमंगलारती ॥

जय मंगलं सदा शुभमंगलं । जय क्षेत्रपाल सद्गुणशील ते ॥ जय मंगलं सदा शुभमंगलं ॥ जितसुमनशररूप नागपल्लव ॥ धृतरत्नमयमकुटरत्नकुंडलहार । धृतशूलखड्गकरवालकर ते ॥ जितसुमनशररूप नाग- पल्लव ॥ गजवैरिपोतसमसारमेयारूढ । भुजकिरी- संभवत्रर्ण । जितचंडकरतेज वरधीर ते ॥ जय० ॥ १ ॥ गजवैरिपोतसमसारमेयारूढ । भुजकिरीटादिभूषणभूष ते ॥ ॥ राजेंद्रचंद्रपूजितचरणकमलयुग । द्विजसूत्रधर हितकरभाष ते ॥ जय० ॥२॥ चिंतार्थदायकसुचिंतामणिरत्न । सतत- व्यंतरामरवंद्य कृतसज्जनामोद । भूतपैशाचभयदूरकर ते ॥ चिंतार्थदायकसुचिंतामणिरत्न । सततजिनगेहरक्षणकार ते ॥ जय० ॥ ३ ॥

## ॥ अथ भट्टारकपूजा ॥

श्रीमद्भव्यनिकायपद्मनिकरबोधार्कसन्मंडलाः । श्रीस्याद्वादसुकोविदाः सुमनसश्चारित्रमालांकिताः ॥ मिथ्यावादिगजेंद्रसिंहसदृशाः सेनान्वये मौन ये । तेषां श्रीचरणाब्जपूजनविधौ ख्यातोत्सवं प्रारभे ॥ १ ॥ ॐ ह्रीं श्रीगुरुचरणाय पुष्पाक्षतं क्षिपेत् ॥ श्रीपादाब्जयुगं सुतीर्थसलिलैः शीतैश्च सुस्वादिभि- । राचार्यस्य महात्मनो गुणनिधेः श्रीमूलसंघेशिनः ॥ सुप्रक्षाल्य शुभैर्महत्त्वसहितै- र्गंधांबुसत्तंदुलै- । राह्वानादिविधिं करोमि महसा भक्त्याऽद्य भव्यात्मना ॥ २ ॥ श्रीमूलसंघाब्धि- सुचारुचंद्रान् । आचार्यवर्यान् गुणरत्नयुक्तान् ॥ भक्त्याऽऽह्वयाम्यत्र सुवर्णपीते । संस्थापयामिह यतींद्रवंद्यान् ॥ ३ ॥ ॐ ह्रीं हे आचार्यवर्य अत्र एहि २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २

ठ ठ स्वाहा । ॐ० अत्र मम सान्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ गंगानदीतीर्थसुपुण्यतोयैः कर्पूरकाश्मीरसुगंधयुक्तैः । सेनांतजिनपूर्वसमंतभद्रश्रीवीरसेनांघ्रियुगं यजेऽहं ॥ ॐ ऱ्हीं * श्रीजिनसेनभट्टारकवरेण्याय जलं निर्वपामि स्वाहा ॥ १ ॥ काश्मीरमिश्रैश्च सुचारुवर्णैः । सुवर्णपात्रार्पितदिव्यगंधैः ॥ सेनांत० ॥ ॐ० ॥ गंधं ॥ २ ॥ शुभ्रैः सदभ्रैर्वरदीर्घकैश्च सामोदशालीयसतंडुलैश्च ॥ सेनांत० ॐ० ॥ अक्षतं ॥ ३ ॥ सन्मल्लिकाचंपकजातिकुंदैः सत्केतकीपद्मलवंगयुक्तैः ॥ सेनांत० ॥ ॐ० ॥ पुष्पं ॥ ४ ॥ हय्यंगवीनाज्यविचित्रभक्ष्यैर्बाष्पायमाणैश्च सुपायसैश्च ॥ सेनांत० ॥ ॐ० ॥ चरुं ॥ ५ ॥ डिंडीरपिंडोज्वलभासमानैरामोदकर्पूरसुरत्नदीपैः ॥ सेनांत० ॥ ॐ० ॥ दीपं ॥ ६ ॥ निश्वासितास्वामसुवासधूपैः कर्कोरकालागुरुशिल्पधूपैः ॥ सेनांत० ॥ ॐ० ॥ धूपं ॥ ७ ॥ जंबीरजंबूपनसाम्रपूगसुमातुलुंगैर्वरनाळिकेरैः ॥ सेनांत० ॥ ॐ० ॥ फलं ॥ ८ ॥ वार्गंधमत्तंडुलपुष्पभक्ष्यैर्दीपैश्च धूपैर्वरनाळिकेरैः ॥ सद्यज्ञभागादिमहार्घ्यपूरैराचार्यपादौ सममर्चयामि ॥ अर्घ्यं ॥ ९ ॥ गंगादितीर्थोद्भववारिधारां सुवर्णभृंगारसुनालकोदृधां । श्रीजैनसस्यालिफलाभिवृद्ध्यै श्रीशांतिधारां प्रकरोमि शांत्यै ॥ शांतिधारां ॥१०॥ श्रीमत्सेनगणाधिचंद्रमुनयः सामंतभद्रादय- । स्तेषां पादसुपूजिनो हि जगतां धान्यैर्धनैः सूरिभिः ॥

* जिनसेन-या स्थळीं, पंचमलोकांनीं-लक्ष्मीसेन असें म्हणावें. तसेच इतर जितके जिनमतानुयायी जैनधर्मास अनुसरून चालणारे आहेत, त्यांनीं आपापल्या गुरूचें नांव घेणें.

कुंदेंदीवरमालतीदुबकुलसत्केतकीसत्फलै । र्वासंतीवरचंपकैश्च रचितं पुष्पोपहारं भजेत् ॥ ११ ॥ पुष्पांजलिः ॥ श्रीकोल्हापुरमंडलस्थितिगणर्मिहाम्नाधीश्वरा । विद्यावेदसुतर्कशास्त्रनिपुणाः सेने गणेऽधीशिनः ॥ तेभ्यः श्रीवृषभादिमेनगणिनां विज्ञेय भूतिश्रियं । ख्यातश्रीजिनसेनवर्यगणिनां पुष्पोपहारं भजेत् ॥ पुष्पांजलिः ॥ १२ ॥



## ॥ भट्टारकमंगलारती ॥

जय मंगलं भवतु शुभमंगलं । जय शीलगुणधीर *जिनसेन ते ॥ जय मंगलं भवतु शुभमंगलं । पल्लव ॥ दिल्लिकोल्हापूरजिनकंचिपिनगोंडि- । सल्लक्ष्मसिंहासनाधीश ते ॥ उल्लसच्छ्रीमूलसंघपुष्कर-गच्छ । फुल्लशगविजय परयोगीश ते ॥ जय० ॥ १ ॥ तर्कव्याकरणादिसकलशास्त्राधीत । कर्कशक्षपणवाग्जालधर ते ॥ अर्कस्तंभनसकलमंत्रतंत्रज्ञवर । कर्कशविगगताधरधीर ते ॥ जय० ॥२॥ त्रैकाल्यजपतपानुष्ठानचरणपर । सकलसज्जनसदुपदेशपर ते ॥ अकलंकचरितजनहृत्कुमुदशीतकर । विकटखलवादिभूधरभिदुर ते ॥ जय० ॥ ३ ॥ त्रसस्थावरजीवरक्षणविचक्षणक । रसिकजनप्रीतिकर मुनिराज ते ॥ असमगंभीर महामंदगचलधैर्य । लसद्घाटकपिच्छ गुरुराज ते ॥ जय० ॥४॥ रत्नमणिहेमादिरचिताशिबिकारूढ । रत्नत्रयालंकृतरूप ते ॥ नूत्नमौक्तिकजाललसितछत्रच्छाय । प्रत्नमहामंत्रसंजपितजप ते ॥ जय० ॥ ५ ॥

---

* जिनसेन–यास्थळीं–ग्रासेन–ह्मणजे (लक्ष्मीसेन) ह्मणणें.

## ॥ ॐ नमः सिद्धेभ्यः ॥

श्रीवीतरागाय नमः ॥ श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ॥ श्रीमदाशाधरकृतपूजांगम् ॥ अथ अधिवासनम[1] ॥ जिनान् नमस्कृत्य जिनप्रतिष्ठाशास्त्रोपदेशाद्व्यवहारदृष्ट्या । श्रीमूलसंघे विधिवत्प्रबुद्धान् भव्यान् प्रवक्ष्ये जिनयज्ञकल्पं ॥ १ ॥ ॐ ह्रीं विधियज्ञप्रतिज्ञापनाय जिनप्रतिमोपरि पुष्पांजलिं क्षिपेत् ॥ (या मंत्रानें जिनप्रतिमेवर पुष्पांजलि[2] करणें) श्रीवीतरागममृतेशमनंतबोधं ब्रह्मादिदेवनुतपादसरोजयुग्मं । भक्त्या प्रणम्य जिनराजमहं समासाद्वक्ष्ये जिनेंद्रसवनं तनुधीसमेतः ॥ २ ॥ रागादिदोपरहितं सुरराजवंद्यं नत्वा जिनेशमखिलामलयोगिसेव्यं । पुष्पांजलिं जिनमखे वरमुत्क्षिपामि श्रीमूलसंघवरभव्यजगत्प्रशांत्यै ॥ ३ ॥ इति प्रस्तावनाय[3] पुष्पांजलिः ॥

---

१ अधिवस्यैव कलशं पूजनं परमेष्ठिनां । स्नपनं वा ततः पूर्वकर्मस्यादधिवासनं ॥ १ ॥ २ दोन्हीं हातानी ओंजळ करून फुलें टाकणें, याला पुष्पांजलि ह्मणतात. ३ प्रस्तावना, पुराकर्म, स्थापन, सन्निधापन, स्नपन आणि पूजन अशी ६ प्रकारची जिनसेवा आहे. १ ॐकार शब्दोच्चारपूर्वक पुष्पांजलि करणे, याला प्रस्तावनसेवा ह्मणतात. २ पंचकुमारादि षोडशाभरणपर्यंत विधि करणे, याला पुराकर्म सेवा ह्मणतात. ३ कलशस्थापनादि श्रीजिनप्रतिमास्थापनपर्यंत विधि करणे, याला स्थापनसेवा ह्मणतात. ४ आह्वाहनादि अष्टद्रव्यार्चनापर्यंत विधि करणे, याला सन्निधापनसेवा ह्मणतात. ५ दिक्पालाव्हाहनादि गंधोदकाभिषेकपर्यंत विधि करणे, याला स्नपनसेवा ह्मणतात. ६ देव गुरुशास्त्रादि यक्षयक्षीपर्यंत पूजाविधि करणे, याला पूजनसेवा ह्मणतात. पीठयंत्रादिकांनी मोठमोठे विधान करणे यालाही पूजनसेवा असे ह्मटले आहे. याप्रमाणे जिनसेवा ६ प्रकारची आहे.

मंगलं भगवानर्हन्मंगलं भगवान् जिनः। मंगलं प्रथमाचार्यो मंगलं वृषभेश्वरः ॥ ४ ॥ मंगलं प्रथमं लोकेषूत्तमं शरणं जिनं। नत्वायमर्हतः पूजात्र मः स्याद्विधिपूर्वकं ॥५॥ विज्ञानं विमलं यस्य भासते विश्वगोचरं। नमस्तस्मै जिनेंद्राय सुरेंद्राभ्यर्चितांघ्रये ॥ ६ ॥ ॐ जय जय नमोऽस्तु नमोऽस्तु नमोऽस्तु ॥ ॐ णमो अरहंताणं। णमो सिद्धाणं। णमो आइरियाणं। णमो उवज्झायाणं। णमो लोए सव्वसाहूणं ॥ श्रीमज्जिनेंद्रकथिताय सुमंगलाय। लोकोत्तमाय शरणाय विनेयजंतोः ॥ धर्माय कायवचनाशयशुद्धितोऽहं। स्वर्गापवर्गफलदाय नमस्करोमि ॥ देवेंद्रवंद्यमभिवंद्य विशोध्य हस्तावीर्यापथस्य परिशुद्धिविधिं विधाय। सद्वज्रपंजरगतकृतसिद्धभक्त्या देवं समर्च्य सकलीकरणं करोमि ॥ ८ ॥ ॐ ह्रीं असुजर सुजर भव भव हस्तशुद्धिं करोमि स्वाहा। हस्तप्रक्षालनं ॥ (या मंत्रानें आपल्या दोन्ही हातास पाणी लावून घेणें) अपवित्रः पवित्रो वा सुस्थितो दुस्थितोऽपि वा। ध्यायेत्पंचनमस्कारं सर्वपापैः प्रमुच्यते ॥ ९ ॥ अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा। यः स्मरेत्परमात्मानं स बाह्याभ्यंतरे शुचिः ॥ १० ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा मम सर्वांगशुद्धिं करोमि स्वाहा। सर्वांगशोधनम् ॥ (या मत्रानें आपल्या दोन्ही हातांनीं अंगावर पाणी शिंपून घेणें) ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्रावय सं सं क्लीं क्लीं ब्लूं ब्लूं द्रां द्रां द्रीं द्रीं द्रावय द्रावय हं झं क्ष्वीं क्ष्वीं हं

सः स्वाहा । इत्यमृतस्नानमंत्रः । ( या मंत्रानें आपल्या दोन्ही हातांच्या अंगठ्याजवळ असलेल्या तर्जनी बोटांनीं डोक्यावर पाणी घेणें. ) अणुव्रतपंचकं गुणव्रतत्रयं शिक्षाव्रतचतुष्टयं अर्हत्सिद्धाचार्योपाध्यायसर्वसाधून् साक्षी कृत्य । सम्यक्त्वपूर्वकं सुव्रतं दृढतरं समारूढं मे भवतु मे भवतु ( या मंत्रानें अणुव्रतादि * १२ व्रतें स्वीकारणें ) अद्याभवत्सफलता नयनद्वयस्य देव त्वदीयचरणांबुजवीक्षणेन । अद्य त्रिलोकतिलक प्रतिभासते मे संसारवारिधिरयं चुलकप्रमाणं ॥ ११ ॥ अद्य मे क्षालितं गात्रं नेत्रे च विमले कृते । स्नातोऽहं धर्मतीर्थेषु जिनेंद्र तव दर्शनात् ॥ १२ ॥ अपराजितमंत्रोऽयं सर्वविघ्नविनाशनः । मंगलेषु च सर्वेषु प्रथमं भवति मंगलं ॥ १३ ॥ एस पंच णमोकारो सव्वपावप्पणासणो। मंगळाणं तु सव्वेसिं पढमं होइ मंगळं ॥ १४ ॥ ॐ चत्तारिमंगळं अरहंता मंगळं । सिद्धा मंगळ । साहू मंगळं । केवळिपंणंतो धम्मो मंगळं ॥ चत्तारि लोगुत्तमा । अरहंता लोगुत्तमा । सिद्धा लोगुत्तमा । साहू लोगुत्तमा । केवळिपण्णंतो धम्मो लोगुत्तमा ॥

---

* हिंसा, असत्य, चोरी, काम आणि परिग्रह ह्या ५ पातकांचा त्याग करणें, याला अणुव्रत ह्मणतात । दिग्व्रत अनर्थदंड आणि भोगोपभोगपरिमाण हीं ३ गुणव्रतें होत । देशावकाशिक सामायिक प्रोषधोपवास आणि वैयावृत्य हीं ४ शिक्षाव्रतें होत । अशीं अणुव्रते ५ गुणव्रतें ३ शिक्षाव्रतें ४ मिळून व्रतें १२ । या व्रतांची विशेष माहिती रत्नकरंड श्रावकाचारांत पहा ॥

चत्तारि सरणं पव्वज्जामि । अरहंते सरणं पव्वज्जामि । सिद्धे सरणं पव्वज्जामि । साहू सरणं पव्वज्जामि । केवलिपण्णत्तं धम्मं सरणं पव्वज्जामि ॥ ॐ नमोऽर्हते स्वाहा ॥ (येथें दोन्ही हात जोडून जिनप्रतिमेस नमस्कार करणें) अर्हमित्यक्षरं ब्रह्मवाचकं परमेष्ठिनां । सिद्धचक्रस्य सद्बीजं सर्वतः प्रणिदध्महे ॥ आकृष्टिं सुरसंपदां विदधती मुक्तिश्रियो वश्यतामुच्चाटं विपदां चतुर्गति भुवां विद्वेषमात्मैनसां । स्तंभं दुर्गमनं प्रति प्रयततो मोहस्य संमोहनं पायात्पंचनमस्क्रियाक्षरमयी साऽऽराधना देवता ॥ १६ ॥ इत्याशीर्वादः ॥ (येथें हातांत थोडे तांदूळ घेऊन टाकणें) श्रीमज्जिनेंद्रमभिवंद्य जगत्त्रयेशं स्याद्वादनायकमनंतचतुष्टयार्हं । श्रीमूलसंघसुदृशां सुकृतैकहेतुर्जैनेंद्रयज्ञविधिरेष मयाऽभ्यधायि ॥ १७ ॥ स्वस्ति त्रिलोकगुरवे जिनपुंगवाय । स्वस्ति स्वभावमहिमोदयसुस्थिताय ॥ स्वस्ति प्रकाशसहजोर्जितदृङ्मयाय । स्वस्ति प्रसन्नललिताद्भुतवैभवाय ॥ १८ ॥ स्वस्ति उच्छलद्विमलबोधसुधाप्लवाय । स्वस्ति स्वभावपरभावविभासकाय ॥ स्वस्ति त्रिलोकविततैकचिदुद्गमाय । स्वस्ति त्रिकालसकलायतविस्तृताय ॥ १९ ॥ अर्हन् पुराणपुरुषोत्तम पावनानि । वस्तून्यनूनमखिलान्ययमेक एव ॥ अस्मिन् ज्वलद्विमलकेवलबोधवन्हौ ॥ पुण्यं समग्रमहमेकमना जुहोमि ॥ २० ॥ द्रव्यस्य शुद्धिमधिगम्य यथानुरूपं ॥ भावस्य शुद्धिमधिकामधिगंतुकामः ॥ आलंबनानि विविधान्यवलंब्य वल्गन । भूतार्थयज्ञपुरुषस्य करोमि यज्ञं ॥ २१ ॥ ॐ ह्रीं

विधियज्ञप्रतिज्ञापनाय जिनप्रतिमोपरि पुष्पांजलिं क्षिपेत् ॥ चिद्रूपं विश्वरूपं व्यतिकलितमनाद्यं-तमानंदसांद्रं ॥ यत्प्राप्तैस्तैर्विवृत्तैर्व्यहरदधिपतंदुःखमौख्याभिमानैः ॥ कर्मोद्रेकात्तदात्मप्रत्ययमलभिदोद्भिन्ननिःसीमतेजः । प्रत्यासीदत्परौजः स्फुरदिह परमब्रह्मयज्ञार्हमर्हं ॥ २२ ॥ ॐ ह्रीं नमः परमब्रह्मणे विधियज्ञप्रतिज्ञापनाय प्रतिमोपरि पुष्पांजलिं क्षिपेत् ॥ स्वामिन् संवौषट्कृताह्वाहनस्य द्विष्ठांतेनोट्टंकितस्थापनस्य । स्वाहानिर्विष्टे वषट्कारजाग्रे सान्निध्यस्य प्रारभे ह्यष्टधेष्टिं ॥ २३ ॥ मलयरुहलसिततंडुलपुष्पैरधिवासनं जिनेंद्रस्य । संवौषट् ठठ वषडिति पल्लवमंत्रैस्त्रिकरणैः कुर्वे ॥२४॥

---

१ जल, गंध, अक्षत, पुष्प, चरु, दीप, धूप व फळ अशी आठ प्रकारची मुख्य जिनपूजा आहे। यांत अर्घ्य शांतिधारा व पुष्पांजलि ह्या ३ पूजा मिळविल्या ह्मणजे हीच जिनपूजा ११ प्रकारची होते। आतां जलपूजा झारीनें किंवा इतर पात्रानें पाण्याची धार सोडून करणें। गंध अक्षत पुष्प ह्या ३ पूजा हातानें किंवा पात्रानें करणें। चरुपूजा सुवर्णपात्रानें करणें। दीपपूजा दीपपात्रानें करणें। धूपपूजा धूपपात्रानें करणें। फलपूजा हातानें किंवा पात्रानें करणें। अर्घ्यपूजा पात्रानेंच करणें। शांतिधारापूजा झारीनें किंवा इतर पात्रानें पाण्याची धार सोडून करणें। व तसेच पुष्पांजलि-पूजा हातानेंच करणें॥ १ आह्वाहन, स्थापन, सन्निधीकरण, विनय व नमस्कार अशा ५ मुद्रा आहेत। दोन्ही हाताच्या करंगळीजवळ असलेल्या अनामिक बोटावर अंगठे ठेवून ओंजळ करून धरणें, याला आह्वानमुद्रा ह्मणतात। तीच मुद्रा उलट करून धरणें, याला स्थापनमुद्रा ह्मणतात। अंगठे वर करून धरलेल्या दोन्ही मुठी जुळवून धरणे, याला सन्निधीकरण-मुद्रा ह्मणतात। कमळाच्या कळीप्रमाणे हात जोडून धरणें, याला विनयमुद्रा ह्मणतात। दोन्ही हातांचे तळवटे एकमेकांस

## ॥ अथ आह्वाहनादिपुरःसरपूजां कुर्यात् ॥

श्रीमत्कुंडपुराधिनाथविलसत्सिद्धार्थभूवल्लभप्रमादप्रियकारिणीप्रियसुतः संप्रार्च्यते सन्मतिः । पंचास्योन्नतकेतनः कनकरुग्मातंगसिद्धायिनीमाणिक्याभरणाभिरंजितपदप्रोत्फुल्लपंकेरुहः ॥ २५ ॥ आह्वयाम्यहमर्हंतं स्थापयामि जिनेश्वरं । सन्निधीकरणं कुर्वे पंचमुद्रान्वितं महे ॥ २६ ॥ ॐ ह्रीं अर्हत्परमेष्ठिन् अत्र एहि एहि संवौषट् स्वाहा आह्वानं । ॐ ह्रीं अर्हत्परमेष्ठिन् अत्र तिष्ठ तिष्ठ ठठ स्वाहा स्थापनं । ॐ ह्रीं अर्हत्परमेष्ठिन् अत्र मम सन्निहितो भव भव वषट् स्वाहा सन्निधीकरणं ॥

## ॥ अथ अष्टकम् ॥

द्युगंगादिजैर्वारिपूरैः पवित्रैः सुधासूपमैश्चंद्रद्रव्यादिमिश्रैः । बुधाः पूजयेऽहं सदा वीरनाथं कलौ कल्मषकृत्तकं पूज्यपादं ॥ ॐ ह्रीं अर्हत्परमेष्ठिने जलं निर्वपामि स्वाहा ॥ १ ॥ सुगमोदश्रीखंडजातैः सुगंधैर्द्रवैर्भृतसौरभ्यकाश्मीरयुक्तैः । बुधाः पूज० ॥ ॐ ह्रीं अर्हत्प० ॥ गंधं ॥ २ ॥ सितैर्गौरजैरक्षतैरक्षतौघैर्ज्वलत्कीलजालैर्निधीनप्रकाशैः । बुधाः पूज० ॥ ॐ ह्रीं अर्हत्प० ॥ अक्षतान् ॥ ३ ॥ जपाजातिमंदारकुंदादिपुष्पैरणद्गंधलुब्धालिमालाव्रकर्षैः । बुधाः पूज० ॥ ॐ ह्रीं अर्ह० ॥ पुष्पं ॥ ४ ॥ महामंडकैर्मोदकैः शालिभक्ष्यैः सिताहव्यपाकैः स्फुरद्भाजनस्थैः । बुधाः

---

विकटावून हात जोडणें व दोन्ही अगटे जुळवून कपाळास लावून नमस्कार करणें, याला नमस्कार मुद्रा म्हणतात ॥ या ५ मुद्रेनें देव, गुरु, शास्त्र, यक्ष, यांचें आह्वाहन करीत जाणें ॥

पूज० ॥ ॐ ऱ्हीं अर्हत्प० चरुं ॥ ५ ॥ ज्वलत्कीलजालैर्घृतादिप्ररोहैर्महामोहध्वांताहतैः सत्प्रमोदैः। बुधाः पूज० ॥ ॐ ऱ्हीं अर्हत्प० ॥ दीपं ॥ ६ ॥ लसद्धूपधूम्रैः सुगंधूपितौघैर्महाकर्मकाष्ठप्रदाहप्रधूपैः। बुधाः पुजयेऽहं सदा वीरनाथं कलौ कल्मषकृत्तकं पूज्यपादं ॥ ॐ ऱ्हीं अर्हत्परमेष्ठिने धूपं निर्वपामि स्वाहा ॥ ७ ॥ मनोनेत्रहारैः सुपक्वाम्रपूगैः कदंमोचचोचादि नाना फलौघैः। बुधाः पूज० ॥ ॐ ऱ्हीं अर्ह० ॥ फलं ॥ ८ ॥ पानीयगंधाक्षतचारुपुष्पैर्नैवेद्यसद्दीपसुधूपवर्गैः । फलैर्महार्घ्यं वरवर्धमानमुत्तारयध्वं खलु शिष्टसिध्यै ॥ ॐ ऱ्हीं अर्ह० ॥ अर्घ्यं ॥ ९ ॥ ततो जिनेंद्रपादांते वारिधारां निपातये। भृंगारनालिकोद्भांतां विनमल्लोकशांतये ॥ शांतिधारां। पुष्पांजलिः ॥१०॥

---

१ आतां दीपपूजेची विशेष माहिती अशी आहे कीं, मूळनायक प्रतिमेस दीपपूजा करणे झाल्यास अगोदर प्रतिमेच्या पायापासून गुडघ्यापर्यंत उचलून क्षणभर धरून आडवे तीनदां ओंवाळणें। नंतर तेथून पोटापर्यंत उचलून क्षणभर धरून पूर्ववत् ओंवाळणें। त्यानतर तेथून गळ्यापर्यंत उचलून क्षणभर धरून पूर्ववतच ओंवाळणें । त्यानंतर पुनः पायापासून गळ्यापर्यंत तीनदां ओंवाळून हळूच खालीं उतरून प्रतिमेपुढें ठेवणे। याचप्रमाणे धूप व अर्घ्य पूजा करणे । याहून इतर गंध, अक्षत, पुष्प, चरु व फल ह्या पूजा साधारणपणें तीनदां ओंवाळून करणे । मूलनायक प्रतिमाशिवाय इतर प्रतिमांना गंध अक्षतादि अर्घ्यपर्यंत पूजा करणें झाल्यास साधारणपणें तीनदां ओंवाळून करणें । व यक्षयक्षींना दोनदां व भूमीस आणि कलशास एकदां ओंवाळून करणें। हा क्रम वाचकांनीं चांगला लक्षांत ठेवावा ॥

## ॥ अथ जयमाला ॥

चंद्रार्ककोटिसंकाशं कंदर्पाग्निशरं चिरं । कनत्कांचनसद्वर्णं भजेऽहं वृषवर्धनं ॥ सन्मतिजिनपं सरसिजवदनं संजनिताखिलकल्मषमथनं । पद्मसरोवरमध्यगतेंद्रं पावापुरमहावीरजिनेंद्रं ॥ २ ॥ वीरभवोदधिपारोत्तारं मुक्तिश्रीवधूनगरविहारं । पद्म० ॥ ३ ॥ द्विर्द्वादशकं तीर्थपवित्रं जन्माभिषवकृतनिर्मलगात्रं । पद्म० ॥ ४ ॥ वर्धमाननामाख्यविशालं मानप्रमाणलक्षणदशतालं । पद्म० ॥५॥ शत्रुविमथनविकटभटवीरं विश्वैश्वर्यदुग्तिकृतदूरं । पद्म० ॥ ६ ॥ कुंडलपुरसिद्धार्थभूपालस्तत्पत्नीप्रियकारिणिबालं । पद्म० ॥ ७॥ तत्कुलनलिनविकासिनहंसं घातिपुरोघातकविध्वंसं । पद्म० ॥ ८ ॥ ज्ञानदिवाकरलोकालोकं निर्जितकर्मारातिविशोकं । पद्म० ॥ ९ ॥ बालत्वे संयमपालीतं मोहमहानलमथनविनीतं । पद्म० ॥ घत्ता ॥ सर्वसाम्राज्यसंत्याज्यकृतं तं श्रीमहान्वयं । खंडितं कर्मवैरीणां लब्धश्रीसंगमं परं ॥ अर्घ्यं ॥ ११ ॥

## ॥ अथ पंचमेरुपूजा ॥

आदिः सुदर्शनो मेरुर्विजयोप्यचलस्ततः । चतुर्थो मंदरो नाम विद्युन्माली च पंचमः ॥१॥ ॐ ह्रीं पंचमेरुस्थितशाश्वतजिनबिंबा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ ह्रीं पंचमे० अत्र तिष्ठत तिष्ठत ठ ठ स्वाहा । ॐ ह्रीं पंचमे० अत्र मम सन्निहिता भवत भवत वषट् स्वाहा आह्वान-

स्थापनं सन्निधीकरणं ॥ १ ॥ मंदाकिनीतीर्थजलैः सुगंधैः सुवर्णभृंगारभृतैर्विशुद्धैः ॥ यः शाश्वतो मेरुषु पंचस्वच्छैः प्रशामयैर्वा जिनमायजे तं ॥ ॐ ह्रीं पंचमेरुस्थितशाश्वतजिनबिंबेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडसारेण विलेपनेन कर्पूरसत्कुंकुममिश्रितेन । यः शा० ॥ ॐ ह्रीं पंचमे० ॥ गंधं ॥ २ ॥ सुगंधशाल्यक्षतशुभ्रपुंजैः पुण्यांकुरैर्दीर्घतरैरिवोच्चैः । यः शा० ॥ ॐ ह्रीं पंचमे० ॥ अक्षतान् ॥ ३ ॥ मंदारसत्केतकिचंपकाद्यैः पद्मप्रसूनैः सुरभित्वसारैः । यः शा० ॥ ॐ ह्रीं पंचमे० ॥ पुष्पं ॥ ४ ॥ पीयूषपिंडैरिव मोदकाद्यैः पक्वान्नशाल्योदनसन्निवेद्यैः । यः शा० ॥ ॐ ह्रीं पंचमे०॥ चरुं ॥ ५ ॥ कर्पूरजातैर्घनजैर्मनोज्ञैः सुवर्णपात्रोज्वलरत्नदीपैः । यः शा० ॥ ॐ ह्रीं पंचमे० दीपं ॥ ६ सुस्निग्धकृष्णागरुसारधूपैः कर्पूरसच्चंदनहृद्यगंधैः । यः शा० ॥ ॐ ह्रीं पंचमे० ॥ धूपं ॥ सौरभ्यसौरम्यसुरूपकाद्यैर्गुणाधिकैः साधुफलैर्मनोज्ञैः ॥ यः शा० ॥ ॐ ह्रीं पंचमे० ॥ फलं ॥ ८ ॥ स्वच्छांबुगंधाक्षतपुष्पसारैर्नैवेद्यकैर्दीपसुधूपवर्गैः । फलैर्महार्घ्यं जयतूर्य-नादैर्मेरोर्जिनार्चामवतारयामि ॥ ॐ ह्रीं पंचमेरुस्थितशाश्वतजिनबिंबेभ्योऽर्घ्यं निर्वपामि स्वाहा ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

जय मदनमदनिवारण मुक्तिसुखकारण विदितत्रिभुवन कृपाकर । जय जिन प्रभाधर परम-दयाकर सम्यक्त्वोज्वलदिवाकर ॥ १ ॥ सुरासुरशंकरपूजितपाद मनोभवपादपन्नगसुनाग । सुद-

शीनमेरुसमाश्रितराम प्रसिद्ध निशुद्ध विमोह विकाम ॥ ३ ॥ नरेंद्रफणींद्रखगेंद्ररमाद कुकर्मकुकान-नदाग्निकरुदाद । सुदर्श० ॥ ३ ॥ अनंत गणेश सदोदययुक्त कलाधर कामकुतूहलमुक्त । सुदर्श० ॥ ४ ॥ तथा सुमतिमंधर तत्वविचार सुगंधर बाहो गणेश विचार । सुदर्श० ॥ ५ ॥ सुबाहुजिनाधिप लुंचितशेश सुवर्णशरीर महेष्ट रमेश । सुदर्श० ॥ ६ ॥ चतुर्गतिदुःखनिवारक देव विरोचनचंद्रसमाकृतसेव । सुदर्शन० ॥ ७ ॥ घत्ता ॥ सकलगुणसयुक्तं संपदो धाममिष्टं । विमलयतिसुवंद्यं धर्मभूपं मनोज्ञं ॥ स्मरति पठति मालां हन्मुखे सिद्धिकांतं । भवति भुवन-पूज्यः सारदेवेंद्रकीर्तिः ॥ अर्घ्यं ॥ ८ ॥

## ॥ अथ श्रुतपूजा ॥

श्रीमज्जिनेंद्रवदनांबुरुहान्मलाभसाहास्यविश्वमहिते सुरसार्थसार्थे । स्यात्कारलांछितपदप्रमितत्विषांगि एहीह तिष्ठ वत वाणि मम प्रसिध्ये ॥ ॐ ह्रीं शद्वब्रह्ममुखोत्पन्नद्वादशांगश्रुतदेवि अत्र एहि एहि संवौषट् स्वाहा । ॐ ह्रीं शद्वब्र० अत्र तिष्ठ तिष्ठ ठ ठ स्वाहा । ॐ ह्रीं शद्वब्र० अत्र मम सन्निहिता भव भव वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ १ ॥ श्रीहेमकुंभपरिपूरितादिव्यतोयैः संपूजयामि वरभव्यसुखायवाणीं ॥ ॐ ह्रीं शद्वब्रह्ममुखोत्पन्न-द्वादशांगश्रुतदेव्यै दिव्यजलं निर्वपामि स्वाहा ॥ १ श्रीखंडसारघनसारसुकुंकुमाद्यैः संपूज० ॥

ॐ ह्रीं शद्धव्र० ॥ गंधं ॥ २ ॥ सौगंधित्रंधुकलमाक्षतपुण्यपुंजैः संपूज० ॥ ॐ ह्रीं शद्धव्र० ॥ अक्षतान् ॥ ३ ॥ वासंतिकाबकुलमालतिचंपकाद्यैः संपूज० ॥ ॐ ह्रीं शद्धव्र० ॥ पुष्पं ॥ ४ ॥ संमिद्धशुद्धपय्मान्नमिताज्यभक्ष्यैः संपूज० ॥ ॐ ह्रीं शद्धव्र० चरुं ॥ ५ ॥ प्रालेयकालवरनिर्मलरत्नदीपैः संपूज० ॐ ह्रीं शद्धव्र० ॥ दीपं ॥ ६ ॥ कालागरुप्रसरसौरभधूपधूम्रैः संपूज० ॥ ॐ ह्रीं शद्धव्र० ॥ धूपं ७ ॥ नारंगनिंबुकदलीपनसाम्रपक्वैः ॥ संपूज० ॥ ॐ ह्रीं शद्धव्र० ॥ फलं ॥ ८ ॥ केयूरहारमणिकुंडलशेखराद्यैः संपूज० ॐ ह्रीं शद्धव्र० ॥ वस्त्राभरणं ॥ श्रीमज्जिनेंद्रमुखपद्मविराजमानां संपूज० ॥ ॐ ह्रीं शद्धव्र० अर्घ्यं ॥ १० ॥ सामरं यशःपदं बिभर्ति यो मुनीश्वरश्चामरादिवैभवेन राजते च भूतले ॥ कोमलैरनेन तेन युक्तिगर्भसत्पदैर्यामयार्चिता जिनस्य गीः प्रणम्यतां बुधैः ॥ शांतिधारां । पुष्पांजलिः ॥ ११ ॥

## ॥ अथ गुरुपूजा ॥

सम्यक्त्वमूलं सुमतिप्रकांडं सुवृत्तशाखं विबुधालिसेव्यं । अभीष्टदं सद्गुणगंधिपुष्पं सुरेंद्रकल्पद्रुममर्चयेऽहं ॥ ॐ ह्रीं चतुरशीतिलक्षगुणगणधरचरणा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ ह्रीं चतुरशीतिलक्षगुणगणचरणा अत्र तिष्ठत तिष्ठत ठ ठ स्वाहा । ॐ ह्रीं चतुर० अत्र मम सन्निहिता भवत भवत वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ १ ॥ हेमभृंगार-

निर्वाणसारया वारिधारया । श्रीमत्साधुसमूहस्य पादमभ्यर्चयाम्यहं ॥ ॐ ह्रीं गणधरचरणेभ्यो दिव्यजलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडागरुकर्पूरमिश्रया गंधचर्चया । श्रीमत्सा० ॥ ॐ ह्रीं गणध० ॥ गंधं ॥ २ ॥ अक्षतैरक्षयानंतसंपत्संपादनक्षमैः । श्रीमत्सा० ॐ ह्रीं गणध० ॥ अक्षतान् ॥ ३ ॥ पुष्पैश्चंपकपुन्नागमल्लिकाबकुलादिभिः । श्रीमत्सा० ॥ ॐ ह्रीं गणध० ॥ पुष्पं ॥ नैवेद्येनानवद्येन सुधासारसमत्विषा । श्रीमत्सा० ॥ ॐ ह्रीं गणध० ॥ चरुं ॥ ५ ॥ दीपैः कर्पूरमाणिक्यवर्त्तिकाग्रविनिर्गतैः । श्रीमत्सा० ॥ ॐ ह्रीं गणध० ॥ दीपं ॥ सौरभ्यकृष्णभाधूपैर्धूपैरगरुसंभवैः । श्रीमत्सा० ॥ ॐ ह्रीं गणध० ॥ धूपं ॥ ७ ॥ फलैर्नारंगजंबीरजंब्वाद्यैर्हृद्यतांगतैः । श्रीमत्सा० ॐ ह्रीं गणध० ॥ फलं ॥ ८ ॥ वारा गंधाक्षताभ्यां कुसुमचरुलसद्दीपधूपैः फलाद्यैः । किंचान्यैर्धन्यमान्यैः सकलसुखकरैः सर्वभव्योपचारैः ॥ संसारांभोधिनावां निखिलगुणभुवां चारुरत्नत्रयाणां । दोषारीणां गुरूणां क्रमकमलयुगं पूजयामः प्रशांत्यै ॥ ॐ ह्रीं गणधरचरणेभ्यो दिव्यार्घ्यं निर्वपामि स्वाहा ॥ शांतिधारां । पुष्पांजलिः ॥ ९ ॥

## ॥ अथ यक्षपूजा ॥

यस्य श्रीपादसेवानमदमरगणाः शंखभेरीमृगारिध्वानाद् घंटानिनादादहमहमिकयाऽऽगत्य संभूय भक्त्या । तद्देवस्योपतीर्थव्यवहृतिसमये नंदयन् भव्यलोकान् धर्मद्रोहान्विलिंपन् जगति द्युतिमितो

यक्षदेवैः समेतः ॥ ॐ ह्रीं क्रों प्रशस्तवर्णसर्वलक्षणसंपूर्ण स्वायुधवघृचिन्हसपरिवार हे यक्ष अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं क्रों प्रश० अत्र तिष्ठ तिष्ठ ठ ठ स्वाहा ॥ ॐ ह्रीं क्रों प्रश० । अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ १ ॥ सन्मंगलैः पूर्णघटातपत्रैर्ध्वजोल्लसच्चामरदर्पणाद्यैः । धर्मप्रभावात्प्रवणं प्रवीणं धर्मानुरागेण यजामि यक्षं ॥ ॐ ह्रीं क्रों प्रशस्तवर्णसर्वलक्षणसंपूर्ण स्वायुधवघृचिन्हसपरिवार हे यक्ष इदमर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ २ ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारा ॥ ३ ॥

## ॥ अथ यक्षीपूजा ॥

जातं भवान्वर्थविभावनो वा हुंडावसर्पिण्यतिदोषतो वा । मिथ्यामतं नाशयितुं समर्थां यक्षीं समाहूय वृषानुरक्तां ॥ ॐ ह्रीं क्रों प्रशस्तवर्णे सर्वलक्षणसंपूर्णे स्वायुधचिन्हसपरिवारे हे यक्षि अत्र

---

१ जल, गंध, अक्षत, पुष्प आणि दर्भ हीं अर्घ्यद्रव्ये होत । २ जल हें पाद्यद्रव्य होय । ३ पक्वान्नादि पदार्थ हे बलिद्रव्य होय । ४ गंधानें किंवा अक्षतानें तबकात असें (卐) स्वस्तिक चिह्न काढणे, याला स्वस्तिक असे म्हटले आहे । ५ जल, गंध, अक्षत आणि पुष्प हीं द्रव्यें एका चिवीत वाढणे, याला यज्ञभाग म्हणतात ।

आगच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं क्रों प्रश० अत्र तिष्ठ तिष्ठ ठठ स्वाहा ॥ ॐ ह्रीं क्रों प्रश० अत्र मम सन्निहिता भव भव वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ १ ॥ संगीतभृंगारपुरःसरेण सन्मंगलेनापि मनोहरेण । दुर्मार्गसक्तानतुशासमानां यजामि यक्षीं वृषपक्षपातां ॥ ॐ ह्रीं क्रों प्रशस्तवर्णे सर्वलक्षणसंपूर्णे स्वायुधवाचिन्हसपरिवारे हे यक्षि इदमर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ २ ॥ यस्यार्थं क्रियते पूजा० ॥ शांतिधारा ॥

## ॥ अथ क्षेत्रपालपूजा ॥

अस्मिन् जैनमहामहोत्सवविधाविंद्रादिदिक्पालकस्थित्यर्थः परितो दिशास्वभिमुखं निक्षिप्य दर्भासनं । आरोप्यार्घ्यमनर्घ्यमंत्रयजनैर्विघ्नौघविच्छित्तये शक्राद्यैरभिपूज्यते तरुभुवि श्रीक्षेत्रपालाधिपः ॥ ॐ ह्रीं क्रों प्रशस्तवर्ण सर्वलक्षणसंपूर्ण स्वायुधचिन्हसपरिवार हे क्षेत्रपाल अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं क्रों प्रश० अत्र तिष्ठ तिष्ठ ठठ स्वाहा। ॐ ह्रीं क्रों प्रश० अत्र मम सन्निहितो भव भव वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ १ ॥ सन्मंगलाद्यैर्वरभाजनस्थैः संपूर्णतोयादिसमन्वितैश्च । रक्षंतु चैत्यालयभूमिभागं श्रीक्षेत्रपालं परिपूजयामि ॥ ॐ ह्रीं क्रों प्रशस्तवर्णाय सर्वलक्षणसंपूर्णाय स्वायुधचिन्हसपरिवाराय क्षेत्रपालाय अर्घ्यं समर्पयामि ॥ २ ॥

इत्यर्चयित्वा जिनपादभक्तं भक्तानुरक्तं वरदानदक्षं । यक्षेंद्रमेतत्पदविघ्नकानां शांत्यै प्रकुर्वे वरशांतिधारां ॥ शांतिधारां ॥ ३ ॥ इत्यधिवासनम ॥

## ॥ अथ महाभिषेकः ॥

मंगलं भगवानर्हन् मंगलं भगवान् जिनः । मंगलं प्रथमाचार्यो मंगलं वृषभेश्वरः ॥ १ ॥ मंगलं प्रथमं लोकेषूत्तमं शरणं जिनं । नत्वायमर्हतः पूजाक्रमः स्याद्विधिपूर्वकं ॥ २ ॥ विज्ञानं विमलं यस्य भासते विश्वगोचरं । नमस्तस्मै जिनेंद्राय सुरेंद्राभ्यर्चितांघ्रये ॥ ३ ॥ प्रारब्धतांडवशचीपतिबाहुदंडश्चैत्रानकप्रतिहतो मणिकांडको वा ॥ यस्याभिषेकसमये सविता बभूव दद्यादसौ जिनपतिर्मम मंगलानि ॥ ४ ॥ ॐ परमब्रह्मणे नमो नमः स्वस्ति २ जीव २ नंद २ वर्धस्व २ विजयस्व २ अनुशाधि २ पुनिहि २ पुण्याहं २ मांगल्यं २ पुष्पांजलिः ॥ घंटाटंकारवीणाक्वणितमुरजधां धांक्रियां काहळार्चिझींकारगंदारभेरीपटहदळदळंकारसंभूतघोषैः । आक्रम्याशेषकाष्ठातटमवघटितं प्रोद्घटं दभ्रटिश्रमिष्टाधिष्टार्हदिष्टिप्रमुखमिह लतांतांजालिं प्रोत्क्षिपामि ॥ ५ ॥ ॐ न्हीं वाद्योद्घोषेण सह पुष्पांजलिं करोमि स्वाहा ॥ ( येथें घंटादि नानाप्रकारें वाद्यें वाजवीत पुष्पांजलि करणें. ) श्रीमन्मेरोः सुमूर्धन्यमरपरिवृढैरंबुभिः क्षीरसिंधोरुद्धृत्योद्धृत्य मूर्ध्नाऽमितभुजगमितैर्हाटकैर्यैर्घटौघैः । जन्मन्युच्चैर्जिनानां विधिरभिषवणे योऽभ्यदायीद्धशोभः सोऽस्मिन् प्रस्तूयतेऽद्य प्रकृतिपरिकरैः सर्व-

लोकैकशांत्यै ॥ ६ ॥ सर्वात्मप्रदेशघनघटितघातिजातप्रथितदुरघविघटनप्रकटीभूतपरमात्मभावस्य । सकलविमलकेवलावबोधप्रभाप्रभावावबोधितभव्यपद्माकरस्य । सुरासुराधीशमकुटतटघटितमणिगण-किरणवारिधाराधौतचारुचरणारविंदस्य । भगवतो जिनेंद्रस्य । अभ्रंकषायदभ्रविभ्रमविचित्रकूटको-टिपिनद्धविततावधूयमानविविधध्वजराजिराजितविराजमानस्य । नवसुधाधवलविमलितानिखिल-दिक्पालनिलयस्य । श्रीमदर्हत्परमेश्वरचारुचरणाराधनासक्तविनयजनसमाश्रयपुण्यपुंजायमानस्य । चंद्रार्कायमाणमणिदर्पणादिनानोपकरणकिरणाभिद्योतिताभ्यंतरस्य । विचित्रचित्रितभित्तिचैत्यालयस्य । मध्ये कृतमहामेरुतया जंबूद्वीपोपमाने प्रांगणे मंडपस्यावर्णनं सोदकानि पुष्पाणि क्षिपेत् ॥ ( येथें हातांत पाणी व फुलें घेऊन टाकणें. ) शोधयाम्यथ भूभागं जिनेंद्राभिषवोत्सवे । कलधौतोज्वल-स्थूलकलशापूरवारिणा ॥ ॐ ह्रीं नमः सर्वलोकनाथाय धर्मतीर्थकराय श्रीशांतिनाथाय शांति-कराय परमपवित्राय पवित्रतरजलेन भूमिशुद्धिं करोमि स्वाहा । भूमिशोधनं ॥ ( येथें पवित्र-जलानें भूमिशोधन करणें. )

## ॥ अथ पंचकुमारपूजा ॥

श्रीमज्जैनमहामहोत्सवविधिव्यापारसंसिद्धये । भव्यानामपि तन्नियोगनिचयश्रद्धापरीतात्मनां ॥ क्षेमार्थं क्रियमाणवास्तुविधिवत्संधानसंपूजनं । प्रस्तावे प्रविकीर्यते जयजयारावेण पुष्पांजलिः ॥ ॐ

ह्रीं श्रीं क्षीं भूः स्वाहा वास्तुपुष्पांजलिः ॥ १ ॥ उत्खातपूरितशमीकृतसंस्कृतायां पुण्यात्मनीय-भगवन्मखमंडपोर्व्यां । वास्त्वर्चनादिविधिलब्धिमखादिभागवेद्यां यजामि शशिभृद्दिशि वास्तु-देवं ॥ २ ॥ ॐ आं क्रों ह्रीं हे वास्तुकुमारदेव अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आं क्रों ह्रीं हे वा० अत्र तिष्ठ तिष्ठ ठठ स्वाहा । ॐ आं क्रों ह्रीं हे वा० अत्र मम सन्निहितो भव भव वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ ॐ आं क्रों ह्रीं हे वास्तुकुमारदेव इद-मर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रति-गृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारां ॥ विभोः सभायाः परितः प्रभक्त्या महीतलं योजनमेकमात्रं । विशोधितं येन मरुत्कुमारः संमार्जयेदध्वरयागभूमिं ॥ ॐ ह्रीं वायुकुमार सर्वविघ्नविनाशनाय महीं पूतां कुरु २ हूं फट् स्वाहा । पैडुदर्भपूलेन भूमिं संमार्जयेत् ॥ ॐ ह्रीं हे वायुकुमार अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं हे वा० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ह्रीं हे वा० अत्र मम सन्नि-हितो भव भव वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ ॐ ह्रीं हे वायुकुमार इदमर्घ्य-मित्यादि ॥ ३ ॥ घंटाटंकृतझंकृतोद्घमुरजश्रीकाहळाझांकृतैर्ढक्काढीकृतशंखभूंकृतसुभेरीभूरि

---

१ पडुदर्भपूलेन भूमि समार्जयेत्-दर्भांच्या सहा काड्या घेऊन त्यांच्या शेंड्यांनीं भूमि झाडून काढणें ।

 

भां भांकृतैः । गंगासिंधुप्रसिंगमंगलजलैर्दुर्वारमेघैरलं कुर्वे चारु जिनेंद्रयज्ञधरणीं भूरि समृद्धि-श्रियै ॥ ॐ ऱ्हीं मेघकुमार धरां प्रक्षालय २ तेषां प्रबोधनार्थं अं हं सं वं झं ठं क्षः हुं फट् स्वाहा । षड्दर्भपूलोपात्तजलेन भूमिं सिंचेत् ॥ ॐ ऱ्हीं हे मेघकुमार अत्रागच्छागच्छ० ॥ ॐ ऱ्हीं हे मेघकुमार इदमर्घ्यमित्यादि ॥ ४ ॥ षड्दर्भपूलाग्रमलंकरिष्णुः प्रज्वल्य दीपप्रभया धरित्रीं । करोमि सिद्धांचलसिद्धिबध्नामध्यात्मबुध्याग्रजया श्रियाभां ॥ ॐ ऱ्हीं क्रों झ्लूर्व्यूं अग्निकुमार ज्वल प्रज्वल अमिततेजसे स्वाहा । षड्दर्भपूलानलेन भूमिं ज्वालयेत् ॥ ॐ ऱ्हीं हे अग्निकुमार अत्रागच्छ-गच्छ० ॥ ॐ ऱ्हीं हे अग्निकुमार इदमर्घ्यमित्यादि ॥ ५ ॥ फणमणिगणराजिज्योतिरालीढभूमि-प्रणयधरणदक्षान् मोक्षलक्ष्मीसमक्षान् । प्रगुणमुजनसेव्यान् नव्यगव्यामृतैः श्रीफणभृदधिगणस्थां-स्तर्पयाम्यर्पिताघ्र्यैः॥ ॐ ऱ्हीं श्री भूपष्टिसहस्रसंख्येभ्यो नागेभ्योऽमृतांजलिं प्रसिंचामि स्वाहा। नाग-संतर्पणार्थमैशान्यां दिशि क्षीरांजलिं क्षिपेत ॥ ॐ ऱ्हीं नागकुमारा अत्रागच्छतागच्छत संवौषट् स्वाहा । ॐ ऱ्हीं नाग० अत्र तिष्ठत २ ठठ स्वाहा। ॐ ऱ्हीं नाग० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ ॐ ऱ्हीं नागकुमारा इदमर्घ्यमित्यादि ॥ ६ ॥

---

१ षड्दर्भपूलोपात्तजलेन भूमि सिंचेत् दर्भाच्या सहा काड्या घेऊन त्यांचे शेंडे पाण्यांत बुडवून भूमीवर शिंपणे ।
२ षड्दर्भपूलानलेन भूमिं ज्वालयेत्- दर्भाच्या सहा काड्या घेऊन त्याचे शेंडे दिव्यावर धरून पेटवून त्यांनी भूमि जाळणें ।
३ ऐशान्यां दिशि क्षीरांजलिं क्षिपेत्- ईशान्य दिशेला दूध ओंजळभर घेऊन सोडणें.

## ॥ अथ क्षेत्रपालपूजा ॥

क्षेत्रं सर्वं पवित्रं गृहनगरवनोद्यानधन्वादिभेदं यो रक्षत्यक्षसाक्षादपि समवसृतेः क्षेत्रमेतद्विशेषात् । तैलैः सिंदूरधूळीगुडकुसुमलसद्गंधकौसुंभवस्त्रै रत्नाद्यैश्चापि यज्ञे प्रमुदितहृदयं तं यजे क्षेत्रपालं॥१॥ सिंहशावकसन्निभांजननीलनीरजमेचकं । रात्रिजागरमुद्गमायतबाहुभिर्विधृतं सदा ॥ स्वर्णपात्रमसिं हृदंडमरं नवोरगभूषणं । क्षेत्रपालमिहाह्वये विविधांतरारिविघातिनं ॥ ॐ आं क्रों ऱ्हीं प्रशस्तवर्ण सर्वलक्षणसंपूर्ण स्वायुधचिन्हसपरिवार हे क्षेत्रपाल अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आं क्रों ऱ्हीं प्रश० अत्र तिष्ठ २ ठ ठ स्वाहा । ॐ आं क्रों ऱ्हीं प्रशस्त० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वाहनं स्थापनं सन्निधीकरणं ॥ २ ॥ सद्येनापि सुगंधेन स्वच्छेन बहुलेन च । स्नपनं क्षेत्रपालस्य तैलेन प्रकरोम्यहं ॥ ३ ॥ ॐ ऱ्हीं क्षेत्रपालाय तैलाभिषेचनं करोमि स्वाहा । तैलस्नपनं ॥ ( या मंत्रानें क्षेत्रपालास तेलाचा अभिषेक करणें. ) सुंदरैररुणाकारैः पीतवर्णादि-संभवैः । चर्चनं क्षेत्रपालस्य सिंदूरैः प्रकरोम्यहं ॥ ॐ ऱ्हीं क्षेत्रपालाय सिंदूरधूळीसेचनं करोमि स्वाहा । सिंदूरधूळीसेचनं ( या मंत्रानें क्षेत्रपालास शेंदूर लावणें. ) सिंदूरसुंदरभरेण सुकुंकुमेन तैलेन तीर्थजलसन्निभपावनेन । अर्घ्येण सद्गुडतिलस्य च मोदकेन क्षेत्राधिपं जिनसुसेवक-मर्चयामि ॥ ५ ॥ ॐ ऱ्हीं क्षेत्रपालाय सुगंधगंधानुलेपनं करोमि स्वाहा ॥ ( या मंत्रानें क्षेत्र-

पालास गंध लावणें. ) ॐ ऱ्हीं क्षेत्रपालाय कौसुंभवस्त्रवेष्टनं करोमि स्वाहा । ( या मंत्रानें क्षेत्रपालास तांबडें वस्त्र पांघरणें. ) ॐ ऱ्हीं क्षेत्रपालाय पुष्पमालावेष्टनं करोमि स्वाहा ॥ ( या मंत्रानें क्षेत्रपालास फुलाची माळ घालणें. ) ॐ ऱ्हीं क्षेत्रपालाय गुडमोदकार्पणं करोमि स्वाहा ॥ ( या मंत्रानें क्षेत्रपालास गूळ व मोदक अर्पण करणें. ) ॐ ऱ्हीं क्षेत्रपालाय सुगंधद्रव्यार्चनं करोमि स्वाहा ॥ ( या मंत्रानें क्षेत्रपालास सुगंधद्रव्य अर्पण करणें. )



## ॥ अथ अष्टकं ॥

स्वर्णघटोदरसंभृतकुंभैरिद्रनदीजलचंदनयुक्तैः । संभ्रमरोज्वलजैनपदाब्जक्षेत्रपतेः पदपंकजपूजां ॥ ॐ ऱ्हीं क्षेत्रपालाय जलं समर्पयामि ॥ १ ॥ चंदनकुंकुमकर्पुरसारैः कस्तुरिजीवनगंधसुपंकैः । संभ्रम० ॥ ॐ ऱ्हीं क्षेत्र० ॥ गंधं ॥ २ ॥ अक्षसमुद्रजफेनसुपिंडैः शालियतंडुलपांडुरपुंजैः । संभ्रम० ॥ ॐ ऱ्हीं क्षेत्र० ॥ अक्षतान् ॥ ३ ॥ पद्मलतारुणचंपकजातीमल्लिसुपाटलफुल्लसुवृंदैः संभ्रम० ॐ ऱ्हीं क्षेत्र० ॥ पुष्पं ॥ सुरत्नसुवेष्टितपात्रगताज्यैर्भक्ष्यसितोदनपायसशाकैः । संभ्रम० ॥ ॐ ऱ्हीं क्षेत्र० चरुं ॥ ५ ॥ इंद्रमयोर्जितरंगसुतेजैश्चंद्रमयोगविराजितदीपैः । संभ्रमरोज्वल-जैनपदाब्जक्षेत्रपतेः पदपंकजपूजां ॥ ॐ ऱ्हीं क्षेत्रपालाय दीपं समर्पयामि ॥ ६ ॥ काळागरुश्रीखंडमराळैर्धूपितवान्हिसुयोगसुधूपैः । संभ्रम० ॐ ऱ्हीं क्षेत्र० ॥ धूपं ॥ ७ ॥

आम्रसुदाडिमलांगलिपूगैः पात्रगगोस्त ( ? ) निरंभकपित्थैः॥ संभ्रम० ॥ ॐ ह्रीं क्षेत्र० ॥ फलं ॥८॥ श्रीजैनपादांबुजसेव्यभृंगं । श्रीजैनगेहं प्रतिपालयंतं ॥ मुनीश्वरेषां सुखकारणोक्तं ॥ श्रीक्षेत्र-पालं परिपूजयामि ॥ ॐ ह्रीं क्षेत्र० अर्घ्यं ॥ ९ ॥ सर्वजनस्तुतपूजितदेहं पापविनाशनशांति-कराग्रं । संभ्रम० ॥ शांतिधारां ॥ १० ॥

## ॥ अथ स्तोत्रं ॥

एकं खट्वांगहस्तं पुनरपि भुजगं पाशमेकं त्रिशूलं । कापालं खड्गहस्तं डमरुगसहितं वामहस्ते पिनाकं ॥ चंद्रांकं केतुमालायुवतिनखशिखामर्पयज्ञोपवीतं । कालं कालांधकारं मम हरतु भयं भैरवः क्षेत्रपालः ॥ १ ॥ नीलं जीमूतवर्णं सकलशिवमयं भैरवं भीमरूपं । रौद्रं रौद्रावतारं ज्वलित-शिखिशिखारौद्रकेशं सुदंष्ट्रं ॥ भीमं गंभीरनादं किळिकिळितरवं वंद्यपादौ त्रिलोक्यां । ज्वालामाला-कराळं मम हरतु० ॥ २ ॥ कैलासे मेरुशृंगे दशदिशगमने दैत्यनीलाळिवासे। पाताळे मर्त्यलोके जलनिधिसलिले कानने सर्वतीर्थे ॥ सोमे सूर्याधिवासे ग्रहगणनिलये द्वीपद्वीपांतरेषु । सर्वस्थानेषु पूज्यो मम हरतु० ॥ ३ ॥ सिद्धांते कालमार्गे प्रतिकुलगमने मंत्रतंत्रे समस्ते । वेद्या ब्रह्मावतारं त्रिविधजपमतिसर्वशास्त्रप्रसिद्धे ॥ खड्गं पाताळमूलं वरनखसहितं पाशखट्वांगहस्तं । द्रां द्रीं द्रूं मेघरूपं मम हरतु० ॥ ४ ॥ हुंकारैर्घोरनादैश्चलितवसुमतौ सागरे मेरुशृंगे । ब्रह्मांडे ब्रह्मकांडे

स्फुटितगिरिगुहागव्हरंडाद्रहासं ॥ खड्गं पाताळशूलं वरशिखुटिकामंजनं पादलेपं । सर्वं दातुं समर्थं मम हरतु० ॥ ५ ॥ कंकालं कालरूपं किलिकिलिमहितं भूतवेताळनाशं । गं गीं रुं मूर्तिमंतं घघघघ घटितं घोरगैद्रादिमंत्रैः ॥ भूतैः प्रेतैः प्रशम्नैरुपशमितमहायक्षरक्षःपिशाचैः । रां गीं श्रीं पूज्यपादौ मम हरतु० ॥ ६ ॥ ब्रह्मा विष्णुः सुरेंद्रं सुरस्मारिदमरः सोमसूर्याग्निरूपं । आकाशे भूमिमध्ये जलनिधिसलिले जैनवासं समस्तं ॥ स्वानंदं नादवेद्यं सकलशिवमयं यस्य रूपं समस्तं । सर्वं कल्याणहेतुं मम हरतु० ॥ ७ ॥ क्षेत्रे पीठे प्रपीठे त्रिभुवननिलये दीप्तचंडे प्रचंडे । चामुंडे विघ्नहंते गणपतिसहिते भूतप्रेतैः पिशाचैः ॥ गर्जो वश्यंकरिण्यौ कुशलतरमहायंत्रमंत्रे समस्ते । सर्वं कल्याणहेतुं मम हरतु० ॥ ८ ॥ सर्वपापहरं स्तोत्रं स्तोतव्यं भैरवाष्टकं । ब्रह्मराक्षसनाशं च व्याध्यपस्मारिनाशनं ॥ ९ ॥ अपुत्रो लभते पुत्रं निर्धनो धनवान् भवेत् । व्याधितो मुच्यते रोगी पठ्यमानो हि नित्यशः ॥ १० ॥ त्रिसंध्यं पठितो नित्यं सर्वसिद्धिमवाप्नुयात् ॥ कालीरे चित्रकूटे सुभुवि नगवने कांतजालांधकारे । सौराष्ट्रे सिंधुदेशे मगदपुरवरे कौशले वा कलिंगे ॥ कर्णाटे कोंकणे वा भृगुजपुरवरे कुब्जकर्णे स्थिता ये । ते सर्वे सर्वरूपा अपहरणभयात् पांतु वो क्षेत्रपालाः ॥ इति स्तोत्रार्घ्यं ॥

## ॥ अथ जयमाला ॥

लक्ष्मीधामकरं जगत्सुखकरं सद्दीर्घकायं वरं । रात्रीजागरवाहनं सुरवरं करवाळपाणीधरं ॥ निर्विघ्नं ग्रहनाशनं भयहरं भूतादित्रासोत्करं । वंदे श्रीजिनसेवकं हरिहरं श्रीक्षेत्रपालं सदा ॥ १ ॥ सुरासुरखेचरपूजितपाद गुणाकर सुंदर हुंकृतनाद । मनोहर पन्नगकंठविमाल सदा समुहोदय जय क्षेत्रपाल ॥ २ ॥ सुडाकिनि शाकिनिनाशनवीर सयाकिनिराकिनिभ्रंशनधीर । अनुपममस्तकशोभितमाला सदा सु० ॥ ३ ॥ सुलाकिनि हाकिनिपन्नगत्रास सुभूपतितस्कर दुर्भयनाश । निशाकरशेखरमंडितभाल सदा सु० ॥ ४ ॥ समुज्ज्वलशार्दुळसूकरवृंद सुराक्षसभोकसदुर्भयकंद । सदामलकोमलांगविशाळ सदा सु० ॥ ५ ॥ सचिन्नककुंजर सागरपार सुदुर्जनशोचन शत्रुसंहार । सुकंपितकिन्नरभूतरमाल सदा सु० ॥ ६ ॥ सुवृद्धिसमृद्धिसुदायकसूर सुपुत्रकमित्रकलत्रसुपूर । सुरंजितनरसुरकामिनिबाल सदा सु० ॥ ७ ॥ सुकेयूरकुंडलहारसुवाद सुशेखर सुस्वरकिंकिणिनाद । भयंकर भीषण भासुर काल सदा सु० ॥ ८ ॥ सुकामिनिक्षालनदिव्यशरीर सुवाहन हासन मोदन धीर । सुभाषणरंजिततत्वविचार सदा सु० ॥ ९ ॥ सुस्थापितनिर्मलजैनसुवाक्य निकंदितदुर्मतदुर्मतिमाख्य । प्रकाशितशासनजैनरमाल सदा सु० ॥ १० ॥ सुभावितश्रेय सुभव्य सुवंश महोदय जैनमगेवरहंस । महासुखसागरकेळिविशाल सदा सु० ॥ घत्ता ॥ असमयसुखसारं

तीक्ष्णदंष्ट्राकरालं । भ्वकरकृतजटीलं दीर्घजिह्वाकराळं ॥ सुघटविकृतवक्त्रं शांतिदासप्रसस्यं । भजतु नमतु जैनं भैरवं क्षेत्रपालं॥ अर्घ्यं ॥ लक्ष्मीप्रामकरी कलत्रसुकरी चौरादिशत्रून्हरी ॥ शाकिन्यादिहरी प्रशर्मसुचरी राच्यर्द्धिसंवर्धनी ॥ विद्यानंदधनौघधामनगरी विघ्नौघनिर्नाशिनी । पूजा श्रीजिनक्षेत्रपस्य भवतु संपत्करी चित्करी ॥ इत्याशीर्वादः ॥

## ॥ अथ पुण्याहवाचनं ॥

श्रीनिर्जरेशाधिपचक्रपूर्वं श्रीपादपंकेरुहयुग्ममीशं । श्रीवर्धमानं प्रणिपत्य भक्त्या संकल्पमेतं कथयामि सिध्यै ॥ १ ॥ ॐ स्वस्ति श्रीयजमानाचार्यप्रभृतिसमस्तभव्यजनानां सद्धर्मश्रीबलायुरारोग्यैश्वर्याभिवृद्धिरस्तु । अद्य भगवतो महापुरुषस्य श्रीमदादिब्रम्हणो मते । त्रैलोक्यमध्यमध्यासीने । मध्यमलोके । श्रीमदनावृतयक्षसंसेव्यमाने । दिव्यजंबूवृक्षोपलक्षितजंबूद्वीपे । महनीयमहामेरोर्दक्षिणभागे । अनादिकालसंसिद्धभरतनामधेयप्रविराजितषट्खंडमंडितभरतक्षेत्रे । सकलशलाकपुरुषसंभूतिसंबंधविराजितार्योखंडे । परमधर्मसमाचरणदक्षिणदेशे । अस्मिन् विनेयजनताभिरामे । उदगावग्रामे[1] । महाशांतिकर्मणोचिते । अत्र वृषभनाथस्य[2] दिव्यमहाचैत्यालयप्रदेशे । एतदवसर्पिणीकालावसाने । प्रवृत्तसुवृत्तचतुर्दशमनूपमान्वितसकललोकव्यवहारे । श्रीवृषभस्वामिपौरस्त्य

१ या ठिकाणी पूजकानें जेथें पूजा चालते तेथें त्या गांवचें नांव घेणें । २ या ठिकाणी मूळनायक जो असेल त्याचें नांव घेणें ।

मंगलमहापुरुषपरिषत्प्रतिपादितपरमोपशमपर्वक्रमे । वृषभसेनसिंहसेनचारुसेनादिगणधरस्वामिनिरूपितविशिष्टधर्मोपदेशे । दुषमसुषमानंतरप्रवर्तमानकलियुगापरनामधेयदुष्षमाभिधानपंचमकालप्रथमपादे । महतिमहावीरवर्धमानतीर्थंकरोपदिष्टसद्धर्मव्यतिकरे । श्रीगौतमस्वामिप्रतिपादितसन्मार्गप्रवर्त्तमाने । श्रेणिकमहामंडलेश्वरसमाचरितसन्मार्गावशेषे । विक्रमांकनृपालपालितप्रवर्त्तमानानुकूलशकनृपकाले । षट्त्रिंशदुत्तराष्टादशशतवर्षसंमिते । प्रवर्तमान आनंदनामसंवत्सरे । ज्येष्ठमासे कृष्णपक्षे । द्वादश्यां तिथौ । मंदवारयुक्तायां । प्रशस्तनारकायोगकरणद्रेष्काणहोरामुहूर्तलग्नयुक्तायां । अष्टमहाप्रातिहार्यशोभितश्रीमदर्हत्परमेश्वरसान्निधौ । श्रीशारदासन्निधौ । राजऋषिदेवऋषिपरमऋषिब्रह्मऋषिसान्निधौ । विद्वत्सामाजिकसन्निधौ । अनादिश्रोतृसन्निधौ । देवब्राम्हणसन्निधौ । सुब्राह्मणसन्निधौ । यागमंडलभूमिशुध्यर्थं द्रव्यशुध्यर्थं पात्रशुध्यर्थं क्रियाशुध्यर्थं मंत्रशुध्यर्थं महाशांतिकर्मसिद्धिसाधनयंत्रमंत्रतंत्रविद्याप्रभावसंसिद्धनिमित्तविधीयमानस्य कलशाभिषेकमहोत्सवप्रारंभे पुण्याहवाचनं करिष्ये । सर्वैः सभाजनैरनुज्ञायतां । विद्वद्विशिष्टजनैरनुज्ञायतां । महाजनैरनुज्ञायतां । तद्यथा । प्रथमावर्तंदुलस्योपरि र्‍हींकारसंवेष्टित स्वस्तिकयंत्रे मंत्रपरिपूजितमाणिम-

---

१ या ठिकाणीं चालू शक सांगणे । २ या ठिकाणीं चालू संवत्सराचे नांव घेणे । ३ या ठिकाणीं चालू मासाचे नांव घेणें । ४ या ठिकाणीं चालू पक्षाचे नांव घेणें । ५ या ठिकाणीं चालू तिथीचे नांव घेणे । ६ या ठिकाणीं चालू वाराचे नांव घेणें । ७ या ठिकाणीं आरंभिलेल्या पूजेचे व क्रियेचे अगर (आधानादि षोडशक्रियेचे) नांव घेणें ।

यमंगलकलशं संस्थाप्य । यजमानाचार्योऽपसव्यहस्तेन धृत्वा पुण्याहमंत्रमुच्चारयन् सिंचेत् । ॐ स्वस्तये कलशस्थापनं करोमि स्वाहा। ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः नमोऽर्हते भगवते श्रीमते समस्त-गंगासिंध्वादिनदीनदतीर्थजलं भवतु स्वाहा । जलपवित्रीकरणं ॥ अभ्यर्च्य कलशं तोयप्रवाहैश्चंदनैरहं । अक्षतैः कुसुमैश्चैर्दीपधूपफलैरपि ॥ ॐ ह्रीं पुण्याहकलशार्चनं करोमि स्वाहा । कलशार्चनं ॥ २ ॥ जयतु जिनेश्वरशासनमखिलसुखं मे भवतु । जगति जनानां देशे भवतु सुभिक्षं। पांतु चिरं वसुमतिं राज्ञः । ॐ अर्हद्भ्यो नमः । सिद्धेभ्यो नमः । सूरिभ्यो नमः । पाठकेभ्यो नमः । सर्वसाधुभ्यो नमः । अतीतानागतवर्तमानत्रिकालगोचरानंतद्रव्यगुणपर्यायात्मकवस्तुपरिच्छेदकसम्यग्दर्शनज्ञानचारित्राद्यनेकगुणगणाधारपंचपरमेष्ठिभ्यो नमोनमः । ॐ पुण्याहं २ प्रीयंतां २ भगवंतोऽर्हंतः सर्वज्ञाः सर्वदर्शिनः सकलवीर्याः सकलसुखाः त्रिलोकेशाः त्रिलोकेश्वरपूजिताः त्रिलोकनाथाः त्रिलोकमहिताः त्रिलोकप्रद्योतनकराः । ॐ श्रीमद्भगवदर्हत्सर्वज्ञपरमेष्ठिपरमपवित्रशांतिभट्टारकपादपद्मप्रसादात् सद्धर्मश्रीबलायुरारोग्यैश्वर्याभिवृद्धिरस्तु॥ वृषभादयो महतिमहावीरवर्धमानपर्यंताः परमतीर्थंकरदेवाश्चतुर्विंशत्यर्हंतो भगवंतः सर्वज्ञाः सर्वदर्शिनः संभिन्नतम-

---

ह्रीं

१ हें यंत्र जमीनीवर शेरभर तांदूळ पसरून त्याजवर काढणें व त्या यंत्रावर कलश मांडून उजव्या हातानें पुण्याहमंत्र ह्मणत सेचन करणें.

स्का वीतरागद्वेषमोहास्त्रिलोकनाथास्त्रिलोकमहितास्त्रिलोकप्रद्योतनकरा जातिजरामरणविप्रमुक्ताः ।
सकलभव्यजनसमूहकमलवनसंबोधदिनकराः । देवाधिदेवाः अनेकगुणगणशतसहस्रालंकृत-
दिव्यदेहधराः । पंचमहाकल्याणाष्टमहाप्रतिहार्यचतुस्त्रिंशदतिशयविशेषसंप्राप्ताः । इंद्रचक्रधर-
बलदेववासुदेवप्रभृतिदिव्यसमानभव्यवरपुंडरीकपरमपुरुषवरमकुटतटनिबिडनिबद्धमणिगणकरनिक-
रवारिधाराभिषिक्तचारुचरणकमलयुगुलाः । स्वशिष्यपरशिष्यवर्गे प्रसीदंतु वः । परम-
मांगल्यनामधेयाः सद्धर्मकार्येष्विहामुत्र च सिद्धाः सिद्धिं प्रयच्छंतु नः ॥ अतीतकालसंजात
विविधविबुधनिवहप्रार्थितार्थप्रदानसद्धर्मपारिजातपादपप्रभावोद्भूतसंपत्समेताः । निखिलभुवनकुहर-
विश्रुतयशोराशिधवलितहरिद्वलयनिलयनिर्लिंपनितंबिनीजनमनोवितर्कमानकल्याणपरंपराः। अनवरत-
विनमदखिलसुरनरोरगखचरपतिमकुटतटताडितमाणिक्यमयूखमालालंकृतक्रमकमलयुगुलाः । ॐ
निर्वाण सागर महासाधु विमलप्रभ श्रीधर सुदत्त अमलप्रभ उद्धर अंगिर सन्मति
सिंधु कुसुमांजलि शिवगण उत्साह ज्ञानेश्वर परमेश्वर विमलेश्वर यशोधर कृष्ण ज्ञानमति
शुद्धमति श्रीभद्र अतिक्रांत शांताश्चेति चतुर्विंशत्यतीनकालतीर्थकरपरमाजिनदेवाश्च वः
प्रीयंतां २ ॥ ॐ संप्रतिकालश्रावकश्रेयस्करस्वर्गावतरणजन्माभिषवणपरिनिष्क्रमणकेवलज्ञानानि-
र्वाणकल्याणविभूतिभूषितमहाभ्युदयाः । सिद्धविद्याधरराजमहाराजमंडलीकमहामंडलीकमकुटबद्ध-

बलकेशवसार्वभौमादिविजदानवोरगेंद्रकिरीटप्रभामणिगणप्रभासमुद्ध्वनि जलप्रवाहप्रक्षालितचारुचरण-नखकिरणचंद्रचंद्रिकाप्रनिहतपापांधकारा: । ॐ वृषभ अजित शंभव अभिनंदन सुमति पद्मप्रभ सुपार्श्व चंद्रप्रभ पुष्पदंत शीतल श्रेयान् वासुपूज्य विमल अनंत धर्म शांति कुंथु अर मल्लि मुनिसुव्रत नमि नेमि पार्श्व श्रीवीरवर्धमानाश्चेति चतुर्विंशतिवर्तमानकालतीर्थंकर-परमाजिनदेवाश्च वः प्रीयंतां २ ॥ ॐ भविष्यत्कालभव्याभ्युदयनिमित्तनिखिलकल्याणरमणी-यकत्रिभुवनैश्वर्यशोभितमहाप्रभावा: । सहर्षसंभ्रमप्रणुतचतुर्निकायामरपतिनिकरमौलिविलसित रत्नरंजितानेकमणिगणखचितसुवर्णसिंहासनालंकृतसहस्रदलकमलविष्टराधिष्ठितपादपद्मयुगला: । ॐ महापद्म सुरदेव सुपार्श्व स्वयंप्रभ सर्वात्मभूत देवपुत्र कुलपुत्र उदंक प्रोष्ठिल जयकीर्ति मुनि-सुव्रत अर निःपाप निष्कषाय विपुल निर्मल चित्रगुप्त समाधिगुप्त स्वयंभू अनिवर्तिक जय विमल देवपाल अनंतवीर्याश्चेति चतुर्विंशति अनागतकालतीर्थंकरपरमाजिनदेवाश्च वः प्रीयंतां २ ॥ ॐ अनाद्यविद्याविलासदुस्तरतमःपटलपटावगुंठितजगद्द्योतिजनज्योतिःस्वरूपयथावस्थितसमस्तवस्तु-स्वरूपनिरूपणप्रवीणादिब्रह्मवदनकंजसंजातद्वादशांगचतुर्दशपूर्वप्रपंचप्रवचनपारावारपारीणा: । ॐ वृषभसेन कुंभ दृढरथ शतधनु देवशर्म धनदेव नंदन सोमदत्त सूरदत्त वायुशर्म यशोबाहु मार्गदेव अग्नि अग्निदेव अग्निगुप्त चित्राग्नि हलधर महीधर माहेंद्र वासुदेव वसुंधर अचल मेरुधर

मरुभूति सर्वयशः सर्वयज्ञ सर्वगुप्त सर्वप्रिय सर्वदेव सर्वविजय विजयगुप्त विजयमित्र विजयदल अपराजित वसुमित्र विश्वसेन सुसेन सत्यदेव देवसत्य सत्यगुप्त सत्यमित्र शर्मद विनत शंवर मुनिगुप्त मुनियज्ञ मुनिदेव गुप्तयज्ञ मित्रयज्ञ स्वयंभू भगदेव भगदत्त भगफल्गु मित्रफल्गु प्रजापति सर्वसह वरुण धनपाल मघव तेजोराशि महावीर महारथ विशाल महाज्वाल सुविशाल वज्र वज्रशाल चंद्र चंद्रचूळ मेघेश्वर कच्छ महाकच्छ नमि विनमि बल अतिबल वज्रबल नंदी महानुभोगी नंदिमित्र महानुभाव कामदेवानुपमाश्चेति आदिब्रह्मसमवशरणप्रवर्त्तमानचतुरशीतिगणधरदेवाश्च वः प्रीयंतां ॥ २ ॥ ॐ वृषभसेन सिंहसेन चारुसेन वज्रनाभि चमर वज्रचमर बलदत्त विदर्भ अनगार कुंथु धर्म मंदर जयार्य अग्निसेन चक्रायुध स्वयंभू कुंभार्य विशाख मल्लि सुप्रभ वरदत्त स्वयंभू गौनमाश्चेति चतुर्विंशति तीर्थंकरसभाभासमानगणधरमुख्याश्च वः प्रीयंतां ॥ २ ॥ ब्राह्मी आत्मगुप्ता धर्मश्री मेरुषेणा अनंतमति रतिषेणा मीनश्री वरुणश्री घोषावती धरणश्री धारणा वरसेना पद्मश्री सर्वश्री सुव्रता हरिषेणा भावश्री कुंभश्री अमरसेना पुष्पदंता मार्गश्री यक्षश्री सुलोचना चंदनाश्चेति चतुर्विंशतिगणिनीमुख्याश्च वः प्रियंतां २ ॥ श्रेयांस ब्रह्मदत्त सुरेंद्रदत्त इंद्रदत्त पद्मदत्त सोमदत्त महेंद्रदत्त पुष्यमित्र पुनर्वसु नंदन सोंदर जय विशाख धान्यसेन धर्ममित्र सुमित्र अपराजित नंदी नंदिसेन वृषभसेन दत्त वरदत्त धान्य नंदनाश्चेति चतुर्विंशतिदातृमु-

ख्याश्च वः प्रीयंतां २ ॥ भरत सत्यभाव सत्यवीर्य मित्रभाव मित्रवीर्य धर्मवीर्य दानवीर्य मघव युद्धवीर्य श्रीमंदर त्रिपिष्ट द्विपिष्ट स्वयंभू पुरुषोत्तम पुरुषवर पुंडरीक दत्त कुनाल नारायण सुभौम अजितंजय उग्रसेन अजित श्रेणिकाश्चेति चतुर्विंशतिश्रोतृमुख्याश्च वः प्रीयंतां २ ॥ गोमुख महायक्ष त्रिमुख यक्षेश्वर तुंबुरु कुसुम वरनंदी विजय अजित ब्रह्मेश्वर कुमार षण्मुख पाताल किन्नर किंपुरुष गरुड गंधर्व महेंद्र कुबेर वरुण विद्युत्प्रभ सर्वाण्ह धरणींद्र मातंगनामानश्चेति चतुर्विंशतियक्षेंद्राश्च वः प्रीयंतां २ ॥ चक्रेश्वरी रोहिणी प्रज्ञप्ती वज्रशृंखला पुरुषदत्ता मनोवेगा काळी ज्वालामालिनी महाकाली मानवी गौरी गांधारी वैरोटी अनंतमति मानसी महामानसी जया विजया अपराजिता बहुरूपिणी चामुंडी कूष्मांडी पद्मावती सिद्धायिन्यश्चेति चतुर्विंशति शासन देवताश्च वः प्रीयंतां २ ॥ नाभिराज जितशत्रु दृढराज स्वयंवर मेघरथ धरणराज सुप्रतिष्ठ महासेन सुग्रीव दृढरथ विष्णुराज वसुपूज्य कृतवर्म सिंहसेन भानुराज विश्वसेन सुरसेन सुदर्शन कुंभराज सुमित्र विजयराज समुद्रविजय विश्वसेन सिद्धार्थाश्चेति चतुर्विंशति जिनजनकाश्च वः प्रीयंतां २ ॥ मरुदेवी विजया सुषेणा सिद्धार्था सुमंगला सुसीमा पृथ्वी लक्ष्मणा जयरामा सुनंदा नंदा जयावती आर्यश्यामा लक्ष्मीमती सुप्रभा ऐरादेवी श्रीकांता मित्रसेना प्रभावती सोमा वर्मिला शिवदेवी ब्राह्मी प्रियकारिण्यश्चेति चतुर्विंशतिजिनमातृकाश्च वः प्रीयंतां २ ॥

प्रतिश्रुति सन्मति क्षेमंकर क्षेमंधर सीमंकर सीमंधर विमलवाहन चक्षुष्म यशश्वि अभिचंद्र चंद्राभ प्रसन्नजित् नाभिराजाश्चेति वर्तमानचतुर्दशकुलधराश्च वः प्रीयंतां २ ॥ कनक कनकप्रभ कनकराज कनकध्वज कनकपुंगव नलिन नलिनप्रभ नलिनराज नलिनध्वज नलिनपुंगव पद्म पद्मप्रभ पद्मराज पद्मध्वज पद्मपुंगव महापद्माश्चेति भविष्यत्कुलधराश्च वः प्रीयंतां २॥ श्रीषेण पुंडरीक वज्रनाभि वज्रदंत वज्रघोष चारुदत्त श्रीदत्त सुवर्णप्रभ भूवल्लभ गुणपाल धर्मसेन कीर्त्यौघाश्चेति अतीतद्वादशचक्रवर्तिनश्च वः प्रीयंतां २ ॥ भरत सगर मघव सनत्कुमार शांति कुंथु अर सुभौम महापद्म हरिषेण जयसेन ब्रह्मदत्ताश्चेति वर्त्तमानद्वादशचक्रवर्तिनश्च वः प्रीयंतां २ ॥ भरत दीर्घदंत मुक्तदंत गूढदंत श्रीषेण श्रीभूति श्रीकांत पद्म महापद्म चित्रवाहन विमलवाहन अरिष्टसेनाश्चेति अनागतद्वादशचक्रवर्त्तिनश्च वः प्रीयंतां २ ॥ श्रीकांत शांतचित्त वरबुद्धि मनोरथ दयामूर्ति विपुलकीर्ति श्रीराम प्रभाकर संजयंताश्चेति अतीतनवबलदेवाश्च वः प्रीयंतां २ ॥ विजय अचल सुधर्म सुप्रभ सुदर्शन नंदि नंदिमित्र राम पद्माश्चेति वर्तमाननवबलदेवाश्च वः प्रीयंतां २ ॥ चंद्र महाचंद्र चंद्रधर हरिचंद्र सिंहचंद्र वरचंद्र पूर्णचंद्र शुभचंद्र श्रीचंद्राश्चेति अनागतनवबलदेवाश्च वः प्रीयंतां २ ॥ काकुत्स वरभद्र सुभद्र सश्लिष्ट वरवीर शत्रुंजय अमितारि प्रियदत्त विमलवाहनाश्चेति अतीत नव वासुदेवाश्च वः प्रीयंतां २ ॥ त्रिपिष्ठ द्विपिष्ठ स्वयंभू पुरु-

पोत्तम पुरुषसिंह पुरुषवर पुंडरीक लक्ष्मीधर कृष्णाश्चेति वर्तमाननववासुदेवाश्च वः प्रीयंतां २ ॥ नंदि नंदिमित्र नंदिषेण नंदिभूति बल महाबल अतिबल त्रिपिष्ट द्विपिष्ठाश्चेति अनागत नव वासुदेवाश्च वः प्रीयंतां २ ॥ निशुंभ विद्युत्प्रभ रणरसिक मनोवेग चित्रवेग दृढरथ वज्रजंघ विद्युज्जंघ प्रल्हादाश्चेति अतीतनवप्रतिवासुदेवाश्च वः प्रीयंतां २ ॥ अश्वग्रीव तारक मेरुक निशुंभ कैटभ बलि प्रहरण रावण जरासंधाश्चेति वर्तमाननवप्रतिवासुदेवाश्च वः प्रीयंतां २ ॥ श्रीकंठ हरिकंठ नीलकंठ अश्वकंठ सुकंठ शिखिकंठ अश्वग्रीव हयग्रीव मयूरग्रीवाश्चेति अनागतनवप्रतिवासुदेवाश्च वः प्रीयंतां २ ॥ भीम महाभीम रुद्र महारुद्र काल महाकाल दुर्मुख निर्मुख अधोमुखाश्चेति वर्तमान नव नारदाश्च वः प्रीयंतां २ ॥ भीमावलि जितशत्रु रुद्र महारुद्र विश्वानल सुप्रतिष्ठ अचल पुंडरीक अजितंधर जितनाभि पीठ सत्यकीपुत्राश्चेति वर्तमान एकादशरुद्राश्च वः प्रीयंतां २ ॥ प्रमद संमद प्रकाम कामद भवहर मनोहर मनोभव मार काम रुद्र अंगजाश्चेति अनागत एकादश रुद्राश्च वः प्रीयंतां २ ॥ असुर नाग सुपर्ण द्विपर्ण द्विपोदधि स्तनित विद्युत अग्नि वात दिक्कुमाराश्चेति दशविध भवनेंद्राश्च वः प्रीयंतां २॥ चमर वैरोचन धरण भूतनाद वेणुदेव वेणुधारि पूर्णवशिष्ठ जलप्रभ जलकांत घोष महाघोष हरिप्रभ हरिकांत अमितगति अमितवाहन अग्निशिखि अग्निमाणव वैलंब प्रलंब प्रभंजनाश्चेति विंशतिभवनेंद्राश्च वः प्रीयंतां २ ॥ किन्नर किंपुरुष गरुड गंधर्व यक्ष राक्षस भूत पिशाचाश्चेति

अष्टविधव्यंतरेंद्राश्च वः प्रीयंतां २ ॥ किन्नर किंपुरुष गरुपुरुष महापुरुष महाकाय अतिकाय गीतरति गीतयशः पूर्णभद्र मणिभद्र भीम महाभीम सुरूप प्रतिरूप काल महाकालाभिधानाश्चेति षोडशव्यंतरेंद्राश्च वः प्रीयंतां २ ॥ चंद्रादित्यग्रह नक्षत्र प्रकीर्णक तारकाश्चेति पंचविध ज्योतिष्केंद्राश्च व प्रीयंतां २ ॥ सौधर्म ईशान सनत्कुमार माहेंद्र ब्रह्म ब्रह्मोत्तर लांतव कापिष्ठ शुक्र महाशुक्र शतार सहस्रार आनत प्राणत आरण अच्युतेंद्राश्चेति षोडश कल्पेंद्राश्च वः प्रीयंतां २ ॥ हिट्ठिमहिट्ठिम हिट्ठिममज्झिम हिट्ठिमोपरिम मज्झिमहिट्ठिम मज्झिम मज्झिम मज्झिमोपरिम उपरिमहिट्ठिम उपरिममज्झिम उपरिमोपरिमाख्य नवग्रैवेयकनिवासिनोऽहमिंद्रदेवाश्च वः प्रीयंतां २ ॥ अच्छ गच्छ वज्र वैरोचन अच्छमालिनी गच्छमालिनी वज्रमालिनी वैरोचनमालिनी आदित्यविमाननाम नवानुदिशनिवासिनोऽहमिंद्रदेवाश्च व प्रीयंतां २ ॥ विजय वैजयंत जयंत अपराजित सर्वार्थसिद्धिनामधेय पंचानुत्तरविमानवासिनोऽहमिंद्रदेवाश्च वः प्रीयंतां २ ॥ त्रिलोकविषयलोकालोकवर्तिसर्वद्रव्यपर्यायक्रमकरणव्यवधानातिक्रमसाक्षात्करणकेवलाख्यपरंज्योतिःप्रमुख स्वाभाविकानंतगुणविशेषविभूषिताः । सकलचक्रिकुरुभवार्यकर्णाद्राहमिंद्रत्रिकालसंभवित सुखानंतगुणितसुखसंभावितक्षीणपर्यायसर्वकालशाश्वतपरमोत्कृष्टसुखानंदसंदोहमास्वादयमाणाः । वीतरागद्वेषमोहाः । जातिजरामरणविप्रमुक्ताः । देवाधिदेवाः । परमनिर्वाणसंप्राप्ताः । परममांगल्यनामधेयाः ।

अष्टकर्ममल्लविलयस्पर्शी।भूतपरमावगाढगव्यक्तत्वाच्चाष्टगुणविशिष्टसकलासिद्धसमूहाश्च वः प्रीयंतां २ ॥ रोहिणी प्रज्ञप्ती वज्रश्रृंखला वज्रांकुशा अप्रतिचक्रा पुरुषदत्ता काळी महाकाळी गौरी गांधारी ज्वालामालिनी मानवी वैरोटी अच्युता मानसी महामानस्यश्चेति षोडश विद्यादेवताश्च वः प्रीयंतां २ जया विजया अजिता अपराजिता जंभा मोहा स्तंभा स्तंभिन्यश्चेति अष्ट महादेवताश्च वः प्रीयंतां २ ॥ श्री ह्री धृति कीर्ति बुद्धि लक्ष्मी शांति पुष्ट्यश्चेति अष्ट दिक्कन्यकाश्च वः प्रीयंतां २ ॥ नित्यप्रवृत्तनारकायोगकरणयुपतपक्षतिप्रभृतिसमस्ततिथिप्रभावप्रयोजनप्रधानाः यक्ष वैश्वानर राक्षस नभृत पन्नग असुर कुमार पितृ विश्वमालिनी चमर वैरोचन महाविद्यु मार विश्वेश्वर पिंडाशिनश्चेति पंचदश तिथिदेवाश्च वः प्रीयंतां २ ॥ अनंत कुलिक वासुकी शंखपाल तक्षक पद्म महापद्म कर्कोटक जयविजयादि अष्ट महानागाश्च वः प्रीयंतां २ ॥ इंद्र अग्नि यम नैर्ऋत वरुण वायु कुबेर ईशान धरणींद्र चंद्राश्चेति दश दिक्पालदेवाश्च वः प्रीयंतां २ ॥ आदित्य सोम मंगळ बुध बृहस्पति शुक्र शनि राहु केतु नाम नवग्रहाश्च वः प्रीयंतां २ ॥ काल निकाल लोहित कनक कनकस्थान अंतरद कच यव दुंदुभि रत्ननिभ रूप निर्भास नील नीलभास अश्व अश्वस्थान कोश कंशवर्ण शंख शंखपरिमाण शंखवर्ण उदय पंचवर्ण तिल तिलपुच्छ क्षारराशि धूम धूमकेतु एकसंस्थान अक्ष कलेवर वकट अभिन्नसंधि ग्रंथिमान चतुःपाद विद्युज्जिह्व नभ

गहरा निलय काल कालकेतु अनय निदाघ विपुल काल महाकाल रुद्र संतान संभव सर्वा-
धीश शांति वस्तून निश्चल प्रलंब निर्मंत्र ज्योतिष्मत स्वयंप्रभ भासुर विरज निर्दुःख वीत शोक
सीमंकर क्षेमंकर अभयंकर विजय वैजयंत अपराजित विमाल त्रस्त विजयिष्णु विकस करि-
काष्ठ एकजटि अग्नि ज्वाल ज्वालकेतु क्षीरम्स अघ श्रवण राहु महाग्रह भावग्रह कुज शनि
बुध शुक्र गुरवश्चेति अष्टाशीति ग्रहाश्च वः प्रीयंतां २ ॥ ग्राम नगर खेड खर्वड मडंब
पत्तन द्रोणामुख संवाहन घोष राजधानी जिनधाम प्रासाद गोपुर गृह मंडप समस्त
वास्तुवास्तव्यास्ताः समर्चनीयाः । ब्रह्म इंद्र अग्नि यम नैर्ऋति वरुण वायु कुबेर ईशान आर्य
विवस्वत् मित्र भूधर सविंद्र सावित्र इंद्र इंद्रराज रुद्र रुद्रराज अप अपवत्स पर्जन्य जयंत
भास्कर सत्यक भृश अंतरिक्ष पुष वितथ राक्षस गंधर्व भृंगराज मृष दौवारिक सुग्रीव
पुष्पदंत असुर शोष रोग नाग मुख्य भल्लाट मृगदेव अदिति उदिति विचारी पूतना पाप-
राक्षसी चरकीनामधेया वास्तुदेवताः । सर्वे गुरुभक्ता अक्षीणकोशकोष्ठागारा भवेयुः । दानतपो-
वीर्यधर्मानुष्ठानं नित्यमेवास्तु । मातृ पितृ भ्रातृ पुत्र पौत्र कलत्र गुरु सुहृत् स्वजनसंबंधिबंधुवर्ग-
सहितस्य अस्य यजमानस्य धनधान्यैश्वर्यद्युतिबलायुर्यशस्कीर्तिवृद्धिवर्धनं भवतु । सामोदप्रमदा
भवंतु । ग्रामदेवताः प्रसीदंतु । गृहदेवताः प्रसीदंतु । कुलदेवताः प्रसीदंतु । दीक्षागुरवः प्रसीदंतु।

शिक्षागुरवः प्रसीदंतु । विद्यागुरवः प्रसीदंतु । चातुर्वर्णसंघाः प्रसीदंतु । शांतिर्भवतु । कांतिर्भवतु तुष्टिर्भवतु । पुष्टिर्भवतु । सिद्धिर्भवतु । वृद्धिर्भवतु । अविघ्नमस्तु । आरोग्यमस्तु । आयुष्यमस्तु । शिवंकर्मास्तु । कर्मसिद्धिरस्तु । शास्त्रसमृद्धिरस्तु । इष्टसंपदस्तु । अरिष्टनिरसनमस्तु । धनधान्यसमृद्धिरस्तु । काममांगल्योत्सवाः संतु । शाम्यंतु घोराणि । शाम्यंतु पापानि । पुण्यं वर्धतां । धर्मो वर्धतां । श्रीर्वर्धतां । आयुर्वर्धतां । कुलं गोत्रंचाभिवर्धतां । स्वस्ति भद्रं चास्तु वः । स्वस्ति भद्रं चास्तु नः । हतास्ते परिपंथिनः । शत्रवो निधनं यांतु । निःप्रतिघमलमस्तु । शिवमतुलमस्तु ॥ यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितं । अभयं क्षेममारोग्यं स्वस्तिरस्तु विधीयते ॥ २ ॥ श्रीशांतिरस्तु शिवमस्तु जयोऽस्तु नित्यमारोग्यमस्तु तव पुष्टिसमृद्धिरस्तु । कल्याणमस्तु सुखमस्त्वभिवृद्धिरस्तु दीर्घायुरस्तु कुलगोत्रधनं सदास्तु ॥ ३ ॥ भूता भवंतो भव्याश्च जिनाधीशा गणाधिपाः । गणिन्यो दातृमुख्याश्च श्रोतारो यक्षनायकाः ॥ ४ ॥ यक्ष्यो जिनानां पितरो मातरो मनवस्तथा । चक्रिणो बलदेवाश्च केशवाः प्रतिकेशवाः ॥ ५ ॥ नारदाश्च ततो रुद्राश्चतुर्विधसुराधिपाः । रोहिण्याद्या जयाद्याश्च श्र्याद्यस्त्रिधिदेवताः ॥ ६ ॥ महानागाश्च दिक्पाला ग्रहवास्तुसुरास्तथा । ग्रामाधिदेवता यस्मिन् देवताः कुलदेवताः ॥ ७ ॥ एते देवगणाः सर्वे भव्याः पुण्याहवाचने । ततो देवाः प्रसीदंतु विघ्ना नश्यंतु सर्वथा ॥ ८ ॥

महायज्ञसमारंभे गंधाम्बुस्नपने तथा । गंधोदकप्रदाने च शांतिपुष्ट्याद्युपक्रमे ॥ ९ ॥ आधानादि-क्रियारंभे ग्रहवक्रत्वसंभवे । परमंत्रप्रयोगे च महोत्पाते महारुजि ॥ १० ॥ सर्वेष्वपि च होमेषु बीजानां सेचने तथा । पुण्याहवाचना पुण्या भण्या संकल्पपूर्विका ॥ ११ ॥ इति पुण्याह-वाचनम् ॥

## ॥ अथ दशदर्भः ॥

पवित्रभूमिं परितो दिशासु पूर्वादिकासु प्रथितान् प्रशस्तान् । अशेषविघ्नोपशमाय दर्भान् संस्था-पयामो हरितान् क्रमेण ॥ १ ॥ दर्भखंडं समादाय विश्वविघ्नैकखंडनं । क्षिपामि ब्रह्मणः स्थाने भक्त्या ब्रम्हमहामहे ॥ २ ॥ ॐ ऱ्हीं दर्पमथनाय नमः स्वाहा ब्रम्हदर्भः ॥ मघोनककुब्भागे दर्भं निर्भग्नविघ्नकं । भोगैश्वर्याभिवृध्यर्थं क्षिपामि क्षिप्तकल्मषं ॥ ३ ॥ ॐ ऱ्हीं अनंतज्ञानाय अनं-तदर्शनाय अनंतवीर्याय अनंतसुखात्मकाय पूर्वदिग्मुखे दर्भमवस्थापयामि स्वाहा इंद्रदर्भः ॥ संताप-पापनोदार्थं प्राणिनां प्रक्षिपाम्यहं । दर्भं हुताशनाशायां सर्वज्ञसवनोत्सवे ॥ ४ ॥ ॐ ऱ्हीं ब्रह्मणे स्वाहा । प्रजापतये स्वाहा । जिनाय स्वाहा । जिनोत्तमाय स्वाहा । धवाय स्वाहा । धवोत्तमाय स्वाहा । शुचिष्ठाशुचिष्टेपु कोणाकोणेपु आग्नेय्यां दिशि दर्भमवस्थापयामि स्वाहा अग्निदर्भः ॥ तीक्ष्णं दक्षिणाशायां दर्भं लक्ष्म्या समीक्षितं । क्षिपाम्यभिषवारंभे यमारंभविभित्सया ॥ ५ ॥ ॐ ऱ्हीं

अनंतवीर्याय जितेंद्रियाय नमः दक्षिणस्यां दिशि दर्भमवस्थापयामि स्वाहा यमदर्भः ॥ नगरोहणदि-
ग्भागे निःशेषक्लेशनाशनं । विदधे दर्भमारब्धजिनेंद्राभिषवक्रियं ॥ ६ ॥ ॐ ह्रीं परमब्रह्मणे नैर्ऋत्यां
दिशि दर्भमवस्थापयामि स्वाहा नैर्ऋतिदर्भः ॥ त्रैलोक्येशस्य नाथाय नमस्कृत्वा जिनेशिने। वरु-
णस्य हरिद्भागे स्थापये दर्भमद्भुतं ॥ ७ ॥ ॐ ह्रीं परममंगलाय परमपवित्राय परमनिर्वाणकारणाय
नमः अपरस्यां दिशि दर्भमवस्थापयामि स्वाहा वरुणदर्भः ॥ मातरिश्वस्य दिग्देशे विश्वविश्वंभर-
प्रभोः । अभिषेकसमारंभे दर्भगर्भं प्रकल्पयेत ॥ ८ ॥ ॐ ह्रीं पंचकल्याणसंपूर्णाय वायव्यां
दिशि दर्भमवस्थापयामि स्वाहा वायव्यदर्भः ॥ यक्षरक्षितक्षेत्रेषु क्षिपाम्यक्षूणवीक्षणं । यागदिक्षु
क्षणे क्षेमं विदधे दर्भमद्भुतं ॥ ९ ॥ ॐ ह्रीं त्रैलोक्यनाथाय त्रिलोकमहिताय शुचिरत्नत्रयप्रदेश-
नकराय उत्तरस्यां दिशि दर्भमवस्थापयामि स्वाहा यक्षदर्भः ॥ सर्वस्य शांतये शांतं नत्वा श्रीवृ-
क्षलक्षितं । वर्धमानेशमैशान्यां दर्भं च विदधे दिशि ॥ १० ॥ ॐ ह्रीं नमो नवकेवललब्धिसम-
न्विताय देवाधिदेवाय ऐशान्यां दिशि दर्भमवस्थापयामि स्वाहा ईशानदर्भः ॥ स्फूर्जत्फणामणि-
युतोरगवृंदवंद्य संसेव्यमानकमलेक्षणनागराज । अस्मिन् जरामरणनाशमहोत्सवेऽहं दर्भं ददामि
सजलाक्षतचंदनं ते ॥ ११ ॥ पूर्वैशानविदिग्भागे शांत्यर्थं जगतामिह । पातालवासिने दर्भं
क्षिपामि भुजगेशिने ॥ १२ ॥ ॐ ह्रीं क्रों फणालंकृतमूर्तये धरणेंद्राय कूर्मवाहनसमन्विताय

ईशानेंद्रमध्ये अधरस्यां दिशि दर्भमवस्थापयामि स्वाहा धरणेंद्रदर्भः ॥ जैवातृके हिमसुशीतल सिंहयान लोकप्रदीपपर रोहिणिसौख्यधाम । यक्षे शशांक मुविभूषण सूरिधाम दर्भं ददामि हरिचंदनमक्षतं ते ॥ १३ ॥ जैनेंद्रदृष्टिविशुध्यर्थं प्रत्यगूनैर्ऋतिकाष्ठयोः ॥ अंतराळे कुशन्यासं करोमि श्वेतभानवे ॥ १४ ॥ ॐ ऱ्हीं क्रौं हरिणलांछनसमन्विताय सोमाय नैर्ऋतिवरुणमध्ये ऊर्ध्वायां दिशि दर्भमवस्थापयामि स्वाहा सोमदर्भः ॥

## ॥ अथ भूदेवतार्चनम् ॥

जलमलयजाक्षतपुष्पचरुप्रदीपधूपफलनिवहैः । अर्हन्महामहे महीमहमध्याध्वरे विदधे ॥ १ ॥ ॐ ऱ्हीं निरजसे नमः । ॐ ऱ्हीं शीलगंधाय नमः । ॐ ऱ्हीं अक्षताय नमः । ॐ ऱ्हीं विमलाय नमः । ॐ ऱ्हीं परमसिद्धाय नमः । ॐ ऱ्हीं ज्ञानोद्योताय नमः । ॐ ऱ्हीं श्रुतधूपाय नमः । ॐ ऱ्हीं अभीष्टफलदाय नमः । ॐ ऱ्हीं भूर्भूमिदेवतायै भूम्यर्चनं करोमि स्वाहा । भूम्यर्चनं ॥

## ॥ इंद्रालंकारः ॥

ॐ मदीयपरिणाममसमानविमलतमसलिलस्नानपवित्रीभूतसर्वांगयष्टिः । सर्वांगीणार्द्रहरिचंदनसौगंध्यादिग्विदिग्विवरो हंसांसधवलधौतदुकूलांतरीयोत्तरीयः ॥ ॐ श्वेतवर्णे सर्वोपद्रवहारिणि सर्वजनमनोरंजिनि परिधानोत्तरीयं धारिणि हंहं झंझं वंवं संसं तंतं पंपं परिधानोत्तरीयं धारयामि स्वाहा ।

वस्त्राभरणं ॥ १ ॥ अतिनिर्मलमुक्ताफलललितं यज्ञोपवीतमतिपूतं । रत्नत्रयमिति मत्वा करोमि कलुषापहरणमाभरणं ॥ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्राय नमः स्वाहा । यज्ञोपवीतसंधारणं ॥ २ ॥ नवसुगंधनानाप्रसूनरचितां विचित्रतरमालां । गुणमणिमालामिव जिनपादादादाय धार्ये शिरसा ॥ ॐ ह्रीं सम्यक्चारित्राय नमः स्वाहा । शेखरमंत्रः ॥ ३ ॥ सद्धर्मनिर्मितसुरत्नविराजमानं सत्कर्णकुंडलयुगं वरमोक्षलक्ष्म्याः । कर्णे क्रियेऽतिललितं मणिभूषणानां ज्ञानोत्सवे सपदि गोपतिना जिनस्य ॥ ॐ ह्रीं सम्यग्ज्ञानाय नमः स्वाहा । कुंडलमंत्रः ॥ ४ ॥ यत्सर्वरत्नरचितं रचितेंद्रचापव्यापिप्रभाहतहरिद्विवरांधकारं । स्वर्गापवर्गसुखसारमिनप्रसादाच्छ्रीकंकणं करयुगे कलितं करोमि ॥ ॐ ह्रीं सम्यग्दर्शनाय स्वाहा । कंकणमंत्रः ॥ ५ ॥ शुद्धरत्नरचितामिव सुभगायाः सुमुक्तिकन्यायाः । करवाणि करगतां यां मदंगुलाममलमुद्रिकामुद्रां ॥ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्राय नमः स्वाहा । मुद्रिकामंत्रः ॥ ६ ॥ धृत्वा शेखरपट्टहारपदकं ग्रैवेयकालंबकं । केयूरांगदमध्यबंधुरकटीसूत्रं च मुद्रान्वितं ॥ चंचत्कुंडलकर्णपूरममलं पाणिद्वये कंकणं । मंजीरं कटकं पदे जिनपतेः श्रीगंधमुद्रांकितं ॥ षोडशाभरणं ॥ ७ ॥

---

१ वस्त्राभरणं–पीतांबर एक नेसणें व पांघरणें. २ यज्ञोपवीतसंधारण–जानवें गळ्यांत घालणें. ३ शेखरमंत्रः––शेंडीच्या गांठीला फुलांची माळ बांधणें. ४ कुंडलमंत्रः–कानांत कुंडल घालणें. ५ कंकणमंत्रः–दोनी हातांत कंकण घालणें ६ मुद्रिकामंत्रः–हातांत मुद्रिका घालणें. ७ षोडशाभरणंः–फुलाची माळ, पीतांबर, मोत्यांचा हार, पदक, मोत्याचा कंठा. गोप, बाजूबंद, पैंजण, कंबरपट्टा, कडदोरा, मुद्रिका, कुंडल, एक प्रकारचें कर्णभूषण, कंकण, तोडे, पांचे, हे सर्व अंगावर घालणें

## ॥ अथ चतुर्द्वारपालानुकूलनं ॥

मंडपस्यास्य रक्षार्थं कुमुदांजनवामनान् । पुष्पदंतं च पूर्वादिद्वारेषु स्थापयाम्यहं ॥ तोरणोपांतापसव्यदेशेषु कुंकुमाक्तपुष्पाक्षतं क्षिपेत् ॥ १ ॥ ( येथें केशरानें रंगविलेले तांदूळ व फुलें तोरणद्वाराच्या उजव्या बाजूकडून चारी दिशेला टाकणें. ) मुक्तास्वस्तिकमास्थितं नवसुधाधौतं मुखैः पंचभिः । भांतं नव्ययवप्ररोहरुचिरैः कुंभं दृशा लालयेत् ॥ रंभास्तंभरुचाश्मगर्भखचितं सौवर्णदंडं दधत् । प्राग्द्वाराधिकृत प्रतीच्छ कुमुद त्वं पूतमेतं बलिं ॥ ॐ ऱ्हीं कुमुदप्रतीहार निजद्वारे तिष्ठ २ ठठ इदमर्घ्यं पाद्यं जलं गंधमक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ ॥ शांतिधारां ॥ १ ॥ मुक्तास्वस्तिक० लाहि त्वं बलिमंजनांजनरुचे द्वारे स्थिते दक्षिणे ॥ ॐ ऱ्हीं अंजनप्रतीहार दक्षिणद्वारे तिष्ठ २ ठठ इदमर्घ्यमित्यादि ॥ २ ॥ मुक्तास्वस्तिक० प्रत्यग्द्वारनियुक्त वामन बलिं कुंदद्युते स्वीकुरु ॥ ॐ वामनप्रतीहार पश्चिमद्वारे तिष्ठ २ ठठ इदमर्घ्यमित्यादि ॥ ६ ॥ मुक्तास्वस्तिक० स्रक्पुष्पोज्वल पुष्पदंत बलिना तृप्यस्वोत्तरद्वाःस्थिते ॥ ॐ ऱ्हीं पुष्पदंतप्रतीहार उत्तरद्वारे तिष्ठ २ ठठ इदमर्घ्यमित्यादि ॥ ४ ॥

## ॥ अथ यागमंडलवर्त्तनविधानम् ॥

नागेंद्रचूर्णेन सितेन रैद पीतेन नीलप्रभ नीलकेन । रक्ताभ रक्तेन लिखामिताभ कृष्णेन सन्मंडलमिष्टिहेतवै ॥ ॐ ऱ्हीं श्रीं क्लीं श्वेतपीतहरितारुणकृष्णमणिचूर्णं स्थापयामि स्वाहा । चूर्ण-

पंचकस्थापनं ॥ १ ॥ चंद्राभ चंद्राभविमान माल्यभूषांगरागांबर नागराज । हस्तांबुजस्थार्जुनरत्न-
चूर्णैर्वेदीं लिखागत्य जिनेंद्रयज्ञे ॥ ॐ ह्रीं नागराजाय अमिततेजसे स्वाहा । श्वेतचूर्णस्थापनं
॥ १ ॥ हेमाभ हेमाभविलेपनस्राग्विमानभूषांशुक यक्षराज । हस्तार्पितप्रत्नसुवर्णचूर्णैर्वेदीं लिखा-
गत्य जिनेंद्रयज्ञे ॥ ॐ ह्रीं हेमप्रभाय धनदाय ठठ स्वाहा । पीतचूर्णस्थापनं ॥ २ ॥ हरि-
त्प्रभामर्त्य हरित्प्रभास्रग्वासोविमानाभरणांगराग करात्तगारुत्मजरत्नचूर्णैर्वेदीं लिखागत्य जिनेंद्र-
यज्ञे ॥ ॐ ह्रीं हरितप्रभाय शत्रुमथनाय स्वाहा । हरितचूर्णस्थापनं ॥ ३ ॥ रक्तप्रभामर्त्य जपा-
भभूषास्रग्वर्णकालंकरणाभ्रयान कराब्जगात्कुरुविंदचूर्णैर्वेदीं लिखागत्य जिनेंद्रयज्ञे ॥ ॐ ह्रीं
रक्तप्रभाय सर्ववशंकराय वषट् स्वाहा । अरुणचूर्णस्थापनं ॥ ४ ॥ भृंगांगवृंदारक कृष्णवस्त्रवि-
लेपनाकल्पविमानधाम । पाणिप्रणीतासितरत्नचूर्णैर्वेदीं लिखागत्य जिनेंद्रयज्ञे ॥ ॐ ह्रीं कृष्ण-
प्रभाय मम शत्रुमथनाय फट् घे घे स्वाहा कृष्णचूर्णस्थापनं ॥ ५ ॥ शचीकटाक्षेषुशरव्यशक्र
त्वमेत्य विघ्नौघविघातहेतोः । करस्फुरद्वज्ररजोभरेण कोणेषु वज्राणि लिखस्व वेद्याः ॥ ॐ ह्रीं
वेदिकोणेषु प्रत्येकं हीरकं न्यसेत् । वज्रस्थापनं ॥ ६ ॥ चतुरस्रं क्षितिबीजाभं दिग्विदिग्वीतलांतकं ।
वज्रांकितचतुष्कोणं पीताभं क्षितिमंडलं ॥ ७ ॥

# ॥ अथ कलशन्यासविधानम् ॥

॥ गद्यं ॥

स्वर्गाग्रमेव निरर्गलं पुष्टकामे । पवमानचलितललितकेतुमालाविलसिते । भाभारभास्वन्माणिक्यमयस्तंभसंभृते । नानारत्नरचितविचित्रनेत्रपिनद्धवितत वितानातिशयशोभिते । जैने शशिविशदयशोराशिबिंबाभिनवमुक्ताफललंबूषभूषिते । सुगंधिसलिलसंसिक्तसमुत्सर्पद्धराभूरिसौरभाभिरामे । विन्यस्तविविधार्चनाभिषेकपरिकरपरिपूर्णे । पूर्णकलशचतुष्टयमध्यस्थाभिषेकपीठे । महाभिषेकमंडपे । दर्भस्वास्तिकविन्यासशालिशालिनिकरसमास्तरणकल्याणेषु । भगवदर्हदभिषवणधरणिकोणेषु । अष्टोत्तरशतकलशस्थानेषु ॥ सूत्राणि त्रिंशदष्टोत्तरशतकलशान् न्यासतः पंच कुंभान् ।

---

१ पीठासमोर निर्मिलेल्या चौकोनी कट्ट्यावर उभ्या १५ व आडव्या १५ अशा ३० दोऱ्या मारणें ह्मणजे त्यांची घरें १९६ पडतात. त्यापैकीं पूर्वादि चारी दिशेचा मार्गाबद्दल एकंदर ४० घरें सोडणें. पहिल्या दोन ओळींत व चौथ्या व सहाव्या ओळींत जितकीं घरें असतील त्या प्रत्येक घरांत एक शेरभर भात घालून पसरणें व त्यावर तांदूळही घालून पसरणें. त्याजवर स्वस्तिक यंत्र काढणें. तें असें कीं मध्यभागीं चार दळांचे कमळ काढून त्याच्या सभोंवतीं वर्तुळाकृतीनें

दिग्मध्ये द्विशमार्गे प्रथमपदयुगे द्वे चतुर्थे च पष्ठे ॥ मध्ये तीर्थांबुपूर्णान् निखिलपरिमलद्रव्यादि-द्रव्योपधार्चान् । अर्हज्जन्माभिषेके विधिवदहमिह स्थापये पीठिकाग्रे ॥ १ ॥ प्रस्थं प्रस्तीर्य शालीनां प्रत्येकं परिशोभितं । तदूर्ध्वे तंडुले पद्मं चतुर्दलसमन्वितं ॥ २ ॥ कर्णिकायां लिखेत्स्वस्तिरेखां तत्कोष्ठतः श्रियं । दलेषु ऱ्हीं चतुष्कं च बाह्ये वा क्षितिमंडलं ॥ ३ ॥ अर्धचंद्रघटीरूपं पंचपत्रांबुजाननं । नांतलांताग्रदिक्कोणं धवलं जलमंडलं ॥ ४ प्रत्येककलशान् पूर्णान् चंदनाक्षतचर्चितान् । पद्मादर्शमुखान् बीजपूरकेणोपशोभितान् ॥ ५ ॥ श्वेतद्विगुणसूत्रेण वेष्टितान् शोभनं यथा । फलपल्लवसद्दूर्वान् दर्भगुच्छाद्यलंकृतान् ॥ ६ ॥ द्रोणपानीयसंपूर्णान् पृथक्कुंभान् मनोहरान् । आढकाद्यंबुसंपूर्णान् छेदकालादिदूरगान् ॥ ७ ॥ एवं कुंभान् सुसंस्थाप्य शालिप्रस्ताग्बाह्यतः । पंचकं चतुरस्राणां मंडलानां मनोहरं ॥ ८ ॥ श्वेतपीतहरिद्रक्तकृष्णचूर्णैः प्रपूरयेत् । नानाविधमनोहारिफलवृंदैरलंकृतं ॥ ९ ॥ पूजां कृत्वा क्रमात्सम्यक् स्नापयेत्परमेश्वरं ॥

---

एक मडल काढणें, व त्या मडलाबाहेर एक चौकोनी मडळ काढणें. त्यानतर [कर्णिकेत] स्वस्तिक काढणें. त्याच्या कोष्ठांत श्री हें अक्षर लिहावें चारी दळात ऱ्हीं हें अक्षर लिहावें. वर्तुळाकृती मंडळात पूर्वादि चार दिशेला पं हें अक्षर लिहावें. अग्नयादि चार दिशेला व हे अक्षर लिहावें. या मडलाबाहेर काढलेल्या चौकोनी मडलात पूर्वादि चार दिशेला क्ष हें अक्षर व या मंडलाच्या आंतल्या कोणीं क्षीं हें लिहावें. याप्रमाणे काढलेल्या यत्रावर घट व अळशक्षांत दुपदरी पांढऱ्या सुतानें कलश सचित्रित गुडाळून ठेवणें. याचप्रमाणें मध्यभागीं त्याम कळस ठेवणें पसरलेल्या भात बाहेर पचवर्ण घालणें.

## ॥ अथ कलशालंकारः ॥

रैरत्नाखिलगंधपुष्पकलितैस्तीर्थाम्बुभिः पूरितान् । भास्वत्पंकजबीजपूरवदनान् सच्छ्वेतसूत्रावृतान् ॥ चोचैश्चंदनपंकमग्नतनुभिः शाल्यक्षतैश्चर्चितान् । स्वग्भिर्मंगलपल्लवैश्च कलशान् संस्थापये भूषितान् ॥ इति कलशालंकारं कुर्यात् ॥

## ॥ अथ पंचकुंभस्थापनविधिः ॥

संस्थाप्याढकवारिपूर्णकलशान् पद्मापिधानाननान् । प्रायो मध्यघटान्वितानुपहितान् सद्गंधचूर्णादिभिः ॥ द्रोणांभःपरिपूरितांश्चतुरशः कोणेषु यज्ञक्षितेः । कुंभान् न्यस्य समंगलेषु निदधे तेषु प्रसूनं वरं ॥ १ ॥ शालिस्वस्तिकदर्भगर्भितचतुःकोणेषु वेद्याः स्वयं । सत्तीर्थोदकसंभृतान् प्रविलसत्पुष्पोत्करैरर्चितान् ॥ श्रीमत्पल्लवसत्फलांश्च कमलान् सद्रत्नगर्भोज्ज्वलान् । सत्कुंभांश्चतुरश्चतुष्कविधिमान् संस्थापये सन्मुदा ॥ २ ॥ ॐ ह्रीं स्वस्तये कलशस्थापनं करोमि स्वाहा । स्वस्तये कलशस्थापनं ॥ ( या मंत्राने ४ न्यासकलशावर अक्षता टाकणें. ) ॐ ह्राँ ह्रीं ह्रूँ ह्रौं ह्रः

---

१ सर्व कलशांत पाणी, रत्न, गंध, पुष्प, सुवर्ण घालून त्याच्या तोंडास सुंदर ५ पानें लावून त्याजवर कमळ ठेवणें. त्यावर म्हाळुंग अथवा नारळ ठेवणें. सर्व कलशांना फुलांची माळ घालणे. व दर्भकूर्च खोवणें. याचें प्रमाण ३।५।७।९।१२ अंगुळ असणें. सर्व कलशास गर्भाक्षत लावून अग्रभागीं फूल चढविणें. कलश ११३.

नमोऽर्हते भगवते । पद्मस्तथा महापद्मस्तिगिंच्छः केसरी तथा । पुंडरीको महापुंडरीकश्चैते महाऱ्हदाः ॥ १ ॥ गंगा सिंधुनदी रोहिद्रोहितास्या महानदी । हरिच्च हरिकांता च सीता सीतोदयान्विता ॥ २ ॥ नारी च नरकांता सुवर्णकूला महानदी । रूप्यकूला तथा रक्ता रक्तोदा च महासरित् ॥ ३ ॥ क्षीरोदपद्मकासारपुण्यशैलोत्थनिर्झराः । उपनद्योऽपि का नद्यः कावेरीयमुनादयः ॥ ४ ॥ वापीकूपतटाकाद्यास्तत्रन्या अपि देवताः । तीर्थोदकप्रदानेन प्रसीदंतु जिनोत्सवे ॥ ५ ॥ एवं वचनात्मानं मंत्रमुद्घोष्य सामाजिकाः । हस्तप्रत्ययेन विशुद्धकुसुमांजलिपुण्याहकलशं संस्थाप्यानि । ॐ शुद्धजल सुवर्णघटं प्रक्षालितपरिपूरितनवरत्नगंधपुष्पाक्षताद्यर्चितमामोदकं पवित्रं कुरु २ झ्रौं २ वं २ मं २ हं २ सं २ तं २ पं २ द्रां २ द्रीं २ द्रावय २ हं सः स्वाहा । कलशजलशुद्धिः ॥ ( हा मंत्र ह्मणत कलशावर पाणी धरणें. ) तीर्थांबुपूर्णकलशांस्त्रिगुणीकृतानां । सद्बीजपूरकुशदर्पणपल्लवास्यान् ॥ संस्थापयामि धवलाक्षतचर्चितानां । कोणेषु पीतनिकटेषु वरप्रदायान् ॥ १ ॥ ॐ ऱ्हीं चतुष्कोणेषु कुंभान् स्थापयामि स्वाहा । चतुष्कोणेषु कलशान् स्थापयेत ॥ नीलोत्पलं क्षीरसुपूर्णकुंभं कर्पूरसंमिश्रिततीर्थवारं । जिनाभिषेकादिविधीवपक्षं संस्थापयेऽहं जिनभक्तियुक्तः ॥ २ ॥ ॐ ऱ्हीं क्रों नीलमणिगिनिर्मितं अष्टयोजनगंभीरं सप्तक्रोशोच्छेदं

---

१ हा मंत्र ह्मणत ईशान्य न्यासकलशावर अक्षता व फुलें टाकीत कलशस्थापन करणें. याप्रमाणें आग्नेय, नैर्ऋत्य, वायव्य व मध्यकुंभ यांचेंही स्थापनें करणें.

चतुःक्रोशप्रमाणमुखं क्षीरोदधिजलपरिपूर्णानंतमहानंतगुडुगुडुगर्जितनिनादं नीलनामं ईशान्यां दिशि प्रथममंगलकुंभं स्थापयामि स्वाहा। स्थापितेऽस्मिन् मोदकानि सचंदनानि साक्षतानि सपल्लवानि सहिरण्यानि समंतात् पुष्पाक्षतं क्षिपेत ॥ अभ्यर्च्य कलशं तोयप्रवाहैश्चंदनैरहं। अक्षतैः कुसुमैरन्नैर्दीपधूपफलैरपि ॥ ॐ ऱ्हीं नेत्राय संवौषट् कलशार्चनं करोमि स्वाहा। कलशार्चनं ॥ ( या मंत्रानें ईशान्य कलशाला अर्घ्य देणें व पुढील कलशांनाही जेथल्या तेथें देणें. )

अरूणवर्णैः कृतरत्नकुंभं घृतप्रपूर्णं दिशमग्निभागं ॥ जिनेंद्रदेवाभिषवं जलाद्यैराराधयेऽहं जिनयज्ञभूमौ ॥ ३ ॥ ॐ ऱ्हीं क्रों अरुणवर्णविनिर्मितं अष्टयोजनगंभीरं सप्तक्रोशोच्छेदं चतुःक्रोशप्रमाणमुखं क्षीरोदधिजलपरिपूर्णानंतमहानंतगुडुगुडुगर्जितनिनादं अरुणनामं आग्नेय्यां दिशि द्वितीयमंगलकुंभं स्थापयामि स्वाहा। स्थापितेऽस्मिन् मोदकानि सचंदनानि साक्षतानि सपल्लवानि सहिरण्यानि समंतात् पुष्पाक्षतं क्षिपेत् ॥ अभ्यर्च्य कलशं तोयप्रवाहैश्चंदनैरहं। अक्षतैः कुसुमैरन्नैर्दीपैर्धूपैः फलैरपि ॥ ॐ ऱ्हीं क्रों नेत्राय संवौषट् कलशार्चनं करोमि स्वाहा। कलशार्चनं ॥ श्रीकृष्णकुंभं पयसा सुपूर्णं श्रीखंडकर्पूरसुमिश्रितेन। जिनेंद्रदेवाभिषवं जलाद्यैः संस्थापये नैर्ऋतिदिग्विदेशं ॥ ४ ॥ ॐ ऱ्हीं क्रों कृष्णवर्णविनिर्मितं अष्टयोजने॰ कृष्णनामं नैर्ऋत्यां दिशि तृतीय-

---

१ ज्या शब्दापुढें किंवा श्लोकारंभ चरणाक्षरापुढें असें ( • ) सूचक चिन्ह आहे तें पाहून त्या शब्दापुढील शब्द श्लोकांचे पुढचे चरण तोंडपाठ नसल्यास वरील श्लोकाच्या मंत्रांत व मंत्रापुढील श्लोकांत पहावें.

मंगलकुंभं स्थापयामि स्वाहा । स्थापितेऽस्मिन सोदकानि० क्षिपेत ॥ अभ्यर्च्य कलशं० कलशार्चनं ॥ शशिप्रभाकुंभदधिप्रपूर्णं सद्द्रव्यगंधैः परिमिश्रितं तं । सानंददानं जिनपाभिषेके संस्थापयेऽहं दिशि वायुदेशे ॥ ५ ॥ ॐ ह्रीं क्रों श्वेतवर्णविनिर्मितं अष्टयोजन० श्वेतनामं वायव्यां दिशि चतुर्थमंगलकुंभं स्थापयामि स्वाहा । स्थापितेऽस्मिन् सोदकानि० क्षिपेत् ॥ अभ्यर्च्य० । कलशार्चनं ॥ सुवर्णपूर्णकलशं कृतरत्नकुंभं शक्रं समुत्तरतरं शशिपूर्णनीरं । श्रीखंडकर्पूरसुगंधसुपल्लवाद्यैः संस्थाप्य पूर्णकलशं दिशि पूर्वभागे ॥ ६ ॥ ॐ ह्रीं क्रों सुवर्णवर्णविनिर्मितं अष्टयोजन० सुवर्णनामं मध्यपूर्णकुंभं पंचमकुंभं स्थापयामि स्वाहा । स्थापितेऽस्मिन् सोदकानि० क्षिपेत् ॥ अभ्यर्च्य० । कलशार्चनं ॥ जलैर्गंधक्षोदैः कलमसदकैः पुष्पनिवहैर्हविर्भिर्दीपौघैः स्फुरदगरुधूपैः फलशतैः । यजामि प्रीत्याहं कलशनिकरं जैनस्नपनक्रियारंभेऽमुष्मिन् निखिलजगदानंदजनने ॥ ७ ॥ ॐ ह्रीं नेत्राय संवौषट् स्वाहा । कलशार्चनं ॥ ( या मंत्रानें बाकी सर्व १०८ कलशांना एक अर्घ्य देणें. ) सत्पल्लवांचितमुखान् कलधौतरूप्यताम्रारकूटघटितान् पयसा सुपूर्णान् । संबाह्यतामिवगतांश्चतुरस्रकुंभान् संस्थापयामि कलशान् जिनवेदिकांते ॥ ८ ॥ ॐ ह्रीं चतुःकोणपूर्णकुंभान् स्थापयामि स्वाहा ॥ ( या मंत्रानें चार कोणकुंभांची स्थापना करणें. ) वज्रवैडुर्यमाणिक्यपुष्परागप्रवालयुक् । गोमेदकेंद्रनीलादिरत्नद्रव्यमितीष्यते ॥ ९ ॥ ॐ ह्रीं वज्रवैडूर्यादिनवरत्न-

निक्षेपणं ॥ ( या मंत्रानें नारळ घालणें. कानडीभाषेंत याला कळसगाणकी म्हणतात. ) नालिकेराम्रनारंगकदल्यामलकीफलं । अन्यच्छुभफलं सर्वमुच्यते फलकुंभकं ॥ १० ॥ ॐ ह्रीं नालिकेरादिफलस्थापनं करोमि स्वाहा ॥ फलस्थापनं ॥ ( या मंत्रानें कलशावर ठेवलेल्या फलाची स्थापना करणें. ) माधवीमल्लिकाजातिकेतकीनवमाल्लिका । पाटलीकरवीरादिसुमनःसुमनोघटी ॥ ११ ॥ ॐ ह्रीं माधवीमल्लिकादिपुष्पस्थापनं करोमि स्वाहा । पुष्पस्थापनं ॥ ( या मंत्रानें कलशावरील फुलांची स्थापना करणें. )

## ॥ अथ पीठारोपणविधानं ॥

स्नानेच्छा पीततापश्रमरनिरजसां नैव भावार्हतां सा श्रद्धालुः स्थापनायां विहितमतिरहं स्थापनार्हत्प्रभूणां । मोक्षं संक्ष्वारुरुक्षोः प्रथममिव कृतं तस्य सोपानमुच्चैरागेहाम्युद्यदुद्धध्वानिपिहितदिशास्यानकं स्नानपीठं ॥ १ ॥ ॐ ह्रीं स्वस्तये पीठमारोपयामि स्वाहा । पीठमारोपणं ॥ ( या मंत्रानें पीठारोपण करणें. ) यन्मेरोर्गिरिशिखरस्य शिखरे धत्ते निरीटश्रियं । यत्संपर्कमवाप्य पांडुकशिला पूताधचंद्रोपमा ॥ यत्तीर्थंकरजन्ममज्जनजलैः पीठं पवित्रीकृतं । तन्मत्वा जिनमज्जनोचितमिदं पीठं मया स्थाप्यते ॥ २ ॥ ॐ ह्रीं अर्हं क्ष्मं ठठ श्रीपीठस्थापनं करोमि स्वाहा । श्रीपीठस्थापनं ॥ ( या मंत्रानें पीठस्थापना करणें. )

## ॥ अथ मेरुपूजा ॥

आदिः सुदर्शनो मेरुर्विजयोऽप्यचलस्तथा । चतुर्थो मंदरो नाम्ना विद्युन्माली च पंचमः ॥ १ ॥ ॐ ह्रीं पंचमेरुस्थितशाश्वताजिनबिंबा अत्रावतरतावतरत संवौषट् स्वाहा । ॐ ह्रीं पंच० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं पंच० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ मंदाकिनीतीर्थजलैः सुगंधैः सुवर्णभृंगारभृतैर्विशुद्धैः । यः शाश्वतो मेरुषु पंचस्वच्छैः प्रशामयैर्वा जिनमायजे तं ॥ ॐ ह्रीं पंचमेरुस्थितजिनबिंबेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडसारेण विलेपनेन कर्पूरसत्कुंकुममिश्रितेन । यः शाश्वतो० ॥ ॐ ह्रीं पंचमे० ॥ गंधं ॥ २ ॥ सुगंधशाल्यक्षतशुभ्रपुंजैः पुण्यांकुरैर्दीर्घतरैरिवोच्चैः । यः शाश्वतो० ॥ ॐ पंचमे० ॥ अक्षतान् ॥ ३ ॥ मंदारसत्केतकिचंपकाद्यैः पद्मप्रसूनैः सुरभित्वसारैः यः शाश्वतो० ॥ ॐ ह्रीं पंचमे० ॥ पुष्पं ॥ पीयूषपिंडैरिव मोदकाद्यैः पक्वान्नशाल्योदनसान्निवेद्यैः । यः शाश्वतो० ॥ ॐ ह्रीं पंचमे० चरुं ॥ ४ ॥ कर्पूरजातैर्घृतजैर्मनोज्ञैः सुवर्णपात्रोज्वलरत्नदीपैः । यः शाश्वतो० ॥ ॐ ह्रीं पंचमेरुस्थितजिनबिंबेभ्यो दीपं निर्वपामि स्वाहा ॥ ५ ॥ सुस्निग्धकृष्णागरुसारधूपैः कर्पूरसच्चंदनहव्यगंधैः । यः शाश्वतो मेरुषु पंचस्वच्छैः प्रशामयैर्वा जिनमायजे तं ॥ ॐ ह्रीं पंचमे० ॥ धूपं ॥ ६ ॥ सौरम्यसौगम्यसुरूपकाद्यैर्गुणाधिकैः सौढफलैर्मनोज्ञैः । यः शाश्वतो० ॥ ॐ ह्रीं

पंचमे० ॥ फलं ॥ स्वच्छासुगंधाक्षतपुष्पमारैर्नैवद्यकैर्दीपसुधूपवर्गैः । फलैर्महार्ध्यं जयतूर्यनादैर्मेरो- र्जिनार्चामवतारयामि ॥ ॐ ऱ्हीं पंचमे० ॥ अर्घ्यं ॥ शांतिधारा । पुष्पांजलिः ॥ निरतीयसुगंधि- द्रव्यसंभारसंधबंधुरैः । सुरसिंधुसंभूतांभोभिरिव स्पर्धमानैः । निर्धूताखिलकल्मषैरभिनवांभोभिः संभृतैः । अनेकरत्नरचितस्फुटहाटकघनघटितगंभीरघटैः ॥ निष्टप्तकांचनमयं मुहुरात्मयोनेरभ्यास- नादतितरामुपलब्धशुद्धिं । प्रक्षालयामि विधिरेष इतीह पीठमेतच्छलान्मम मनः परिमार्ष्टुकामः ॥ १ ॥ ॐ ऱ्हां ऱ्हीं ऱ्हूं ऱ्हौं ऱ्हः नमोऽर्हते भगवते श्रीमते पवित्रतरजलेन श्रीपीठ- प्रक्षालनं करोमि स्वाहा । पीठप्रक्षालनं ॥ ( या मंत्रानें पीठप्रक्षालन करणें. ) तीक्ष्णाग्र- भागानभिषेकपीठे हैरण्यगर्भे विदधामि दर्भान् । हिरण्मये प्रोज्वलरत्नजालप्रोद्यंचदर्चे रचिते- ष्वचापे ॥ २ ॥ ॐ ऱ्हीं दर्पमथनाय नमः स्वाहा । पीठदर्भः ॥ ( या मंत्रानें पीठावर दर्भ टाकणें. ) श्रीमद्भिर्विमलैर्जलैः सुरभिभिर्गंधैः शुभैस्तंडुलैः । प्रोत्फुल्लैः कुसुमैर्लसच्चरुवरै- र्डिंडीरपिंडोपमैः ॥ दीपैर्दीपितादिग्वधूवदनकैर्धूपैर्जगद्व्यापिभिः सच्छायैः सुरसैः फलैश्च बहुभिः पीठं यजाम्यर्हतां ॥ ३ ॥ ॐ ऱ्हीं सम्यग्दर्शनज्ञानचारित्राय नमः श्रीपीठार्चनं करोमि स्वाहा । श्रीपीठार्चनं ॥ ( या मंत्रानें पीठास अर्घ्य देणें. ) निस्तुषनिर्व्रणनिर्मलजलार्द्रशालेय- धवलतंडुलैः श्रीवर्णं । विलिखामि श्रीपीठे त्रिलोकनाथस्य केवलिभर्तुः ॥ ४ ॥ ॐ ऱ्हीं

अर्हं श्री श्रीकारलेखनं करोमि स्वाहा । श्रीकारलेखनं ॥ ( या मंत्रानें पीठांत श्री हैं अक्षर पाण्यानीं ओलें केलेल्या तांदळांनीं लिहिणें. ) जलगंधाक्षतकुसुमैश्चरुप्रदीपधूपफलनिवहैः । जित-कर्मरिपुं जिनपतिमर्चामि प्रबलया भक्त्या ॥ ५ ॥ ॐ ह्रीं अर्हं श्रीं श्रीयंत्रार्चनं करोमि स्वाहा । श्रीयंत्रार्चनं ॥ ( या मंत्रानें पीठांत काढलेल्या श्रीस अर्घ्य देणें. ) जिनराजप्रतिबिंबं सकलजगद्भव्यपुण्यपुंजावलंबं । भक्त्या स्पृशामि परया निर्भूषणमखिललोकभूषणममलं ॥ ६ ॥ ॐ ह्रीं धात्रे वषट् प्रतिमास्पर्शनं करोमि स्वाहा । प्रतिमास्पर्शनं ॥ ( या मंत्रानें प्रतिमेस हातानें स्पर्श करणें. )

## ॥ अथ प्रतिमानिवेशनमंत्रः ॥

लिखितस्वनार्हन्कुलबीजशब्दं श्रीवर्णयुक्तं मदकेन्द्रखाङ्कैः । श्रीगंधकुट्याः स्नपनीयमर्हद्बिंबं सुवाऽकीय निवेशयेऽस्मिन ॥ ७ ॥ नराचलकवमानानां देवानामधिदैवतं । प्रक्षीणघातिकर्माणं प्राप्तानंतचतुष्टयं ॥ ८ ॥ दूरमुत्सृज्य भूभागं नभःस्थलसंस्थितं । परमौदारिकस्वांगं प्रभातजिन-भास्करं ॥ ९ ॥ चतुस्त्रिंशन्महाश्चर्यैः प्रातिहार्यैश्च भूषितं । मुनितिर्यग्नरस्वर्गिसभाभिस्तं निषेवितं ॥ १० ॥ जन्माभिषेकप्रमुखप्राप्तपूजातिशायिनं ॥ केवलज्ञाननिर्णीतविश्वतत्वोपदेशिनं ॥ ११ ॥ प्रशस्तलक्षणाकीर्णसंपूर्णोदग्रविग्रहं । आकाशस्फटिकान्तस्थज्वलज्ज्वालानलोज्वलं ॥ १२ ॥ तेजसा-

मुत्तमं तेजो ज्योतिषां ज्योतिरुत्तमं । परमात्मानमर्हंतं ध्यायेन्निश्रेसाप्तये ॥ १३ ॥ वीतरागोऽथ यो देवः स्तूयमानो मुमुक्षुभिः । स्वर्गापवर्गफलदा शक्तिस्तस्य हि तादृशी ॥ १४ ॥ स्वर्गावतारेण हिरण्यवृष्टिः शक्राज्ञया षण्णवमासयावत् । स्वप्नावलीढप्रमुखादवज्ञास्ते संतु कल्याणकरा जिनाः ॥ १ ॥ ये स्नापिता जन्मनि मूर्ध्नि मेरोः शक्रेण दुग्धैर्नववारिपूरैः । बाल्यंगता हेमघटैः सुराणां ते संतु क० ॥ २ ॥ तपोवनं सन्निहिताः कृतौघात् सोत्पाटिताः कुंतलकं करेण । कर्माष्टकक्षालनहेतुभूतास्ते संतु क० ॥ ३ ॥ जगत्त्रयोद्योतकरात्प्रयातघातिक्षयात्केवलबोधलक्ष्म्यः । सत्प्रातिहार्याभरणांचितांगास्ते संतु क० ॥ ४ ॥ प्रदग्धरज्वाकृतिकर्मनाशात्तदंगपूजा मकुटानलेन । कृता परैश्चंदनदेवदारैस्ते संतु क० ॥ ५ ॥ सद्रत्नवृष्टिकुसुमांजलिगंधवारिभेर्यारवास्त्रिदशजातजयेतिनादः । साश्चर्यपंचकमशेषगुणस्य राज्ञः कल्याणपंचकमिदं विदधातु शांतिं ॥ ६ ॥ यः श्रीमदैरावणवाहनेन निवेशितोऽके विधृतातपत्रः । ईशानशक्रेण सनत्कुमारमाहेंद्रसच्चामरवीज्यमानः ॥ १ ॥ शच्यादिभिः श्र्यादिभिरप्युदारदेवीभिरात्तोज्वलमंगलाभिः । पुरस्सरं भेरिरवाप्सराभिरग्रे नटंतीभिरुपास्यमानः ॥ २ ॥ शेषैस्तु शक्रैर्जय जीव नंद प्रसीद शश्वत्प्रतिपक्षपातीन् । इत्यादिवागुल्वणितप्रमोदैर्मुहुः प्रसूनैरुपहार्यमाणः ॥ ३ ॥ सुरैः स्फुटास्फोटितगीतनृत्यवादित्रहास्योत्पतवल्गितानि । सुमंगलाशीर्धवलस्तुतीनि स्वैरं सृजद्भिः परिचार्यमाणः ॥ ४ ॥ अहो प्रभावस्तपसां सुदूरमपि

न्नजित्वा प्रतिमास्वपेक्ष्यः । यः शेषसाक्षाद्द्रुममीक्षितोऽर्हन्न भेदनादिष्वयमात्मबंधुः ॥ ५ ॥ सवि-स्मयानंदमिति ब्रुवाणैरालोक्यमाणोऽभिमुखागतैषी । दैवर्षिभिः स्पर्धि तदेव युग्मं न भोगयुग्मैरपि सेव्यमानः ॥ ६ ॥ प्रदक्षिणाद्व्रजनेन नीला पूर्वोत्तरस्यां दिशि मेरुशृंगं । निवेश्य तत्रत्य शिलो-द्धपीठे क्षीरोदनीरैः स्नपितः सुरेंद्रैः ॥ ७ ॥ तं देवदेवं जिनमद्यजातमप्यास्थितं लोकपितामहत्वं । इमं निवेश्योत्तरवेदिपीठे प्राग्वत्क्रमेऽस्मिन् विधिनाभिषिंचे ॥ ८ ॥ कुलकं ॥ ॐ ऱ्हीं अर्हं श्रीं क्लीं धर्मतीर्थाधिनाथाय भगवन्निह पांडुकशिलापीठे तिष्ठ २ स्वाहा ॥ उत्तरवेदिकापीठे प्रतिमां निवेशयेत् ॥ इति प्रतिमानिवेशनमंत्रः ॥ ( या मंत्रानें प्रतिमा पीठावर ठेवणें. )

## ॥ अथ प्रतिमास्थापनमंत्रः ॥

द्वीपे नंदीश्वराख्ये स्वयममृतभुजः कृत्तिमं स्नापयेयुर्भावे भावार्हतो वा भव भव भिदया भाक्तिका-श्चैत्यगेहात् । आनीयास्मिन् स्थवीयस्यतिविमलतमे कृत्तिमे स्नानपीठे सद्भावे स्थापनार्हत्प्रति-कृतिविधिनायक्षयक्षीसमेतं ॥ १ ॥ प्रणमदखिलामरेश्वरमणिमकुटतटांशुखचितचरणाब्जं । श्रीकामं श्रीनाथं श्रीवर्णेऽप्रतिमं स्थापयामि जिनं ॥ २ ॥ ॐ ऱ्हीं श्रीं क्लीं ऐं अर्हं जगतां सर्वशांतिं कुर्वंतु श्रीवर्णे प्रतिमास्थापनं करोम्यर्हद्भ्यः स्वाहा । श्रीवर्णे प्रतिमास्थापनं ॥ ( या मंत्रानें काढलेल्या श्रीवर प्रतिमा ठेवणें. ) श्रीपादपद्मयुगलं सलिलैर्जिनस्य प्रक्षाल्य तीर्थजलपूततमो-त्तमांगं । आह्वानमंबुकुसुमाक्षतचंदनाद्यैः संस्थापनं च विदधेऽत्र च सन्निधानं ॥ ३ ॥ ॐ ऱ्हाँ ऱ्हीं

न्हूँ न्हीं न्हः नमोऽर्हते भगवते श्रीमते पवित्रतरजलेन श्रीपादप्रक्षालनं करोमि स्वाहा । श्रीपाद-प्रक्षालनं ( या मंत्रानें प्रतिमेचें पादप्रक्षालन करणें. )

## ॥ अथ आव्हाहनादिविधानं ॥

स्वांते भांतमपि स्फुटं श्रुतिबलादाह्वानयामि द्रुयात् । यच्छद्वात्मनि सुप्रतिष्ठितमपि संस्थापयामीश यत् ॥ कुर्वे सर्वगमप्युपांतगमपि त्यक्तं विकारैः सदा । पाद्यार्घैश्च पुनामि यद्विधिरसावित्येव तन्नौत्तरं ॥ १ ॥ ॐ न्हीं प्रकृतिक्रमविध्यवधानाय प्रतिमाग्रे पुष्पांजलिं क्षिपेत् ॥ ( या मंत्रानें प्रतिमेपुढें पुष्पांजलि करणें. ) भगवन् प्रसीद सपरिवार इहैह्येहि परमकारुणिक । विष्टरमधिति-ष्ठाधितिष्ठ कुरु कुरु दृशादं मे ॥ १ ॥ ॐ न्हीं श्रीं क्लीं ऐं अर्हं पूर्वैरिहैह्येहि तिष्ठ तिष्ठ मम सन्निहितो भव भव संवौषट् ठठ वषडिति क्रांडैः ॥ २ ॥ मंत्रैर्नमोऽर्हते स्वाहांतांतैरर्हतो बुधैर्य-थार्हि । वार्गंधाक्षतपुष्पैर्विदधाम्यह्वाहनादिविधीन् ॥ ३ ॥ ॐ न्हीं श्रीं क्लीं ऐं अर्हं अर्हत्परमेष्ठिन् अत्र एहि २ संवौषट् नमोऽर्हते स्वाहा आह्वानं ॥ ॐ न्हीं० अत्र तिष्ठ २ ठठ नमोऽर्हते स्वाहा । स्थापनं ॥ ॐ न्हीं० अत्र मम सन्निहितो भव भव वषट् नमोऽर्हते स्वाहा । सन्निधीकरणं ॥ निर्मुद्रभवसमुद्रद्वार्णवतरणपोतयोः पुरतः । जिनचरणसरोरुहयोः करोम्यहं पंचगुरुमुद्रां ॥ ४ ॥ ॐ न्हीं श्रीं क्लीं ऐं अर्हं असिआउसाय नमः स्वाहा । पंचगुरुमुद्रावतरणं ॥ ( या मंत्रानें प्रति-

मेच्या पायां समोर पंचगुरुमुद्रा[1] करणें. ) ॐ उसहाय दिव्वदेहाय सज्जोजाताय महंपण्णाय अणंतचउट्ठयाय परमसुहपइट्ठियाय णिम्मळाय सयंभुवे अजरामरपदपत्ताय चउमुहाय परमेट्ठिणे अरहंताय तिळोयणाणाय तिळोयपुज्जाय अट्ठदिव्वदेहाय देवपरिपूजाय परमपदाय ममत्तहि सण्णिधाय स्वाहा । इदमुच्चारयन् प्रतिमां परामृषीत ॥ ( हा गाथामंत्र उच्चार करीत विनयपूर्वक प्रतिमेस हात जोडणें, अंजलि करणें व नमस्कार करणें, इत्यादिकांनीं प्रतिमेचें परामर्ष करावें. )

## ॥ अथ अर्घ्यपाद्याचमनविधिः ॥

सिद्धिर्वृद्धिर्जयश्रीर्धृतिरमृतिरभीर्भाग्यसौभाग्यरागाः । कांतिः शांतिः प्रसादः प्रथितगुणगणो मंगलं तुष्टिपुष्टी ॥ कीर्तिः क्षेमं सुभिक्षं सुखमखिलमयं स्वायुरारोग्यमैश्यं । सर्वं भद्रं भवद्भिर्भवतु भवभिदे स्थापितेऽस्मिन् जिनेशे ॥ १ ॥ इत्याशीर्वादः ॥ अनंतज्ञानदृग्वीर्यसुखरूपं जगत्पतेः । पाद्यमामर्चयाम्युद्भिर्निर्मलं पदपंकजं ॥ २ ॥ ॐ ऱ्हीं अर्हन् इदं पाद्यं गृण्हीध्वं २ नमोऽर्हद्भ्यः स्वाहा ॥ कनत्कनकभृंगारनालाद्गलितवारिभिः । जगत्त्रितयनाथस्य करोम्याचमनक्रियां ॥ ३ ॥ ॐ ३ ऱ्हीं २ झ्वीं २ क्ष्वीं वंमंहंसंतंपंद्रांद्रींहंसःस्वाहा । इति आचमनमंत्रः ॥ ( या मंत्रानें जलधारापूर्वक प्रतिमेस आचमन करणें. )

---

१ पंचगुरुमुद्राः—दोनी हातांचे तळवटे बाहेर करून, त्यांचे पाठ एकमेकास चिकटून, बोटे एकमेकांत अडकवणें; व अंगठ्यांनीं करंगळीबोटें व तर्जनीबोटांनीं मधली बोटें धरून, अनामिकबोटें जुळवून धरणें.

# ॥ अथ पिंडावतरणं ॥

गोमयैर्भस्मपिंडैश्च दर्भदीपांकुरैर्जलैः । शाल्यन्नैरक्षतैः पंचवर्धमानैः फलैरपि ॥ १ ॥ अखंडितमुखाभिनूतनसितार्द्रसत्तंदुलस्फुटत्कमलचंपकप्रभृतिपुष्पपूर्णांजलिः । प्रदक्षिणिमहं त्रिधा पदसरोजमामस्तकं पुरो भगवतोऽर्हतोऽवतरणं करोमि श्रियै ॥ २ ॥ ॐ ऱ्हीं क्रों बहुविधाक्षतपुष्पपरिपूर्णपाणिपात्रेण भगवतोऽर्हतोऽवतरणं करोमि सम्यग्दर्शनज्ञानचारित्राण्यस्माकमक्षतानि विदधातु भगवान् स्वाहा । पुष्पाक्षतावतरणं ॥ ( या मंत्रानें ओंझळभर फुलें व अक्षता घेऊन प्रतिमेच्या मस्तकापासून पायांपर्यंत प्रदक्षिणारूपानें तीनदा निवाळून ठेवणें. ) हरिन्मणिमयूखकोमलविलासदूर्वांकुरैर्निमग्नसितसर्षपैर्हरितगोमयैः पिंडकैः । जिनेशमवतारयाम्यथ महाभिषेकोद्यमे मुदा सुरगिरौ

---

१ गोमयपिंडावतरण. २ भस्मपिंडावतरण. ३ शाल्यन्नपिंडावतरण. ४ धूपावल्यवतरण. ५ पंचवर्धमानावतरण. ६ दीपावल्यवतरण. ७ सलिलांजल्यवतरण. ८ फलावतरण. ९ मृत्पिंडावतरण. १० दर्भदीपांकुरावतरण. अशीं अवतरणें दहा आहेत:—१ अंतराळें धरलेल्या गायीच्या शेणाचें एक पिंड बनवून, त्यावर पांढऱ्या मोहऱ्या व अक्षता टाकून, त्याच्या माथ्यावर दूर्वा खोवून, प्रतिमेच्या मस्तकापासून पायांपर्यंत तीनदा निवाळून ठेवणें, याला गोमयपिंडावतरण ह्मणतात. २ अंतराळें गायीचें शेण वाळवून भाजून राख करणें, ती राख सुगंध पाण्यांत कालवून एक पिंड करून पूर्ववत् निवाळून ठेवणें, याला भस्मपिंडावतरण ह्मणतात ३ तांदळाच्या भाताचें एक पिंड करून पूर्ववत् निवाळून ठेवणें, याला शाल्यन्नपिंडावतरण ह्मणतात. ४ सुगंध धूप घालून पूर्ववत् निवाळून ठेवणें, याला धूपावल्यवतरण

 

स्वयं सुरवरैः पुरा पूजितं ॥ १ ॥ ॐ ह्रीं क्रों दूर्वांकुराक्षतसितसर्षपयुक्तैर्हरितगोमयपिंडकैर्भगवतोऽर्हतोऽवतरणं करोमि दुरितमस्माकमपनयतु भगवान् स्वाहा । गोमयपिंडावतरणं ॥ १ ॥ अस्पृष्टभूमितलगोमयभस्मपिंडैर्गंधांबुसंकलुलितैरवतारयामि । देवं जिनं जितमनोजयजन्ममृत्युं तेनास्तु भस्मितविधिर्द्विषता त्रिलोके ॥ ॐ ह्रीं क्रों भस्मपिंडकैर्भगवतोऽर्हतोऽवतरणं करोम्यस्माकमष्टविधकर्माणि भस्मीकरोतु भगवान् स्वाहा । भस्मपिंडावतरणं ॥ २ ॥ शाल्यन्नपिंडैः शरदिंदुरोचिःपुंजायमानैर्भगवंतमेभिः । निर्वर्तयामि त्रिजगच्छरण्यं त्राणं विदक्षं जगतां त्रयस्य ॥ ॐ ह्रीं क्रों कुंदेंदुकुमुदधवलवर्तुलोदनपिंडकैर्भगवतोऽर्हतोऽवतरणं करोमि क्षेममुभिक्षमस्माकं करोतु भगवान्

---

ह्मणतात. ५ सोलले एरंडे सुगंधपाण्यांत वाटून, त्यांचे चौकोनी पाच वडे बनवून, पचरंगी करून पूर्ववत् निवाळून ठेवणें, याला पंचवर्धमानावतरण ह्मणतात. ६ एका तबकात कापराचे पुष्कळ दिवे लावून पूर्ववत् निवाळून ठेवणें, याला दीपावल्यवतरण ह्मणतात. ७ सुगंध फुलांनीं व पाण्यानीं ओंझळ भरून पूर्ववत् निवाळून ठेवणें. याला सलिलांजल्यवतरण ह्मणतात. ८ डाळिंबादि उत्तम फळे एका तबकांत भरून पूर्ववत् निवाळून ठेवणे, याला फलावतरण ह्मणतात. ९ चांगल्या मातीचें एक पिंड बनवून, त्याजवर पांढऱ्या मोहऱ्या टाकून, त्याच्या माथ्यावर दूर्वा खोवून, पूर्ववत् निवाळून ठेवणें, याला मृत्पिंडावतरण ह्मणतात. १० दर्भांचे शेंडे दिव्यावर धरून पेटवून पूर्ववत् निवाळून ठेवणें, याला दर्भदीपांकुरावतरण ह्मणतात. हीं दहा पिंडावतरणे पुढें सांगितलेल्या त्या त्या मंत्रानें प्रतिमेच्या सभोवती पूर्व दिशा आदिकरून क्रमानें दाही दिशेस ठेवीत जाणें. हें चांगले लक्षांत ठेवावें.

स्वाहा। शाल्यन्नपिंडावतरणं ॥ ३ ॥ कर्कोलिंदुलवंगकुंकुमरजःखर्जूरसेव्यागरुश्यामैलादलनागचंदनजटाजातीफलानां जिनं। क्षोदैरेष निवर्तये दरदलत्फुल्लावलीलासितैः प्रत्यग्रागरुचूर्णधूपपटलाभ्यासंगसांद्रीकृतैः ॥ ॐ ह्रीं क्रौं सुगंधीभूतदिग्वधूवदनकैर्गंधःकारिनदिग्विवरैः कंकोलैलादिचूर्णमिश्रितकालागरुधूपकैर्भगवतोऽर्हतोऽवतरणं करोमि अस्माकमष्टविधकर्माणि चूर्णीकरोतु भगवान् स्वाहा। धूपावल्यवतरणं ॥ ४ ॥ कृष्णाभैर्हरितैः सितैररुणिमाक्रांतैर्वरैः पीतकैरस्फीतैरतिकोमलैः शुभतमैर्गंधांबुसंमर्दितैः। सद्धान्यैश्चतुरस्रकैर्भगवतस्त्र्यावतारं मुदा। कुर्मः शर्मनिबर्हणं जिनपतेस्तैर्वर्धमानैर्वयं ॥ ॐ ह्रीं क्रौं सितासितहरितपीतलोहितैर्वर्धमानकैर्भगवतोऽर्हतोऽवतरणं करोमि श्रियमस्माकं वर्धयतु भगवान् स्वाहा। पंचवर्धमानावतरणं ॥ ५ ॥ बहुपद्मरागमणिभिर्दीपैरवतारये जिनार्कमहं। शुभज्ञानविभावसुध्वस्ताखिलदुरितांतिमिरततिं ॥ ॐ ह्रीं क्रौं बहुपद्मरागमणिभिरिव दीप्यमानैः कर्पूरपारिदीपैरिव उभयपार्श्वप्रज्वलितोल्कया भगवतोऽर्हतोऽवतरणं करोम्यस्माकं धर्ममुज्वलं करोतु भगवान् स्वाहा। दीपावल्यवतरणं ॥ ६ ॥ प्रत्यग्रकर्पूरपरागभाजा जिनस्य नानासुमनान्वितेन। भक्त्या वयं हस्तपुटस्थितेन नीरेण नीराजनकर्म कुर्मः ॥ ॐ ह्रीं क्रौं सुरभिशिशिरविमलपरिपूर्णेनांजलिना भगवतोऽर्हतोऽवतरणं करोमि विमलशीतलध्यानमस्माकमुत्पादयतु भगवान् स्वाहा। सलिलांजल्यवतरणं ॥ ७ ॥ धात्रीतिंदुकपूगचोचकरणद्राक्षाकपित्थालुकैः। कर्कंदु-

पनसाम्रतालकदलीखर्जूरसत्केशरैः ॥ जंबूदाडिमबीजपूरबदरीजंबीरपारावतैः । कुर्वेऽन्यैश्च फलैरभीष्टफलदैर्देवस्य नीराजनं ॥ ॐ ह्रीं क्रों पवित्रतरसमुत्पन्नैः कंब्वाम्रफलैर्भगवतोऽर्हतोऽवतरणं करोमि अस्माकमाशाफलं संपादयतु भगवान् स्वाहा । फलावतरणं ॥ ८ ॥ सितसर्षपतंडुलोज्वलैर्बहुदूर्वांकरशोभितमूर्धभिः । जिननाथमिहावतारये शुभमृत्स्नाकृतवर्धमानकैः ॥ ॐ ह्रीं क्रों दूर्वांकुराक्षतासितसर्षपयुक्तैर्मृत्पिंडकैर्भगवतोऽर्हतोऽवतरणं करोमि सर्वसस्यां वसुधां करोतु भगवान् स्वाहा । मृत्पिंडावतरणं ॥ ९ ॥ अघविपिनदहनदक्षैरक्षूणैरग्रलग्नदहनाशिखैः । अवतारयामि जिनमहमघवनदहनोद्यमी दर्भैः ॥ ॐ ह्रीं क्रों कनत्कनककपिशवर्णैरग्रावलग्नाग्निज्वालाज्वलिताखिलदिग्मुखैः पापारातिकुलोन्मूलनदहनदक्षैः निबिडनिबद्धदर्भपूलैर्भगवतोऽर्हतोऽवतरणं करोमि अघज्वलनमस्माकं करोतु भगवान् स्वाहा । दर्भदीपांकुरावतरणं ॥ १० ॥ एतानि दशमंगलद्रव्याणि व्यस्तानि हस्ताभ्यामुद्धृत्य समस्तानि वा हेमपात्रे व्यवस्थाप्यावतारयेत् । महार्घ्यम् ॥ इति समस्तनीराजनद्रव्यविधानं ॥ स्फुटद्बकुलयूथिकाकरुणमाधवीमल्लिका । स्फुरत्कुरवकाश्वमारशतपत्रपद्मोत्पलं ॥ दलद्दमनकं स्फुरन्मरुवकं लसद्बालकं । क्षिपामि पदपद्मयोर्जिनपतेः प्रसूनांजलिं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अर्हंत इदं पुष्पांजलिप्रार्चनं गृण्हीध्वं २ नमोऽर्हद्भ्यः स्वाहा । अनेकविधकुसुमांजलिः ॥

## ॥ अथ अष्टकं ॥

कपिशकांचनकुंभसमाश्रयादिव सरोजरजःपरिपिंजरैः । शुभविशुद्धसरःप्रभवैः प्रभोरभिनवांबुभिरर्चनमारभे ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अर्हंत इदं जलार्चनं गृण्हीध्वं २ नमः परमेष्ठिभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ मदालिनादैः कर्णस्य वदतेव समुन्नकैः । घ्राणस्य सौरभेणेव गंधैराराध्यते जिनः ॥ ॐ ह्रीं श्रीं० अर्हंत इदं गंधार्चनं गृण्हीध्वं २ नमः परमात्मकेभ्यो गंधं निर्वपामि स्वाहा ॥ २ ॥ शशिकांतविमलै रयांकुरैरिव निषिक्तभक्तिजनैः । खंडितमहत्त्वखंडैर्यजे जिनस्य तंडुलैश्चरणं ॥ ॐ ह्रीं श्रीं० अर्हंत इदं अक्षतार्चनं गृण्हीध्वं २ नमोऽनादिनिधनेभ्योऽक्षतान् निर्वपामि स्वाहा ॥ ३ ॥ सिताभिनवसिंधुवारशतमल्लिकामालतीप्रभृत्यखिलमंगलप्रसववासिताशामुखं । चलच्चटुलचंचरीकमृदुपादपाताक्षमं क्षिपामि जिनपादयोरुपधरित्रि पुष्पोत्करं ॥ ॐ ह्रीं श्रीं० अर्हंत इदं पुष्पार्चनं गृण्हीध्वं २ नमः सर्वनृसुरासुरपूजितेभ्यः पुष्पं निर्वपामि स्वाहा ॥ ४ ॥ अनंतसुखतृप्तस्य भुक्तिमुक्तिप्रदायिनः । प्रोक्षिपामि हविर्भक्त्या बुभुक्षुरमृताशनं ॥ ॐ ह्रीं श्रीं० अर्हंत इदं नैवेद्यार्चनं गृण्हीध्वं २ नमोऽनंतानंतज्ञानेभ्यश्चरुं निर्वपामि स्वाहा ॥ ५ ॥ कर्पूरोपलदीपेन विच्छलाद्वेष्टितांतस्तमःपटलैः । प्रत्यर्थिभिरिव दीपान् भक्त्या प्रद्योतयामि जिनभानोः ॥ ॐ ह्रीं श्रीं० अर्हंत इदं दीपार्चनं गृण्हीध्वं २ नमोऽनंतानंतदर्शनेभ्यो दीपं निर्वपामि स्वाहा

॥ ६ ॥ हिमहरिचंदनजोंगकतुरुष्कवरशर्करादिसंभूतैः । धूपैर्धूपितकाष्ठैरायतदलिकुलकलैर्यजामि जिनं ॥ ॐ ह्रीं श्रीं० अर्हत इदं धूपार्चनं गृण्हीध्वं २ नमोऽनंतानंतवीर्येभ्यो धूपं निर्वपामि स्वाहा ॥ ७ ॥ सुरभितरसुरससुरुचिरसुवर्णनारंगमातुलुंगाद्यैः । सद्योऽभिलषितफलदैः फलैः फलार्थी यजामि जिनं ॥ ॐ ह्रीं श्रीं० अर्हत इदं फलार्चनं गृण्हीध्वं २ नमोऽनंतानंतसौखेभ्यः फलं निर्वपामि स्वाहा ॥ ८ ॥ मेरौ प्रागमरैरिवात्र विधिना संस्थाप्य संपूजितस्तेजोराशिरशेषकल्मषमुपश्रीलक्षणैर्लक्षितः । लक्ष्मीधामभवाध्वगश्रमहरच्छायाद्रुमः शाश्वतीं कृत्वा संदिशतु श्रियं सह महान् श्रीवर्धमानो जिनः ॥ ॐ ह्रीं श्रीं० अर्हत इदं अर्घ्यार्चनं गृण्हीध्वं २ नमः परमब्रह्मभ्यो विनष्टाष्टकर्मभ्योऽर्घ्यं निर्वपामि स्वाहा ॥ ९ ॥ जातीजपाबकुलचंपकपद्मवल्लीकंकेलिकेतकिकुरुंटकपाटलाद्यैः । कर्षन् महप्रमितिकां स्म ततोऽजमालीन् पुष्पांजलिर्जिनपदोरुपधीक्रिये तु ॥ शांतिधारां पुष्पांजलिः ॥ १० ॥

## ॥ अथ दिक्पालकपूजा ॥

विस्तीर्णे स्वर्णपात्रे सलिलमलयजैश्चारुपुष्पाक्षतान्नैः । पक्वान्नैः क्षीरसर्पिर्दधिफलनिकरैरर्घ्यमुद्धार्य वर्यं ॥ यज्ञांगैर्दीपधूपैः परमजिनपतेः पादयोस्त्रिः परीत्य । प्रत्येकं प्रार्थयेऽहं निखिलदिगधिपान् यज्ञनिर्विघ्नसिध्यै ॥ १ ॥ दिगीशाः शब्दये युष्मानायात सपरिच्छदाः । अत्रोपवेशतैत वो यजे प्रत्येकमादरात ॥ २ ॥ दिक्पालकपूजाप्रतिज्ञानाय समस्तहव्यद्रव्यपूर्णपात्रपरमपुरुषचरणकमलयोरव-

तार्यं पार्श्वतो निवेशयेत् ॥ ( येथे दशदिक्पालकाच्या पूजेकरितां एका मोठ्या ताटांत जलगं-धादि पूजासामग्री घेऊन, प्रतिमेच्या चरणीं अवतरण करून एका बाजूस ठेवणें; व त्याच पूजासामग्रीनें पुढें सांगितलेल्या मंत्रानें दिक्पालकपूजा करणें, असें सांगितलें आहे. ) आह्वानादिपुरःसरप्रत्येकपूजोपक्रमाय दिक्षु पुष्पाक्षतं क्षिपेत् ॥ ( येथे पूर्वादि दाही दिशेस फुलें व अक्षता टाकणें. )

## ॥ पूर्वस्यां दिशि ॥

द्वात्रिंशद्वक्रदंतन्हृदनळिननटन्नाकयोषिन्निकायं कांत्या कैलासशैलच्छविमलिनिकराक्रांतदानाग्र-गंडं । आरुह्यैरावतं हि कुलिशधर इहैवागतः पूर्वकाष्ठामन्या शच्या सहायं वरकनकरुचिर्वा-सवोऽर्हन्मखोर्व्याः ॥ १ ॥ ॐ आँ क्रों ऱ्हीं सुवर्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधू-चिन्हसपरिवार हे इंद्रदेव अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ इंद्राय स्वाहा । इंद्रपरिजनाय स्वाहा । इंद्रानुचराय स्वाहा । इंद्रमहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा ।

भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहा। स्वधा स्वाहा ॥ हे इंद्रदेव स्वगुणपरिवारपरिवृत इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं च यजामहे प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत् सदा। शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारां ॥ इंद्राह्वानं ॥ १ ॥

## ॥ पूर्वदक्षिणस्यां दिशि ॥

शुंभज्जांबूनदाभं मणिगणविलसच्छृंगमूर्णायुमूढः। प्राप्ताह्वानो जपाभः करविधृतलसच्छक्तिरग्नीद्र एषः ॥ भास्वज्ज्वालाकलापः पुण्यमककुभोरंतरालं प्रयांतो। भूयात् स्वाहाप्रियोऽस्मिन् जिनपतिसवने दीपधूपादिकाले ॥ २ ॥ ॐ आँ क्रों ह्रीं रक्तवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे अग्निदेव अत्रागच्छागच्छ संवौषट् स्वाहा। ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

**ॐ अग्नींद्राय स्वाहा। अग्निपरिजनाय स्वाहा। अग्नींद्रानुचराय स्वाहा। अग्नींद्रमहत्तराय स्वाहा। अग्नये स्वाहा। अनिलाय स्वाहा। वरुणाय स्वाहा। प्रजापतये स्वाहा। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहा। स्वधा स्वाहा ॥ हे अग्नींद्रदेव स्वगुणपरि-**

वारपरिवृत इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं० शांतिधारां ॥ अग्न्याह्वानं ॥ २ ॥

## ॥ दक्षिणस्यां दिशि ॥

जीमूतश्यामलांगं कलुषितनयनं कासरं चाधिरूढः । छायाजायासहायः स्फुरदुरगमनोभूषणो माषवर्णः ॥ अस्यामाहूयमानो मखभुवि यमराट् कुंतलोदंबुदालिः । सोऽयं दंडोद्यपाणिः प्रथयतु धरणीं दक्षिणाशावकाशां ॥ ३ ॥ ॐ आँ क्रौं ह्रीं कृष्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे यमदेव अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ यमाय स्वाहा । यमपरिजनाय स्वाहा । यमानुचराय स्वाहा । यममहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवःस्वःस्वाहा । स्वधा स्वाहा ॥ हे यमदेव इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ शांतिधारां ॥ यमाह्वानं ॥ ३ ॥

## ॥ दक्षिणपश्चिमायां दिशि ॥

धर्मध्यानार्कभीत्यांतकवरुणादिशोरंतरेऽप्यैकयदेशे । पुंजीभूतांधकारांजनगिरिसदृशं श्यामरक्षोऽधिरूढः ॥ नीलांगो यज्ञभूम्यामतिनिशिनमहामुद्गरव्यापमुष्टिः । सोऽस्यां पायादपायान्निजदिशि वसुधां यातुधानप्रधानः ॥ ४ ॥ ॐ आँ क्रों ह्रीं श्यामवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्ह-सपरिवार हे नैर्ऋतदेव अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ नैर्ऋताय स्वाहा । नैर्ऋतपरिजनाय स्वाहा । नैर्ऋतानुचराय स्वाहा । नैर्ऋतमहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवःस्वःस्वाहा स्वधा स्वाहा ॥ हे नैर्ऋतदेव स्वग-णपरिवारपरिवृत इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ शांतिधारां ॥ नैर्ऋताह्वानं ॥

## ॥ पश्चिमायां दिशि ॥

तालस्थूलायतोऽथ धृतकरकरकांभोजनीनागहारो । ग्रैवेयाकल्परम्यं करिमकरमारुह्य कांतासमेतः ॥ आयत्तो ह्यध्वरोर्वीमरुणमणिगणालंकृतोद्दामवेषः । प्रत्यक्काष्ठां प्रवालद्युतिरवतु पतिर्यादसां पाशपाणिः

॥ ५ ॥ ॐ आँ क्रों ह्रीं सुवर्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार वरुण अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ वरुणाय स्वाहा । वरुणपरिजनाय स्वाहा । वरुणानुचराय स्वाहा । वरुणमहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवःस्वःस्वाहा । स्वधा स्वाहा । हे वरुणदेव स्वगणपरिवारपरिवृत इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा । यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारां वरुणाह्वानं ॥

## ॥ पश्चिमोत्तरस्यां दिशि ॥

चंचच्चंद्रावदातं तुरगमुरुजवं मुष्टिसंमर्यमध्यमारूढो वायुवेगी प्रिययुवतियुतः पादयाप्तप्रशास्तः । निष्टप्तस्वर्णवर्णोऽवतु वरुणधनाध्यक्षयोः श्रीगरिष्ठां स्वां काष्ठां यागनिष्ठां परिमणितजगद्बंधुरो गंधवाहः ॥ ६ ॥ ॐ आँ क्रों ह्रीं सुवर्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे

 पवनदेव अत्रागच्छागच्छ संवौषट् स्वाहा। ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ आँ० अत्र 
मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं॥

## ॥ अथ बलिः ॥

ॐ पवनाय स्वाहा। पवनपरिजनाय स्वाहा। पवनानुचराय स्वाहा। पवनमहत्तराय स्वाहा। अग्नये स्वाहा। अनिलाय स्वाहा। वरुणाय स्वाहा। प्रजापतये स्वाहा। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहा। स्वधा स्वाहा॥ हे पवनदेव स्वगुणपरिवार-परिवृत इदमर्घ्यमित्यादि॥ यस्यार्थं०॥ शांतिधारां॥ पवनाह्वानं॥ ६॥

## ॥ उत्तरस्यां दिशि ॥

कुंदेंदुद्योतितांशद्युतिपटललसद्राजहंसायमानं। सौरभ्यामोदितांतर्भुवमणिविलसत्पुष्पकाख्यं विमानं॥ अध्यासीनः कुलस्त्रीनिवहपरिवृतो व्यावृतोऽयं नु यत्र। स्वामाशां पातु शश्वद्वितरितविभवस्तारकः कुबेरः॥ ७॥ ॐ आँ क्रों ह्रीं सुवर्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे धनददेव अत्रागच्छागच्छ संवौषट् स्वाहा। ॐ आँ क्रों ह्रीं सुवर्णवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे धनददेव अत्र तिष्ठ २ ठठ स्वाहा। ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं॥

## ॥ अथ बलिः ॥

ॐ धनदाय स्वाहा। धनदपरिजनाय स्वाहा। धनदानुचराय स्वाहा। धनदमहत्तराय स्वाहा। अग्नये स्वाहा। अनिलाय स्वाहा। वरुणाय स्वाहा। प्रजापतये स्वाहा। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहा। स्वधा स्वाहा॥ हे धनददेव स्वगुणपरिवार-परिवृत इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा। शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा॥ शांतिधारां॥ धनदाह्वानं॥ ७॥

## ॥ पूर्वोत्तरस्यां दिशि ॥

भांकारस्फारभेरीसमदलनिनदं पांडुरांगं गवींद्रं। पार्वत्यामाधिरूढः शशिकरधवलः सर्वभूषाभिरामः॥ श्रीकंठः कालकंठो विमलविधुकलालोलमौली कपर्दी। शूली व्याहूयतेऽसौ धनदसुरदिशोरंतरोर्वी वनेतुं॥ ॐ आँ क्रों ह्रीं शुभ्रवर्ण प्रशास्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे ईशानदेव अत्रागच्छागच्छ संवौषट् स्वाहा। ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं॥

## ॥ अथ बलिः ॥

ॐ ईशानाय स्वाहा । ईशानपरिजनाय स्वाहा । ईशानानुचराय स्वाहा । ईशानमहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । स्वधा स्वाहा ॥ हे ईशानदेव स्वगुणपरिवारपरिवृत इदमर्घ्यमित्यादि ॥ यस्यार्थं क्रियते० ॥ शांतिधारां ॥ ईशानाह्वानं ॥ ८ ॥

## ॥ अधरस्यां दिशि ॥

आशामातंगकुंभस्थलकठिनमहाकच्छपं धूपधूम्रं । पद्मावत्या सहोढो जलधरपटलश्यामलं कोमलांगं ॥ रक्षलक्ष्मणलक्ष्म्या हरिहरहरितांतराले मखोर्वी । भास्वत्सस्वस्तिकांको मकुटतटमणिद्योतिताशः फणीशः ॥ ९ ॥ ॐ आँ क्रों ह्रीं धवलवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे धरणींद्र अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ धरणींद्राय स्वाहा । धरणींद्रपरिजनाय स्वाहा । धरणींद्रानुचराय स्वाहा । धरणींद्रमहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा ।

भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । स्वधा स्वाहा ॥ हे धरणींद्रदेव स्वगुणपरिवारपरिवृत इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांतिधारां ॥ धरणींद्राह्वानं ॥ ९ ॥

## ॥ ऊर्ध्वायां दिशि ॥

उद्यत्तिग्मांशुभिः सुस्फुरितनिजजटाच्छादितस्कंधगौरं । बालेंदुस्पर्द्धिदंष्ट्रांकुरकलितमहाभीष्मवक्त्रं मृगेंद्रं ॥ रोहिण्यामाधिरूढं भगवदभिषवक्षीरगौरांशुभिश्च । चाये लक्षांकितांगं निर्ऋतवरुणयोरंतरे कुंतहस्तं ॥ १० ॥ ॐ आँ क्रों ह्रीं शुभ्रवर्ण प्रशस्तसर्वलक्षणसंपूर्ण स्वायुधवाहनवधूचिन्हसपरिवार हे सोमदेव अत्रागच्छागच्छ संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ सोमाय स्वाहा । सोमपरिजनाय स्वाहा । सोमानुचराय स्वाहा । सोममहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा भूः स्वाहा

भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । स्वधा स्वाहा ॥ हे सोमदेव स्वगुणपरिवार-परिवृत इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ शांतिधारां ॥ सोमाह्वानं ॥ १० ॥

## ॥ अथ दिक्कन्यकाह्वानं ॥

स्फुरितनरतनुश्रीन्हीलसद्धृत्युपेताः । द्युतिमतिविजयासत्कीर्त्तिलक्ष्मीश्च पश्चात् ॥ विधृतविविधभूषा-विद्युदुद्योतदेहा । जिनपतिसवनेऽस्मिन् व्याह्वये दिक्पुरंध्रे ॥ १ ॥ ॐ न्हीं क्रों प्रशस्तवर्णसर्वलक्षण-संपूर्णयानायुधयुवतिजनपरिवृता हे श्रीन्हीधृतिद्युतिमतिविजयाकीर्त्तिबुद्धिलक्ष्म्यश्च पश्चाद्दिक्कन्यका अत्रागच्छतागच्छत संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्नि-हिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ दिक्कन्यकाभ्यः स्वाहा । दिक्कन्यकापरिजनेभ्यः स्वाहा । दिक्कन्यकानुचरेभ्यः स्वाहा । दिक्कन्य-कामहत्तरेभ्यः स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा ॥ हे दिक्कन्यकाः स्वगुणपरिवारपरिवृता इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं धूपं बलिं स्वास्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा० ॥ शांतिधारां ॥ इति दिक्कन्यकाह्वानं ॥

## ॥ अथ चतुर्णिकायामरेंद्राह्वानं ॥

संतस्ते मे भवंतो भवनजविबुधा व्यंतराः स्वर्गवासा। ज्योतिष्काः स्वस्वदेवीपरिजनविभवाश्विन्हवा-हायुधाढ्याः ॥ संभूयायांतु सर्वे जिनपतिसवने भक्तितः कर्तुकामाः ॥ पुण्यं पुण्यानुबंधिप्रथितगुण-गणालंकृताः सेव्यभव्याः ॥ १ ॥ ॐ आँ क्रों ह्रीं प्रशस्तवर्णसर्वलक्षणसंपूर्णस्वायुधवाहनवधूचि-न्हसपरिवारा हे चतुर्निकायामरेंद्राः अत्रागच्छतागच्छत संवौषट् स्वाहा। ॐ आँ० अत्र तिष्ठत २ ठठ स्वाहा। ॐ आँ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनस-न्निधीकरणं ॥

## ॥ अथ बलिः ॥

ॐ चतुर्णिकायामरेंद्रेभ्यः स्वाहा। तत्परिजनेभ्यः स्वाहा ॥ तदनुचरेभ्यः स्वाहा। तन्महत्त-रेभ्यः स्वाहा। अग्नये स्वाहा। अनिलाय स्वाहा। वरुणाय स्वाहा। प्रजापतये स्वाहा। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहा। स्वधा स्वाहा ॥ हे चतुर्णिकायामरेंद्राः स्वगुणपरिवारपरिवृता इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ शांतिधारा ॥ इति चतुर्णिकायामरेंद्राह्वानं ॥

## ॥ अथ इंद्रादिसर्वदेवताह्वानं ॥

आयात यूयमेतेऽप्यमरपरिवृढाः प्राप्तसन्मानदानाः । स्थाने स्वस्मिन् समाध्वं प्रमुदितमनसो लब्धलक्ष्माधिकाराः ॥ निघ्नंतो विघ्नवर्गं परिजनसहिता यागभूमिं समंतात् । दिक्पालाः पालयध्वं विधिरभिषवणे वर्धतां वर्धमानाः ॥ १ ॥ ॐ ऱ्हीं क्रों प्रशस्तवर्णसर्वलक्षणसंपूर्ण-स्वायुधवाहनवधूचिन्हसपरिवारा हे इंद्रादयः सर्वे देवता इंद जलादिकमर्चनं गृण्हीध्वं २ ॐ भूर्भुवः स्वः स्वाहा । स्वधा । इंद्रादिसर्वदेवताभ्यः पूर्णार्घ्यं ॥ इति इंद्रादिसर्वदेवताह्वानं ॥ इत्येवं लोकपाला ये समाहूता मयाऽधुना । सज्जासनेषु ते सर्वे सम्यक् तिष्ठंतु सादराः ॥ १ ॥ विघ्नान् निघ्नंतु निःशेषान् साह्यास्ते संतु ते मम । सप्तधान्यैः पयःकुंडे दद्ये पूर्णाहुतिं पुनः ॥ २ ॥ ( येथें या मंत्रानें जलकुंडांत सप्तधान्यांनीं पूर्णाहुति करणें ) इति महाभिषेकविधानं समाप्तं ॥

## ॥ अथ अक्षरमालागद्यम् ॥

प्रत्येकाक्षरभेदभिन्ननिरतीचारप्रमाणोदितं । स्याद्वादांबुधिचंद्रमा इति जिनेशानां चतुर्विंशतिं ॥ आनम्याक्षरमालिकाप्रतिमहाबंधुप्रबंधं सदा । बंधं बंधुरबंधवर्णनिकरैः प्रीत्यै करोमि क्रमात् ॥ १ ॥

## ॥ राग रगळी ॥

अमरनरपतिसमितिकृतपादपीठाय । आदित्यकोटिरुचिवृषभजिनराजाय ॥ १ ॥ इतिहासभासिबहुजयरत्नकोशाय । ईश्वरश्रीगणभृदजितपरमेशाय ॥ २ ॥ उदधिसमधैर्याय बंधुरनिवासाय । ऊर्जितज्ञानपतिशंभवजिनेशाय ॥ ३ ॥ ऋबिडादिगणभरणनमितपदमहिताय । ॠविहितनुतिलसदभिनंदनजिनेशाय ॥ ४ ॥ ऌस्तुतिक्रमकरणपरमगुरुनाथाय । ॡपूजितप्रमदसुमतियतिनाथाय ॥ ५ ॥ एकांतवादिमदकुंजरमृगेशाय । ऐश्वर्यबोधनिधिपद्मप्रभेशाय ॥ ६ ॥ ओरचितचरणवरसुपार्श्वनाथाय । औविकारविहितमहामतिसुपार्श्वाय ॥ ७ ॥ अंरूपपरिपूर्णजगदैकनाथाय । अः श्रवत्यक्तमदश्रीचंद्रनाथाय ॥ ८ ॥ करुणारससारकृतमत्यनंताय । खलकर्मनिरुहपटुपुष्पदंताख्याय ॥ ९ ॥ गजवैरिविष्टराधिपभूतलेशाय । घट्टिरदहरिराजसमशीतलेशाय ॥ १० ॥ ङप्रस्तुतत्रिकरणभद्राय । चरणप्रणीतात्मश्रेयोजिनेंद्राय ॥ ११ ॥ छत्रत्रयालंकृतश्रेयोराज्याय । जन्मादिभीतिविरहितवासुपूज्याय ॥ १२ ॥ झटितिनिश्चयितार्थसुज्ञानविमलाय । ञप्रक्षयीभूतकीर्तिधरविमलाय ॥ १३ ॥ टक्यादिकीर्तिपरिपूर्णजगदंताय । ठप्रमुखनररहितनुतिलसदनंताय ॥ १४ ॥ डमुरासनायोगर्जितकर्मधर्माय । ढक्कादिवाद्यरवमाहितजिनधर्माय ॥ १५ ॥ णहधातुवाच्यविरहितशांतिनाथाय । तत्वविद्यामृतोदधिशांतिनाथाय ॥ १६ ॥ थत्यागनिर्मलीकृतकुंथुनाथाय । दर्शनादित्रयोर्जितकुंथुनाथाय

॥ १७ ॥ धनदविरचितसमवशरणवरनाथाय । नलिनरुचिपदविमलारंजिननाथाय ॥ १८ ॥ परमपदसुखमयमुदमल्लिनाथाय । फणिपतिकृतेज्याधिपतिमल्लिनाथाय ॥ १९ ॥ वस्त्रादिविशदमरकीर्त्तिपरमेशाय । भवभारभीतिहरमुनिसुव्रतेशाय ॥ २० ॥ महनीयगुणनिवहभूषनमिनाथाय । यमनियमपरिकलितहृदयनमिनाथाय ॥ २१ ॥ रजतगिरिहरहासितसितकीर्तिनाथाय । ललितगुणगणजलधिविधिनेमिनाथाय ॥ २२ ॥ वसुधाधिपतिकोटिनुतपार्श्वनाथाय । शतपत्रपीठरंजितपार्श्वनाथाय ॥ २३ ॥ षड्दर्शनस्तोत्रशतवर्धमानाय । सप्तभंगीमहोदयवर्धमानाय ॥ २४ ॥ हरिहरहिरण्यगर्भस्तोत्रपात्राय । दक्षिणाधिपतिविमलबोधवरनेत्राय ॥ २५ ॥ जातात्मने नमः । पूतात्मने नमः । शुद्धात्मने नमः । बुद्धात्मने नमः ॥ इत्यक्षरमालागर्धं समाप्तम् ॥

## ॥ अथ सकलीकरणम् ॥

स्वयंभुवं महादेवं ब्रह्माणं पुरुषोत्तमं । जिनेंद्रचंद्रमानम्य वक्ष्ये देवार्चनक्रमं ॥ इंद्रश्चैत्यालयं गत्वा दीक्ष्य यज्ञांगसज्जनः । यागमंडलपूजार्थं परिकर्माचरेदिदं ॥ १ ॥ स्नानानुस्नानभागंतर्धौतवस्त्रो रहः स्थितः । कृतेर्यापथसंशुद्धिः पर्यंकस्थोऽमृतोक्षितः ॥ २ ॥ दहनप्लावने कृत्वा दिव्यस्वांगेषु दीक्ष्य च । न्यस्य पंचनमस्कारान् प्रयुक्तगुरुमुद्रिकः ॥ ३ ॥ व्युत्सृज्यांगं पूरकेण व्याप्ताशेषजगत्त्रयं । शुद्धस्फटिकसंकाशं प्रातिहार्यादिभूषितं ॥ ४ ॥ पादांतननमद्विश्वं स्फूर्जतं ज्ञानतेजसा । परमात्मा-

नमात्मानं ध्यायं जप्त्वा पराजितं ॥ ५ ॥ परिणामविशुद्धयास्तपापौघः पुण्यपुंजभाक् । ध्वस्तापाय-
चयः कुर्याज्जिनयज्ञांगसंविधीन ॥ ६ ॥ झं ठं स्वरावृतं तोयमंडलद्वयवेष्टितं । तोये न्यस्याग्रतर्जन्या



तेनानुस्नानमाचरेत् ॥ १ ॥ अर्धचंद्रघटीरूपं पंचपत्रां-
बुजाननं । नांतर्लांताप्रदिक्कोणं धवलं जलमंडलं ॥ २ ॥
ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय २
सं २ क्लीं २ ब्लूं २ द्रां २ द्रीं २ द्रावय २ हं झं
क्ष्वीं क्ष्वीं हं सः स्वाहा । इत्यमृतस्नानमंत्रः । अनुस्नानं ॥
( येथें बाजूस काढलेलें यंत्र, एका तबकांत काढून
पाण्यांत ठेऊन, तेंच पाणी तर्जनी बोटानें घेऊन,
हा वरील मंत्र ह्मणत माथ्यावर शिंपून घेणें. ) पृथ-
ग्विद्धैकवाक्यांतमुक्तोच्छ्वासं जपेन्नव । वारान् गाथान्
प्रतिक्रम्य निषिद्यालोचयेत्तथा ॥ १ ॥ पडिक्कमामि
भंते ईरियावहियाए । विराहणाए । अणागुत्ते । आइग्गमणे । णिग्गमणे । ठाणे । गमणे । चक्कमणे
पाणुग्गमणे । बीजुग्गमणे । हरिदुग्गमणे । उच्चारपस्सवणखेळसिंहाणयवियडिपइट्टावणियाए ।

जे जीवा। एइंदिया वा। बीइंदिया वा। तिइंदिया वा। चउरिंदिया वा। पंचेंदिया वा। णुल्लिदा वा। पिल्लिदा वा। संघट्टिदा वा। संघादिदा वा। ओद्दाविदा वा। परिदाविदा वा। किरिंच्छिदा वा। लेस्सिदा वा। छिंदिदा वा। भिंदिदा वा। ठाणदो वा। ठाणचक्कमणदो वा। तस्स उत्तरगुणं। तस्स पायच्छित्तकरणं। तस्स विसोहीकरणं। णमोकारं करेमि। तावकायं। पावकम्मं। दुच्चरियं वोस्सरामि। ॐ णमो अरिहंताणं। णमो सिद्धाणं। णमो आइरियाणं। णमो उवज्झायाणं। णमो लोए सव्वसाहूणं॥ (येथें हा नमोकारमंत्र, नऊ वेळा म्हणून जप करणें.) ॐ नमः परमात्मने नमोऽनेकांताय शांतये॥ ईर्यापथि प्रचलताद्य मया प्रमादादेकेंद्रियप्रमुखजीवनिकायबाधाः। निर्वर्तिता यदि भवेदयुगांतरीक्षा मिथ्या तदस्तु दुरितं गुरुभक्तितो मे॥ १॥ इच्छामि भंते ईरियावहमालोचेउं। पुव्वुत्तरदक्खिणपच्छिमचउदिसु। विदिसासु। विहरमाणेण। जुगुत्तरादिट्ठिणा दट्ठव्वा। डवडवचरियाए। पमाददोसेण पाणभूदजीवसत्ताणं एदेसिं उवघादो। कदो वा। कारिदो वा। किरंतो वा। समणुमणियं। तस्स मिच्छा मे दुक्कडं॥ पापिष्ठेन दुरात्मना जडधिया मायाविना लोभिना। रागद्वेषमलीमसेन मनसा दुष्कर्म यन्निर्मितं॥ त्रैलोक्याधिपते जिनेंद्र भवतः श्रीपादमूलेऽधुना। निंदापूर्वमहं जहामि सततं निर्वृत्तये कर्मणां॥ ईर्यापथिशोधनं॥ गुरुमुद्राग्रे भूः क्षं वं ह्वः पोहाभ्यांऽमृतैः स्वकीयप्रवहद्भिः सिष्य-

मानें स्वं ध्यायन्मंत्रमिमं पठेत् । ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय २ सं २ क्लीं २ ब्लूं २ द्रां २ द्रीं २ द्रावय २ हं झं क्ष्वीं क्ष्वीं हं सः स्वाहा । ( हा मंत्र अमृतस्नानाचा आहे असें जाणावें. ) ततः परमेष्ठिमुद्राग्रे असिआउसायुतानि तदुपरि झं वं ह्वः पः हः इत्यमृतबीजानि निक्षिप्य । तन्मुद्राग्रं शिरस्यधोमुखमुद्धृत्यामृतस्नानं ॥ ( येथें किरंगली आदिकरून पांची बोटा-वर अ सि आ उ सा या अक्षरांसह झं वं ह्वः पः हः ह्रीं बीजाक्षरें लिहून पंचगुरुमुद्रा करणें. व त्या मुद्रेचें तोंड माथ्यावर खालीं करून धरणें आणि वरील अमृतस्नानमंत्रानें अमृतस्नान करणें. ) अग्निमंडलमध्यस्थरेफैर्ज्वालाशतांकुरैः । सर्वांगदेशगैर्विश्वग्धूयमानैर्नभस्वता ॥ ॐ ह्रीं नमोऽर्हते भगवते जिनभास्करस्य बोधसहस्रकिरणैर्मम कर्मेंधनद्रव्यं शोषयामि घे २ स्वाहा । द्रव्यशोषणं ॥ स्वस्तिकाग्रत्रिकोणांतर्गतरेफं शिखावृतं । अग्निमंडलमोंकारं गर्भरक्ताभमास्थितं ॥ २ ॥ सप्तधातुमयं देहं देहेद्ध प्रार्चिषां चयैः । सर्वांगदेशगैर्विश्वग्धूयमानैर्नभस्वता ॥ ३ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः ॐ ४ रं ४ हम्ल्व्र्यूं जं २ सं २ दंह २ त्रिकर्ममलं दह २ दुःखं दह २ हूं फट् घे २ स्वाहा । इत्युच्चार्य कर्मेंधनानि स्मरेत् । दहनं ॥ नाभिस्तु सुस्वरद्व्यष्टपत्राब्जांतरमर्हतः । दहेद्धीपौधरुध्याद्धिर-ष्टकर्ममयं वपुः ॥ ४ ॥ वृत्तात्सबिंदुदिक्कोणस्वायाद्धामूत्रिकाकृतेः । कृष्णाद्वायुपुराद्वातैः प्रेरयेद्भस्मवा-युभिः ॥ व्योमव्यापिघनासारैः स्वमाप्लाव्यामृतस्रुतं । स्वे स्वं ध्यायन् सृजेदेवममृतैरन्यार्दिदुवत् ॥ ६ ॥





ॐ ह्रीं अर्हं श्रीजिन प्रभंजनाय कर्मभस्मविधूननं कुरु २ स्वाहा । इत्युच्चार्य तस्मान्नित्यमात्मनि स्मरेत् ॥ प्लावनं ॥

नाभिमंडल



वायु मंडल



वरुण मंडल



आकाश मंडल



( ह्रीं अग्निमंडलादि पांच यंत्रे, फक्त स्मरणांत आणून कांहींवेळ ध्यान करणें. )

## ॥ अथ हस्तसंघटनम् ॥

करमध्ये लिखेद्यंत्रं काश्मीरादिसुमिश्रितैः । रविसोमसमुद्धार्यं तन्मध्ये च स्वनाहतं ॥ [illegible] सन्मंत्रादिकं ॥

चंद्रप्रभाऽनाहतयंत्रम्




पद्मप्रभाऽनाहतयंत्रम्



( ह्या दोनीं यंत्रापैकी एक उजव्या हातांत व एक डाव्या हातांत लिहिणें. )

हस्तद्वयकनीयस्याद्यंगुलीनां यथाक्रमं । मूलरेखात्रयस्योर्ध्वमग्रे च युगपत्सुधीः ॥ न्यस्यों ह्रामादि-ह्रोमाख्यान् नमस्कारान् करौ मिथः । संयोज्यांगुष्ठयुग्मेन व्यस्तान् स्वांगेषु विन्यसेत् ॥ ॐ ह्रीं अर्हं वं मं हं सं तं पं असिआउसा हस्तसंघटनं करोमि स्वाहा । हंस्तसंघटनं ॥ ( येथें यंत्र काढ-

---

१ हस्तसंघटनं–हात जोडणें.

लेख्या दोनी हातांच्या किरंगळी आदिकरून पांच बोटांच्या मुळापासून तीन रेघेवर व शेंड्यावर क्रमानें ॐ ऱ्हां णमो अरहंताणं स्वाहा, ॐ ऱ्हीं णमो सिद्धाणं स्वाहा, ॐ ऱ्हूं णमो आइरियाणं स्वाहा, ॐ ऱ्हौं णमो उवज्झायाणं स्वाहा. ॐ ऱ्हः णमो लोएसव्वसाहूणं स्वाहा हे नमस्कारमंत्र लिहून या वरील मंत्रानें हात जोडणें. )



## ॥ अथ करन्यासः ॥

हृदि न्यसेन्नमस्कारमोंऱ्हांपूर्वकमर्हतां । पूर्वे शिरसि सिद्धानामोंऱ्हीं पूर्वा नमस्कृतिं ॥ १ ॥ ॐ ऱ्हूं पूर्वकमाचार्यस्तोत्र शीर्षस्य दक्षिणे । ॐ ऱ्हौं पूर्वमुपाध्यायस्तवं पश्चिमदेशतः ॥ २ ॥ ॐ ऱ्हः पूर्वा ततो वामे सर्वसाधुनमस्कृतिं । न्यसेत्पंचाप्यमून्मंत्रान् शिरस्येवं पुनः सुधीः ॥ ३ ॥ ॐ ऱ्हां णमो अरहंताणं स्वाहा हृदये । ॐ ऱ्हीं णमो सिद्धाणं स्वाहा ललाटे । ॐ ऱ्हूं णमो आइरियाणं स्वाहा शिरसो दक्षिणे । ॐ ऱ्हौं णमो उवज्झायाणं स्वाहा पश्चिमे । ॐ ऱ्हः णमो लोएसव्वसाहूणं स्वाहा वामे ॥ पुनस्तानिमान्मंत्रान् शिरसः प्राग्भागे दक्षिणे पश्चिमे उत्तरे च

---

२ करन्यासः—पुढील मंत्रानें सांगितलेल्या स्थानावर जोडलेले हात ठेवणें, ३ हृदये-छातीवर, ४ ललाटे—कपाळावर, ५ शिरसो दक्षिणे डोक्याच्या उजव्या बाजूवर, ६ पश्चिमे-डोक्याच्या मागे, ७ वामे डोक्याच्या डाव्या बाजूवर.

क्रमेण विन्यसेत इति प्रथमांगन्यासः ॥ प्राग्भागे शिरसो दक्षिणे पश्चिमे तथा । वामे चैतेषु विन्यासक्रमो वारे द्वितीयके ॥ १ ॥ ॐ ऱ्हाँ णमो अरहंताणं स्वाहा शिरमध्ये । ॐ ऱ्हीं णमो सिद्धाणं स्वाहा ललाटे । ॐ ऱ्हूँ आइरियाणं स्वाहा शिरसो दक्षिणे । ॐ ऱ्हौं णमो उवझ्झायाणं स्वाहा पश्चिमे । ॐ ऱ्हः णमो लोए सव्वसाहूण स्वाहा वामे । पुनरप्यमूनेव मंत्रान् शिरमध्ये तत्पूर्वादिषुच विन्यसेत् ॥ इति द्वितीयांगन्यासः ॥ भुजयुग्मे च नाभौ च पार्श्वयुग्मे तृतीयके । कंठवाह्यतनुन्यासं कुर्यान्मंत्रेण मंत्रवित् ॥ १ ॥ ॐ ऱ्हाँ णमो अरहंताणं स्वाहा नाभौ । ॐ ऱ्हीं णमो सिद्धाणं स्वाहा नाभेर्दक्षिणे । ॐ ऱ्हूँ णमो आइरियाणं स्वाहा नाभेर्वामे । ॐ ऱ्हौं णमो उवझ्झायाणं स्वाहा कवचाय हुं दक्षिणभागभुजे । ॐ ऱ्हः णमो लोए सव्वसाहूणं स्वाहा अस्त्राय फट् वामभुजे ॥ ॐ णमो अरहंताणं ह्म्ल्व्र्यूं मम हृदयं रक्ष २ ऱ्हाँ स्वाहा । ॐ णमो सिद्धाणं ह्म्ल्व्र्यूं मम शिरं रक्ष २ ऱ्हीं स्वाहा । ॐ णमो आइरियाणं छ्म्ल्व्र्यूं मम शिखां रक्ष २ ऱ्हूँ स्वाहा । ॐ णमो उवझ्झायाणं स्म्ल्व्र्यूं मम वस्त्राणि वज्रकवचं रक्ष २ ऱ्हौं स्वाहा । ॐ णमो लोए सव्वसाहूणं ह्म्ल्व्र्यूं मम दुष्टं निवारय २ अस्त्राय फट् ऱ्हः स्वाहा ॥ इति तृतीयांगन्यासः ॥

---

८ शिरमध्ये–डोक्याच्या मध्यभागी, ९ नाभौ- बेंबीवर, १० नाभेर्दक्षिणे–बेंबीच्या उजव्या बाजूवर, ११ नाभेर्वामे डाव्या बाजूवर, १२ दक्षिणभागभुजे–उजव्या भुजावर, १३ वामभुजे डाव्या भुजावर.

## ॥ अथ अंगन्यासभेद: ॥



तथा वामप्रदेशिन्यां न्यस्य पंचनमस्कृतिं । पूर्वादिदिक्षु रक्षार्थं दशस्वपि निवेशयेत् ॥ १ ॥ अ सि आ उ सा एतानि पंचाक्षराणि तर्जन्यंगुल्यां संस्थाप्य कूटबीजानि ॥ (अ सि आ उ सा हीं पांच बीजाक्षरें डाव्या हाताच्या तर्जनी बोटावर लिहून, तें बोट सरळ करून पुढें सांगितलेल्या मंत्रानें पूर्वादि दाही दिशेस क्रमानें दाखवीत जाणें.) आँ हाँ क्षाँ पूर्वे । ई ऱ्हीं क्षीं अग्नौ । ऊँ हूँ क्षूँ यमे । ॠँ हें क्षें नैर्ऋते । एँ हैं क्षैं वरुणे । ऐं हों क्षों वायव्ये । ओं हौं क्षौं कुबेरे । औं हं ईशाने । अं हः क्षः भूतले । अः ह्रीं क्षीं आकाशे ॥ दिशाबंधनं ॥ वर्मितोऽनेन सकलीकरणे महस्मनाः । कुर्वन्निष्टानि कर्माणि केनाप्येनानि विन्यसेत् ॥ १ ॥ ॐ नमोऽर्हते सर्वं रक्ष २ हूं फट् स्वाहा । अनेन पुष्पाक्षतं समवागन् प्रजाप्य परिचारकाणां शीर्षेषु क्षिपेत् ॥ इति परिचारकरक्षः ॥ (येथें "ॐ नमोर्हते सर्वं रक्ष २ हूं फट् स्वाहा" ह्या मंत्रानें अक्षता व फुलें ७ वेळा मंत्रून, परिचारकाच्या माथ्यावर टाकून परिचारक नेमणें.) ॐ हूं फट् किरीट घातय २ परविघ्नान् स्फोटय २ सहस्रखंडान् कुरु २ परमुद्रां छिंद २ परमंत्रान् भिंद २ क्ष फट् स्वाहा ॥ अनेन सिद्धार्थानभिमंत्र्य सर्वविघ्नोपशमनार्थं सर्वदिक्षु क्षिपेत् ॥ इति सकलीकरण विधानं (येथें ॐ हूं फट् किरीट घातय २ इत्यादि मंत्रानें पांढऱ्या मोहऱ्या मंत्रून सर्व विघ्नें दूर होण्याकरितां दाही दिशेस टाकणें.)

विदधामि सलिलमलयजकुसुमैः संपूर्णपाणिपात्रेण । आह्वाहनम्य करणं स्थितिकरणं सन्निधीकरणं ॥ १ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अत्र स्वस्थाने एहि २ संवौषट् नमोऽर्हते स्वाहा । ॐ ह्रीं० अत्र स्वस्थाने तिष्ठ २ ठउ नमोऽर्हते स्वाहा । ॐ ह्रीं ममात्र सन्निहितो भव २ वषट् नमोऽर्हते स्वाहा ॥ आह्वाहनं स्थापनं सन्निधीकरणं ॥ आह्वाहनादिपुरःसरं पूजां कुर्यात् ॥ व्योमापगायुत्तमतीर्थवारां धारा वरांभोजपरागसारा । तीर्थंकराणामियमंघ्रिपीठे स्वैरं लुठित्वा त्रिजगत्पुनातु ॥ ॐ ह्रीं श्रीं अर्हं परमब्रह्मणे अनंतानंतज्ञानशक्तये जलं निर्वपामि स्वाहा ॥ १ ॥ काश्मीरकृष्णागरुगंधसारकर्पूरपौरस्त्यविलेपनेन । निसर्गसौरभ्यगुणोल्वणेन संचर्चयाम्यंघ्रियुगं जिनानां ॥ ॐ ह्रीं श्रीं अर्हं परमब्रह्मणे अनंतानंतज्ञानशक्तये गंधं निर्वपामि स्वाहा ॥ २ ॥ आमोदमाधुर्यनिदानकुंदसौंदर्यशुंभत्कलमाक्षतानां । पुंजैः समक्षैरिव पुण्यपुंजैर्विभूषयाम्यंघ्रिमुत्वं विभूनां ॥ ॐ ह्रीं० अक्षतान् ॥ ३ ॥ सुजातजातीकुमुदाब्जकुंदमंदारमल्लीबकुलादिपुष्पैः । मत्तालिमालामुखरैर्जिनेंद्रपादारविंदद्वयमर्चयामि ॥ ॐ ह्रीं० ॥ पुष्पं ॥ ४ ॥ नानारसैर्व्यंजनदुग्धसर्पिः पक्वान्नशाल्यन्नदधीक्षुभक्ष्यं । यथार्हहेमादिसुभाजनस्थं जिनक्रमाग्रे चरुमर्चयामि ॥ ॐ ह्रीं० ॥ चरुं ॥ ५ ॥ लोकार्चानामर्हतां भूर्भुवःस्वर्लोकानेकाकिकुर्वतां ज्ञानधाम्नां । दीपव्रातैः प्रोज्वलत्कीलजालैः पादांभोजद्वंद्वमुद्योतयामि ॥

ॐ ह्रीं० ॥ दीपं ॥ ६ ॥ श्रीखंडादिद्रव्यसंदर्भगर्भैर्व्यद्भूमामोदितस्वर्गवर्गैः । धूपैः पापव्यापकुच्छे-दहस्तमंघ्रीनर्हत्स्वामिनां धूपयामि ॥ ॐ ह्रीं० ॥ धूपं ॥ ७ ॥ फलोत्तमैर्दाडिममातुलुंगनारंग-पूगाम्रकपित्थपूर्वैः । हृद्घ्राणनेत्रोत्सवमुद्गिरद्भिः फलैर्भजेऽर्हत्पदपद्मयुग्मं ॥ ॐ ह्रीं० ॥ फलं ॥ ८ ॥ वार्गंधादिद्रव्यसिद्धार्थदूर्वानंद्यावर्तस्वस्तिकाद्यैरनिंद्यैः । हेमाः पात्रे प्रस्थितैर्विश्वनाथं प्रत्यानंदा-दर्घ्यमुच्चारयामि ॥ ॐ ह्रीं० ॥ अर्घ्यं ॥ ९ ॥ नमो जिनेंद्रपादाने वारिधारां निपातये ॥ भृंगारनालकोद्भ्रांतां विनमल्लोकशांतये ॥ शांतिधारां करोमि स्वाहा ॥ १० ॥ पुष्पांजलिः ॥ ११ ॥ वृषभो वृषलक्ष्मीवानजितो जितदुःकृतः । शंभवः संभवत्कीर्तिः स्वाभिनंदोऽभिनंदनः ॥ १ ॥ सुमतिः सुमतिः पद्मप्रभः पद्मप्रभः प्रभुः । सुपार्श्वः पार्श्वगाश्रिग्गुश्चंद्रश्चंद्रप्रभामितः ॥ २ ॥ पुष्पदंतस्तु पुष्पेषुः शीतलः शीतलोदितः । श्रेयान् श्रेयसिनां श्रेयान् वासुपूज्यः सुपूजितः ॥ ३ ॥ विमलो विमलोऽनंतज्ञानशक्तिरनंतजित् ॥ धर्मो धर्मोदयो नित्यं शांतिः शांतिक्रियाग्रणीः ॥ ४ ॥ कुंथुः कुंथ्वादिसुदयः सुरप्रीतिररप्रभुः । मल्लिर्मल्लजयो मल्लः सुव्रतो मुनिसुव्रतः ॥ ५ ॥ नमि-र्नेमत्सुरासारो नेमिर्नेमितपोरथी । पार्श्वः पार्श्वस्फुरज्ज्योतिः सन्मतिः सन्मतिप्रियः ॥ ६ ॥ एते तीर्थ-कृतोऽनंता भूतसद्भाविभिः समा । पुष्पांजलिप्रदानेन सत्कृताः संतु शांतये ॥ पुष्पांजलिः ॥ इति जिनयज्ञविधानं ॥

## ॥ अथ अर्हद्भक्तिविधानं ॥

यद्गर्भावतरे गृहे जनयितुः प्रागेव शक्राज्ञया षण्मासान्नवचारुरत्नकनकं वित्तेश्वरो वर्षति। भात्युर्वी मणिगर्भिणी सुरसरिन्नीरोक्षिता षोडशस्वप्नेक्षामुदितां भजंति जननीं श्रीदिक्कुमार्योऽपि तां ॥ १ ॥ प्रच्छन्नं जननीमुपास्य शयनादानीय शच्यार्पितं यं नत्वा सचतुर्णिकायविबुधः श्रीमत्करींद्राश्रितः। सौधर्मोऽकनिवेशितं सुरगिरिं नीत्वाऽभिषिच्यांबुना संयोज्योपचरत्यजस्रमसमैर्भोगैः सभासैः पुनः ॥२॥ किंकुर्वाणसुरेंद्रवृंदाविषयानंदाद्विरक्तः स्तुतो यो लौकांतिकनाकिभिः शिबिकया निष्क्रम्य गेहान्महैः। दिव्यैः सिद्धनतीद्धया वनतरुं पूत्वा परं दीक्षया भुंक्ते शुद्धनिजात्मसंविदमृतं स त्वं स्फुरस्येष नः ॥ ३ ॥ सम्यग्दृष्टिकृशाकृशव्रतशुभोत्साहेषु तिष्ठन् क्वचित् धर्मध्यानबलादयत्नगलिता आयुःक्षयः सप्तमे। दृष्टिघ्ना प्रकृतिः समातपचतुर्जातित्रिनिद्राद्विधाश्वभ्रस्थावरसूक्ष्मतिर्यगुभयोद्योतं कषायाष्टकं ॥ ४ ॥ क्लैब्यं स्त्रैणमथादिमेन नवमे हास्यादिषट्कं वृतं क्षिप्तोदीचपृथक्कृतादि दशमे लोभं कषायांतकं। निद्रां सप्रचलामुपांत्यसमये दृग्विघ्नविघ्नं चतुर्दीपं च क्षिपते परेण चरमे शुक्लेन सोऽर्हन्नसि ॥ ५ ॥ द्रव्यं भावमथादिमुक्ष्ममधियन्नुक्तान्वितर्कैः स्फुरन्नर्थव्यंजनमंगलैरपि पृथक्त्वेनापि संक्रामता। कर्माशाशनवस्थितेन मनसा प्रौढार्भकोत्साहकौत्कंठेन द्रुमिवाणुशं परशुना छिंदन्यनीष्वध्यसि ॥ ६ ॥ क्षुण्णे मोहरिपौ भजन्नुरुयथाख्याताधिराज्यश्रियं शुद्ध-

स्वात्मनि निर्विचारावलिमन पूर्वोदितार्थश्रितः । स्वच्छंदोच्छलदुज्वलोज्वलचिदानंदैकभावोद्गलच्छे-
षाखिलजवैभवस्फुटमामि त्वं नाथ निर्ग्रंथराट् ॥ ७ ॥ विश्वैश्वर्यविघातिघातिनिदितजोच्छेदोद्गतानंतदृक्-
संविद्वीर्यसुखात्मिकस्त्रिजगतार्कार्णे सदस्याग्स्थितः । जीवन्मुक्तिमुपींद्रचक्रमहितस्तीर्थं चतुस्त्रिंशता
कुर्वन्सोऽतिशयैः पुनास्यपि पशून् संप्रातिहार्याष्टकैः ॥ ८ ॥ देवाव्यक्तिविशेषसंव्यवहृते व्यक्तोल्ल-
सल्लांछनं श्रीमत् त्वत्क्रमपद्मयुग्ममतनोपास्तौ नियुंक्ते शुभैः । यक्षद्वंद्वमवश्यमेतदुचितैः प्राचैरिदा-
नींधनैर्देवैंद्रैरपि मान्यशैशवमुदोप्येध्यङ्गिरीशिष्यसि ॥ ९ ॥ द्वौ गंधौ रसवर्णबंधनवपुः संघातकात्
पंचशः षट् षट् संहननाकृतीः सुगती सम्वानुपूर्व्यासुखे । खवज्ये परघातकागुरुलघूछ्वासोपघाता-
यशोऽनादेयशुभसुस्वरस्थिरयुगं स्पर्शाष्टकं निर्मितं ॥ १० ॥ त्र्यंगोपांगमपूर्वदुर्भगयुते प्रत्येकनीचैः
कुले वेद्यं चान्यतमं द्विसमनिमुपांतेऽमूरयोगक्षणे । आदेयं सनिजानुपूर्विनृगती पंचाक्षजातिं यशः
पर्याप्तित्रमबादराणि सुभगं मर्त्यायुरुच्चैःकुलं ॥ ११ ॥ वेद्येनान्यतरेण तीर्थकृदिमाध्यग्रादशाप्यंतिमे
निःकृत्य प्रकृतीरनुत्तमसमाच्छिन्नक्रिया ध्यानतः । यः प्राप्तो जगदग्रमेकसमयेनोर्ध्वगमात्माष्टभिः
सम्यक्त्वादिगुणैर्विभाति स भवानत्रार्पितो व्याजगात् ॥ १२ ॥ मुक्तिश्रीपरिरंभनिर्भरचिदानंदेन
येनोज्झितं देहं द्राक् स्वयमस्थिसंहतिछटिद्वामेव मायामयं । कृत्वाग्नींद्रतिरीटपावकयुतैः श्रीचंदना-
द्यैर्मुदा संस्कृत्याभ्युपयांति भस्म भुवनाधीशाः स जीयात् प्रभुः ॥ १३ ॥ इत्थं बाह्यमथांतरं जिन

पते रूपं शिलादौ शुभे साकारे यदि वा परत्र विधिवत् संस्थाप्य नित्यं महेत् । दीर्घं जीवितमुद्घमर्थममितं संतानमुच्चैस्सुखं व्यामाशाधरमश्नुतेऽत्र च यशो दिव्याः श्रियोऽमुत्रतः ॥ १४ ॥ श्रेयोमार्गानभिज्ञानिह भवगहने जाज्वलद्दुःखदावस्कंदे चंक्रम्यमानानतिचकितमिमानुद्धरेयं वराकान् । इत्येवार्हत्पदानुग्रहरसविलसद्भावनोपात्तपुण्यान् प्रक्रांतैरेव वाक्यैः शिवपदमुचितैः शास्ति योऽर्हन् स नोऽव्यात ॥ १५ ॥ इत्यर्हद्भक्तिविधानं ॥

## ॥ अथ सिद्धभक्तिविधानं ॥

प्रक्षीणे मलवर्मणि स्वमहसि स्वात्मप्रकाशात्मके मज्जंतो निरुपाख्यमोहचिदचिन्मोक्षार्थतीर्थक्षिपां । कृत्वानाद्यपि जन्म शांतममृतं साध्याप्यनंतश्रितान् सद्दग्धीनयवृत्तसंयमतपान् सिद्धान् भजेऽर्घ्येण वा ॥ १ ॥ अनेनार्हत्प्रतिमाग्रे सिद्धनाम्ना अर्घ्यं दत्वा भक्त्या स्तुवीत ॥ तथा हि ॥ ( येथें श्रीजिनप्रतिमेस एक अर्घ्य देऊन पुढें लिहिल्याप्रमाणें स्तुति करणें. ) अर्हत्प्रतिष्ठारंभक्रियायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावंदनास्तवसमेतं श्रीमत्सिद्धभक्ति कायोत्सर्गं करोम्यहं । इत्युच्चार्य । ॐ णमो अरहंताणं । णमो सिद्धाणं । णमो आइरियाणं । णमो उवज्झयाणं । णमो लोए सव्वसाहूणं ॥

चत्तारि मंगळं । अरहंता मंगळं । सिद्धा मंगळं । साहू मंगळं । केवळिपण्णत्तो धम्मो मंगळं ॥ चत्तारि लोगुत्तमा । अरहंता लोगुत्तमा । सिद्धा लोगुत्तमा । साहू लोगुत्तमा ।

केवलिपण्णंतो धम्मो लोगुत्तमा ॥ चत्तारि सरणं पव्वज्जामि । अरहंते सरणं पव्वज्जामि । सिद्धे सरणं पव्वज्जामि । साहू सरणं पव्वज्जामि । केवलिपण्णंत धम्मं सरणं पव्वज्जामि ॥ अड्ढाइज्जेसु दीवेसु । दोसु समुद्देसु । पंणारसकम्मभूमिसु । जावरहंताणं । भयवंताणं । आदियराणं । तित्थयराणं । जिणाणं । जिणुत्तमाणं । केवलियाणं । सिद्धाणं । बुद्धाणं । परिणिव्वुद्धाणं । अंतयडाणं । पारयडाणं । धम्माइरियाणं । धम्मदेसियाणं । धम्मणायगाणं । धम्मवरचाउरंगचक्कवट्टीणं । देवाहिदेवाणं । णाणाणं । दंसणाणं । चरित्ताणं । सदा करेमि किरियम्मं । भंते सामाइयं । सव्वसावज्जोगं पच्चक्खामि । जावज्जीवं तिविहेण मणसा वचिया कायेण । ण करेमि । ण कारेमि । अण्णं करंतंपि ण समणुमण्णामि । तस्स भंते अइचारं पडिक्कमामि । णिंदामि अप्पाणं । गरहामि अप्पाणं । जावरहंताणं । भयवंताणं । पज्जुवासं करेमि तावकायं पावकम्मं दुच्चरियं वोसरामि ॥ ॐ णमो अरहंताणं॰ साहूणं ॥ जपं कुर्यात ॥
( येथें नमोकारमंत्राचा जप ९ । २७ । ५४ । १०८ सवडीनुसार करणें. )

## ॥ अथ थोसामि दंडकं ॥

थोसामि हं जिणवरे तित्थयरे केवलीअणंताजिणे । णरपवरलोयमहिए विहुवरयमले महप्पण्णे ॥ १ ॥
लोयसुज्जोयवरे धम्मं तित्थंकरे जिणे वंदे । अरहंते कित्तिस्से चउवीसं चेव केवलिणो ॥ २ ॥ उस-

हमजियं च वंदे संभवमभिणंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ ३ ॥ सुविहिं च पुप्फयंतं सीयलसेयंसवासुपूज्जं च । विमळमणंतं भयवं धम्मं संतिं च वंदामि ॥ ४ ॥ कुंथुं च जिणवरिंदं अरं च मल्लिं मुणिसुव्वयं च णमिं । वंदे अरिट्ठणेमिं तह पासं वड्ढमाणं च ॥ ५ ॥ एवं मए अहित्थुदा विहुयरयमळा पहीणजरमरणा । चउवीसं पि जिणवरा तित्थयरा मे पसीयंतु ॥ ६ ॥ कित्तियवंदियमहिया एदे लोगुत्तमा जिणा सिद्धा । आरोग्गणाणलाहं देंतु समाहिं च मे बोहिं ॥ ७ ॥ चंदेहिणिम्मळयरा अपिचेहिअहियप्पहा संता । सायरइवगंभीरा सिद्धा सिद्धिं मम दिसंतु ॥ ८ ॥ णमो अरहंताणं इत्यादि जपं कुर्यात् ॥ ( येथेंही पूर्ववत् नमोकारमंत्राचा जप करणें. ) सिद्धानुद्धूतकर्मप्रकृतिसमुदयान् साधितात्मस्वभावान् वंदे सिद्धिप्रसिध्यै तदनुपमगुणप्रग्रहाकृष्टितुष्टः । सिद्धिः स्वात्मोपलब्धिः प्रगुणगुणगणोच्छादिदोषापहाराद्योग्योपादानयुक्त्या दृषद इह यथा हेमभावोपलब्धिः ॥ १ ॥ नाभावः सिद्धिरिष्टा न निजगुणहतिस्तत्तपोभिर्न युक्तेरस्त्यात्मानादिबद्धः स्वकृतजफलभुक् तत्क्षयान्मोक्षभागी । ज्ञाता द्रष्टा स्वदेहप्रमितिरुपशमाहारविस्तारधर्मा ध्रौव्योत्पत्तिव्ययात्मा स्वगुणयुत इतो नान्यथा साध्यसिद्धिः ॥ २ ॥ स त्वंतर्बाह्यहेतुप्रभवविमलसद्दर्शनज्ञानचर्यासंपद्धेतिप्रघातक्षतदुरिततया. व्यंजिताचिंत्यसारैः । कैवल्यज्ञानदृष्टिप्रवरसुखमहावीर्यसम्यक्त्वलब्धिज्योतिर्वातायनाद्यैः स्थिरपरमगुणैरद्भुतैर्भासमानः ॥ ३ ॥ जानन्

पश्यन् समस्तं सममनुपरतं संप्रतृप्यन् वितन्वन् धुन्वन् ध्वांतं नितांतं निचितमनुसभं प्रीणयन्नीश-भावं । कुर्वन् सर्वप्रजानामपरमभिभवन् ज्योतिरात्मानमात्मा ह्यात्मन्येवात्मनासौ क्षणमुपजनयन्सन्स्वयंभूः प्रवृत्तः ॥ ४ ॥ छिंदन् शेषानशेषान्निगलबलकलींस्तैरनंतस्वभावैः सूक्ष्मत्वाग्र्यावगाहा-गुरुलघुकगुणैः क्षायिकैः शोभमानः । अन्यैश्चान्यव्यपोहप्रवणविषयसंप्राप्तलब्धिप्रभावैरूर्ध्वव्रज्यस्वभा-वात्समयमुपगतो धाम्नि संतिष्ठतेऽग्र्ये ॥ ५ ॥ अन्याकारामिहेतुर्न च भवति परो येन तेनाल्पहीनः प्रागात्मोपात्तदेहप्रतिकृतिरुचिराकार एव ह्यमूर्तिः । क्षुत्तृष्णाश्वासकासज्वरमरणजरानिष्टयोगप्रमोहव्या-पत्याद्युग्रदुःखप्रभवभवहतेः कोऽस्य सौख्यस्य माता ॥ ६ ॥ आत्मोपादानसिद्धं स्वयमतिशयवद्वीतबाधं विशालं वृद्धिह्रासव्यपेतं विषयविरहितं निःप्रतिद्वंद्वभावं । अन्यद्रव्यानपेक्षं निरुपमममितं शाश्वतं सर्वकालमुत्कृष्टानंतसारं परमसुखमनन्तस्य सिद्धस्य जातं ॥ ७ ॥ नार्थः क्षुत्तृड्विनाशाद्विविधरसयुतै-रन्नपानैरशुच्या नास्पृष्टैर्गंधमाल्यैर्न हि मृदुशयनैर्ग्लानिनिद्राद्यभावात् । आतंकार्त्तेरभावे तदुपशम-नसद्भेषजानर्थतावद्दीपानर्थक्यवद्वा व्यपगततिमिरे दृश्यमाने समस्ते ॥ ८ ॥ तादृक्संपत्समेता विविधनयतपःसंयमज्ञानदृष्टिचर्यासिद्धाः समंतात प्रविततयशसो विश्वदेवाधिदेवाः । भूता भव्या भवंतः सकलजगति ये स्तूयमाना विशिष्टैस्तान् सर्वान् नौम्यनंतान् निजगमिषुररं तत्स्वरूपं त्रिसंध्यं ॥ ९ ॥ अट्ठविहकम्ममुक्के अट्ठगुणड्ढे अणोवमे सिद्धे । अट्ठमपुढविणिविट्ठे णिट्ठियकज्जे

य वंदिमो णिच्चं ॥ १ ॥ तित्थयडियरसिद्धे जळथळआयासणिव्वुदे सिद्धे । अंतयडियरसिद्धे उक्कस्सजहण्णमज्झमोगाहे ॥ २ ॥ उड्ढमहतिरियळोए छव्विहकाळे य णिव्वुदे सिद्धे । उवसग्ग-णिरुवसग्गे दीवोवहिणिव्वुदे य वंदामि ॥ ३ ॥ पच्छाडीयरसिद्धे दुगतिगचउणाणपंचचारयमे । परिवडियापरिवडिये संजमसंमत्तणाणमादेहिं ॥ ४ ॥ साहरणासाहरणे असमुग्घादीदरे य णिव्वादे । ठियपळियंकाणिसण्णे विगयमळे परमणाणगे वंदे ॥ ५ ॥ पुंवेयं वेयंता पुरिसा जे खवगसेडि-मारूढा । सेसोदयेणवि तहा झाणुवजुत्ता य तेहु सिज्झंति ॥ ६ ॥ पत्तेयसयंबुद्धा बोहियबुद्धा य होंति ते सिद्धा । पत्तेयं पत्तेयं समयं च पणिवदामि सदा ॥ ७ ॥ पण णवदु अट्ठवीसा चउ तिय णवदी य दोण्णु पंचेव । बावण्णहीणबियसय पयडिविणासेण होंति ते सिद्धा ॥ ८ ॥ अइ-सयमव्वाबाहं सोक्खमणंतं अणोवमं परमं । इंदियविसयातीदं अप्पुत्थं अंचवंच ते पत्ता ॥ ९ ॥ असरीरा जीवघणा उवजुत्ता दंसणेण णाणेण । सायारमणायारं लक्खणमिदं तु सिद्धाणं ॥ १० ॥ सम्मत्तणाणदंसणवीरियसुहुमं तहेव अवगहणं । अगुरुलहुगमव्वाबाहं अट्ठगुणा होंति सिद्धाणं ॥ ११ ॥ लोयग्गमत्थयत्था चरमसरीरेण तेहु किंचूणा । गयसित्थ मूसगब्भे जारिस-मायार तारिसायारा ॥ १२ ॥ जरमरणजम्मरहिया ते सिद्धा मम सुभत्तिजुत्तस्स । दिंतु वरणाणलाहं बुहजणपरिपत्थणं परमसुद्धं ॥ १३ ॥ किच्चा काओसग्गं चउरट्ठयदोसविरहियं सुविसुद्धं । अइभ-

त्तिसंपजुत्तो जो वंदइ सो लहु लहइ सिद्धिसुहं ॥ १४ ॥ नयसिद्धे णयसिद्धे संजमसिद्धे चरित्त-सिध्दे य । णाणह्मि दंसणह्मि य सिध्दे सिरसा णमंसामि ॥ १५ ॥ इच्छामि भंत्ते । सिध्दभत्तिका-ओसग्गो कओ । तस्स आलोचेउं । सम्मणाण सम्मदंसण सम्मचरित्तजुत्ताणं । अठविहकम्म-विप्पमुक्काणं । अट्ठगुणसंपण्णाणं । उड्ढलोयमत्थयह्मिपइट्ठियाणं । नयसिध्दाणं । णयसिध्दाणं । संजमसिध्दाणं । चरित्तसिध्दाणं । भत्तिए णिच्चकालमच्चेमि । पूजेमि । वंदामि । णमंसामि । दुक्खक्खओ । कम्मक्खओ । बोहिलाहो । सुगइगमणं । समाहिमरणं । जिणगुणसंपत्ति होउ मझ्झं ॥ इति सिध्दभक्तिविधानं ॥

## ॥ अथ स्वस्त्ययनविधानं ॥

आकृष्टिं सुरसंपदां विदधती मुक्तिश्रियो वश्यतामुच्चाटं विपदां चतुर्गतिभुवां विद्वेषमात्मैनसां । स्तंभं दुर्गमनंप्रति प्रयततो मोहस्य सम्मोहनं पायात्पंचनमस्क्रियाक्षरमयी साऽऽराधना देवता ॥ इत्याशीर्वादः ॥ श्रध्दानबोधनविशुध्दविवर्ध्दमानवृत्तामृतानुभवसंभवसंपदौघाः । स्फूर्जत्तपःस्फुरि-तलब्धिगणाधिपत्यः स्वस्तीः क्रियासुरसकृत्परमर्षयो नः ॥ १ ॥ एकांतसंशयनमोऽभिनिवेशमूल-दृग्मोहनिग्रहविकस्वरचित्स्वरूपाः । स्याद्वादसंविदमृतप्लवमानभावाः स्वस्तीः कि० ॥ २ ॥ उद्यद्द-यारसलिहप्रियपथ्यवाचः प्रीत्योपयोग्यवग्रहा हतमारदर्पाः । मूर्छाछिदो रजनिभोजनवर्जिनश्च

स्वस्ती: क्रियासुरसकृत्परमर्षयो नः ॥ ३ ॥ सूत्रानुसारिगमना लपनाशनात्मधर्मांगसंग्रहविसर्ग-वपुर्मलाच्छाः । याथात्म्यदर्शनखलीनजितेंद्रियाश्च स्वस्ती: क्रि० ॥ ४ ॥ सामायिकस्तवनवंदनपाप-नामव्याजप्रतिक्रमणकायविसर्जनेषु । द्रव्यादिषट्कनिहतात्मसु जागरूकाः स्वस्ती: क्रि० ॥ ५ ॥ अस्नानभूशयनलोचनचेलतैकभुक्तिस्त्वदंतधवने स्थितिभोजनं च । शक्ताः परीषहसहाः सहितास्त-पोभिः स्वस्ती: क्रि० ॥ ६ ॥ क्षांत्यार्जवमृदुलसंयमसत्यशौचत्यागैरकिंचनतया तपसाऽमलेन । ब्रह्म-व्रतेन च दशात्मवृषेण भांतः स्वस्ती: क्रि० ॥ ७ ॥ शुध्यष्टकेन विनयांगवचोहृदीर्यांद्युत्सर्गभैक्षशय-नासनगोचरेण । गोत्रिष्णवः सदुपयोगदृढाभियोगाः स्वस्ती: क्रि० ॥ ८ ॥ स्वस्त्याः प्रदेशचलपुद्ग-लपाकदेहनामोदयात्तननुवाग्मनसस्य वीर्यं । कर्मागमांगमपवर्गधिया कशंतः स्वस्ती: क्रि० ॥ ९ ॥ साम्यप्रतिक्रमपरीपरिहारशुद्धौ लोभानुकृष्टिकलुषेऽकलुषे च वृत्ते । नित्योद्यता मुहुरधिष्ठितधर्म-शुक्लाः स्वस्ती: क्रि० ॥ १० ॥ दृग्बोधमंतज्वलितसंज्वलनाः कषायनीवितगंदयसमापगमाक्रमांते । योगित्वयोगविगमाश्च रुचिप्रकाराः स्वस्ती: क्रि० ॥ ११ ॥ स्वाध्यायदिव्यदृगनित्यपुरःसरानुप्रे-क्षासमर्षिक्षणयशीकृतचित्तदैत्याः । एकत्वतत्त्वमुनपोधनभावनेशाः स्वस्ती: क्रि० ॥ १२ ॥ जाग्रज्जिनें-द्रसमयाः समशत्रुमित्राः बुध्यादिलब्धिमहिमानुगृहीतविश्वाः । र्ग्रीया रसाकुलितसिंहगजाधिसेव्याः स्वस्ती: क्रि० ॥ १३ ॥ सद्गे पुलाकबकुशप्रथिताः कुशीला निर्ग्रंथनामकलिताः सकलावबोधाः ।

ये स्नातकास्त इह पंचनयाऽप्ययसंगाः स्वस्ती: क्रि० ॥ १४ ॥ येऽत्र कचिन्मनुजलोक इहोपसर्ग-संसर्गिणः स्थिरधियोऽनुपसर्गिणो वा । शुद्धात्मसंविदमुदाग्मुदो भजंतः स्वस्तीः क्रि० ॥ १५ ॥ एवंविधात् स्वस्त्ययनादपास्तसंक्लेशभावोदितशुद्धभावः । जिनाभिषेकादिविधीन् विधत्ते यः सोऽश्नुते धर्मयशोऽथ शर्म ॥ स्वस्त्ययनमेतद्विस्तरेण मनःप्रसादेन विधानं ॥ इति स्वस्त्ययनविधानं ॥

## ॥ अथातोमहर्षिस्तवनपर्युपासनविधानं ॥

वृषं वृषभसेनाद्याः सिंहसेनादयोऽजितं । शंभवं चारुसेनाद्या वज्रनाभिपुरःसराः ॥ १ ॥ कपिध्वजं चामराद्याः सुमतिं पद्मलांछनं । ये वज्रचमराः प्रष्ठाः सुपार्श्वं बलपूर्वकाः ॥ २ ॥ चंद्रप्रभं दत्त-मुख्याः पुष्पदंतं समाश्रिताः । विदर्भाद्याः शीतलेशमनगाराः पुरोगमाः ॥ ३ ॥ कुंथुप्रधानाः श्रेयांसं धर्माद्या द्वादशं जिनं । विमलं मेरुपौरस्त्या जयार्याद्याश्चतुर्दश ॥ ४ ॥ धर्मं त्वरिष्टसेनाद्याः शांतिं चक्रायुधादयः ॥ स्वयंभूप्रमुखाः कुंथुं कुंभार्याद्यास्त्वरप्रभुं ॥ ५ ॥ मल्लिं विशाखप्रमुखाः माल्याद्या मुनिसुव्रतं । नमेशं सुप्रभासाद्या वरदत्ताग्रतःसराः ॥ ६ ॥ नेमिं पार्श्वं स्वयंभ्वाद्या गौत-माद्याश्च सन्मतिं । तेभ्यो गणधरेशेभ्यो दत्तोऽर्घ्योऽयं पुनातु नः ॥ ७ ॥ ॐ ह्रीं चतुरशीतिलक्ष-गुणगणधरचरणेभ्योऽर्घ्यं निर्वपामि स्वाहा ॥ ये सन्मतेरिंद्रभूतिर्वायुभूत्यग्निभूतिकौ । सुधर्ममौर्य-मौक्याख्याः पुत्रमैत्रेयसंज्ञकाः ॥ ८ ॥ अकंपनो नंदिवेलाख्यः प्रभासश्च गणाधिपाः । एकादश-

धर्योगिनां मुन्यादींस्तानुपास्महे ॥ तेभ्यो गणधरे० ॥ ॐ ह्रीं चतुर० ॥ ९ ॥ श्रीगौतमसुधर्मो-
ह्जंब्वाख्यान् केवलेक्षणान् । श्रुतकेवलिनो विष्णुनंदिमित्रापराजितान् ॥ १० ॥ गोवर्धनं भद्रबाहुं
दशपूर्वधरान् पुनः । विशाखं प्रोष्ठिलाचार्यं क्षत्रियं जयसाह्वयं ॥ ११ ॥ नागसेनं च सिद्धार्थं
धृतिषेणसमाह्वयं । विजयं बुद्धिमद्गंगदेवाह्वं धर्मसेनकं ॥ १२ ॥ एकादशांगनिष्णातान् नक्षत्रं
जयपालकं । पांडुं च ध्रुवसेनं च कंसार्थं चाग्रिमांगिनः ॥ १३ ॥ सुभद्रं च यशोभद्रं भद्र-
बाहुमनुक्रमात् । लोहार्यं च यजामोऽत्र जिनसेनादिकानपि ॥ १४ ॥ तेभ्योगणध० ॥ ॐ ह्रीं
चतुर० ॥ यजेऽर्हद्वलिमुक्तांगपूर्वांशं माघनंदिनं । धरसेनगुरुं पुष्पदंतं भूतबलिं तथा ॥ १५ ॥
जिनचंद्रं कुंदकुंदाचार्योमाख्यातिवाचकौ । समंतभद्रस्वाम्यार्यं शिवकोटिं शिवायनं ॥ १६ ॥
पूज्यपादं चैलाचार्यं वीरसेनं श्रुतेक्षणं । जिनसेनं नेमिचंद्रं रामसेनं सुतार्किकान् ॥ १७ ॥
अकलंकानंतविद्यानंदमाणिक्यनंदिनः । प्रभाचंद्रं रामचंद्रं वासवेंदुमवासिनं ॥ १८ ॥ गुणभद्रा-
दिकानन्यानपि श्रुततपःपरान् । वीरांगदांतानर्घ्येण सर्वान् संभावयाम्यहं ॥ तेभ्यो गण० ।
ॐ ह्रीं चतु० ॥ १९ ॥ निर्ग्रंथाः शुध्दमूलोत्तरगुणमणिभिर्येऽनगारा इतीयुः सज्ज्ञां ब्रह्मादिधर्मै-
र्वृषयतिचये बुध्दिलब्ध्यादिसिध्यै । श्रेण्योश्चारोहणैर्ये यनय इति समग्रेतराद्यक्षबोधैर्ये मुन्या-
ख्याश्च सर्वे प्रमत्र इह ह तानर्घयामो मुमुक्षून ॥ २० ॥ निर्वेगमौष्टव्रतपप्रपुरात्मबोधान् संवि-

द्धिकस्वरमुदोऽद्भुतादिव्यशक्तीन् । बुध्यौषधीन्बलतपोरसविक्रियर्द्धिक्षेत्रक्रियर्द्धिकलितान् स्तुमहे मह-
र्षीन् ॥ २१ ॥ ये केवलावधिमनःपर्ययिनो बीजकोष्ठबुध्दियुजः । संभिन्नश्रोतृतया भांतश्च पदा-
नुसार्युताः ॥ २२ ॥ दूरस्पर्शनरसनघ्राणश्रवणावलोकनसमर्थाः । सदशचतुर्दशपूर्वाष्टांगमहानिमि-
त्तज्ञाः ॥ २३ ॥ प्रत्येकबुद्धवादीनप्रज्ञाश्रवणांश्च बुध्दिऋद्धिपतीन् । तीव्रतपोऽस्तविपक्षानष्टादशधापि
तानीडे ॥ २४ ॥ रोगाः सर्वे विण्मलामर्षजल्लक्ष्वेलैः सर्वैर्नापि शाम्यंति येषां । सिध्दा दृष्ट्या स्याद्विषत्वेन
ये च त्रायं तानर्चेऽष्टधाप्योषधीशान् ॥ २५ ॥ आध्यायंत्यखिलं श्रुतार्थममलं येऽतर्मुहूर्तेऽश्रमात् तद्व-
त्कृत्स्नमधीयते श्रुतमविच्छिन्नं पठंतोऽपि च । उच्चैर्यांति न कंठहानिमखिलं लोकं क्षमंतोऽन्यतोऽप्यं-
गुल्या न्यसितुं बलानि बलिनस्त्रेधापि ते संतु नः ॥ २६ ॥ चरंति घोरं महदुग्रदीप्तं तप्तं तपो घोरगुणं
त्रिगुप्ताः । ब्रह्मापि ये घोरपराक्रमाश्च ते सप्तधाप्युत्तममात्तपंतु ॥ २७ ॥ वाग्दृष्टी कुरुतोऽगिनां
लघुविषावेषेण मृत्युं कृतां यैर्युक्तैर्घृतदुग्धमध्वमृतवद्यत्पाणिपात्रार्पितं । स्याद्भोजनमप्युदश्विदुदि-
तान्वाचानुगृण्हंति ये तद्वत्तान् कृपया सदग्विषघृताद्याश्राविणः स्तौमि तान् ॥ २८ ॥ वंदेऽणि-
ममहिमलघिमगरिमैश्याभिवशीकृताप्रतिघातैः । प्राप्तिप्राकाम्यरूपित्वांतर्धानैश्च विक्रियर्द्धिगतान् ॥२९॥
न क्षीयते चक्रिबलेऽपि भुंजिते यद्दत्तशेषं दहतः सुरादयः । वसंति ये धाम्नि चतुष्करेऽपि ते
भांतूभयक्षीणमहानुशालयः ॥ ३० ॥ जंघश्रेण्यग्निशिखाजलदलफलपुष्पबीजतंतुगतैः । चारणनाम्ना

स्वैरं चरतश्च दिवा नु विश्वियर्धिदगतान् ॥ ३१ ॥ इत्यन्यदुक्चनपोमहिमोदितर्द्धीनाचार्यपाठकयतीन् जगदेकभर्तृन् । वंदारुराश्रयति कामपि भावशुध्दिं क्षिप्रं यया दुरितपाकमपाकरोतु ॥ ३२ ॥ इति महर्षिस्तवनम् ॥ सिद्धानुत्तमेण पुष्पांजलिं विकीर्य पंचांगप्रणामं कुर्यात् ॥ ( येथें पुष्पांजलि करून सिध्दपरमेष्ठींना पंचांगानें नमस्कार करणें. दोन हात दोन गुडघे व एक मस्तक यांना पंचांग किंवा पंचमुष्टि म्हणतात. )

## ॥ अथ प्रारंभनिरूपणं ॥

ततो गुरुं समाराध्य धर्माचार्यं दयानिधिं । यजमानः सपत्नीकः पंचमौष्टिकमानमन् ॥ १ ॥ तदाशीर्वचनं गृण्हन्नुपविश्य समंततः । संघट्य हस्तयुगलं गुरुं विज्ञापयेदिदं ॥ २ ॥ भगवन्नयमारब्धो जिनेज्याया महाविधिः । आयज्ञांतं विधातव्यं कर्तुमर्हसि मे प्रभो ॥ ३ ॥ बालिशोऽहं

१ पूजा करविणाऱ्या यजमानानें दंपतीसह धर्माचार्य गुरूची ( भट्टारकाची ) पूजा करून, पंचमुष्टीनें नमोऽस्तु करणें. व त्यापुढें हात जोडून पुढें सांगितल्याप्रमाणें विनयपूर्वक प्रश्न करणें. मी धर्माचार्य, मी मतिमंद आहे. मला कांहींच कळत नाहीं. पण जिनावर भक्ति असल्यामुळें ही महापूजा करण्यास उद्युक्त झालों आहे. तेव्हां पूजा चालविणेस आपण मला योग्य आहां असें बोलून स्तब्ध राहणें. नंतर धर्माचार्यानें त्याजवर कृपाळू होऊन पुढें सांगितल्याप्रमाणें उपदेश करणें तें असें. मी भव्य, तू या भवसमुद्रांतून निसटलास. कारण इंद्रसाध्यपूजा करण्यास उद्युक्त झाला आहेस म्हणून आतां ही संपेपर्यंत ब्रम्हचर्य व एकभुक्त ( एकवेळ आहार पाणी घेणें ) व्रत घे, श्रावकांची व राजाची मर्यादा राख व त्यांची मदत घे, देव गुरु शास्त्रावर भक्ति ठेव, शास्त्र ऐकत जा, बांधवांचा आदर कर, अन्नसंतर्पण करीत जा,

न जानामि किमत्रोचितमित्यपि । तथापि भगवत्साक्षात्प्रसादो मां प्रचोदते ॥ ४ ॥ इति ब्रुवंतमाचार्यो विधेयं यष्टृपुंगवं । अनुगृण्हन् हि कारुण्यवागिति वदतांवर ॥ ५ ॥ भो भव्य भववागशितटस्ते निकटोऽभवत । शक्रसाध्यो यदारब्धो भवताऽयं जिनक्रतुः ॥ ६ ॥ भद्रं भूयात् सदोदार भवतः शुभचेष्टितः । ब्रह्मचर्यं गृहाणेदं मैकभुक्तं प्रयत्नतः ॥ ७ ॥ सधर्मिणां च सन्मानं वशीकारं सधर्मिणां । सर्वबंधुषु सत्कारमन्नदानं यथोचितं ॥ ८ ॥ राजानुमननं देवगुरुभक्तिमतंद्रतः । यथावकाशितं शास्त्रश्रवणं ध्यानमात्मनः ॥ ९ ॥ कालोचितविचारं च जिनपूजार्थवस्तुनि । परुषोक्तिपरित्यागं कालुष्यं परिवर्जनं ॥ १० ॥ विधेहि सर्वमेतत्ते श्रेयस्करमथोत्तमं । इत्युक्तसद्व्रतस्फूर्त्यै तस्य दक्षिणहस्तके ॥ ११ ॥ सौवर्णं राजतं सूत्रं पट्टसूत्रमथापि वा । बध्नीयात् कंकणं

---

कोणास कठोर भाषण करू नकोस, मिळण्याजोगें असतांना त्या जिनसा पूजेस आणीव, आणि आत्मध्यान करीत जा, याप्रमाणें उपदेश करून त्याच्या उजव्या हातांत कंकण बांधणें, व तसेंच त्याच्या पत्नीच्या डाव्या हातात कंकण बांधणें, नंतर त्याच्या मस्तकावर हात ठेवून घराकडे जाणेस सांगणें. यालाच प्रारंभ निरूपण म्हणतात.

१ कंकण सुवर्णाचें किंवा चांदीचें अथवा सुताचें करणें. परंतु तें कंकण १२ अंगुल लांबीचें व २७ पदराचें असलें पाहिजे. याविषयीं असें सांगितलें आहे कीं, द्वादशांगुलमात्रेण सप्तविंशतितंतुभिः । हरिद्राकल्कमालिप्त कंकणं व्रतबंधनं ॥ याप्रमाणानें केलेल्या कंकणास हळद लावणें. अशा कंकणास व्रतबंधन कंकण म्हणतात. हें कंकण डाव्या मनगटांत बांधणें.

नानानाद्यघोषे समुद्यते ॥ १२ तद्व्रतान्याददानाया धर्मपत्न्यास्तदास्य च । वामहस्ते दृढमुक्तयज्ञ-सूत्रं प्रबंधयेत् ॥ १३ ॥ ततोऽपि यजमानस्य प्रमोदवहृतः परं । मस्तके हस्तमादाय विसृजेत्तं गृहंप्रति ॥ १४ ॥ इति प्रारंभनिरूपणं ॥

## ॥ अथ जिनयज्ञदीक्षाविधानं ॥

न्यस्यैवभगवत्पादपीठे दिव्यप्रसाधनं । कृत्वेदमादधेऽनादिसिध्दमंत्राभिमंत्रितं ॥ १ ॥ ॐ णमो अरहंताणं । णमो सिध्दाणं । णमो आइरियाणं । णमो उवज्झायाणं । णमो लोए सव्वसाहूणं ॥ चत्तारि मंगळं । अरहंता मंगळं । सिध्दा मंगळं । साहू मंगळं । केवलिपण्णंतो धम्मो मंगळं ॥ चत्तारि लोगुत्तमा । अरहंता लोगुत्तमा । सिध्दा लोगुत्तमा । साहू लोगुत्तमा । केवलिपण्णंतो धम्मो लोगुत्तमा ॥ चत्तारि सरणं पव्वज्जामि । अरहंते सरणं पव्वज्जामि । सिध्दे सरणं पव्व-ज्जामि । साहू सरणं पव्वज्जामि । केवलिपण्णंतो धम्मो सरणं पव्वज्जामि ॥ ॐ ह्रीं शांति कुरु २ सर्वशांतिं कुरु २ वषट् स्वाहा ॥ अयमनादिसिध्दमंत्रः ॥ ( हा अनादिसिध्दमंत्र होय. ) श्रीचंदनाद्यभिमंत्रितं ॥ [ गंध, गळ्यांत घालणेची फुलाची माळ, अंतरीय उत्तरीय वस्त्रें, चेंडीच्या गांठीस बांधणेची लहान माळ, मकुट, कुंडल, यज्ञोपवीत, बाजूबंद, ( मुजाचे अलंकार ) सुवर्ण-कंकण, पोंचें, मुद्रिका, सुवर्णाचा कडदोरा, पैंजण, मुताचें कंकण व मौंजी ( तीन पदरानें केलेली

दर्भाची दोरी ) हा सर्व जिनसा एका ताटांत घालून जिनचरणीं ठेवणें व वरील सिध्दमंत्रानें त्या सर्व जिनसा मंत्रणें आणि पुढील मागितलेल्या मंत्रानें त्या जिनसा क्रमानें धारण

॥ गंधयंत्रं ॥



करीत जाणें. ] पूज्यपूजावशेषेण गोशीर्षेण हृतालिना । देवाधिदेवमंत्रायै स्वपुश्चर्चेयऽमुना ॥ १ ॥ ॐ ह्रीं अर्हं सः सर्वकर्मविलेपनरहिताय पवित्रांगाय श्रीचंदनानुलेपनं ॥ [ सिध्दमंत्रानें मंत्रलेले गंध हातांत किंवा एका पानावर घेऊन त्यांत तर्जनीबोटानें ( अंगठ्याजवळच्या बोटानें ) अथवा दर्भानें गंधयंत्र लिहून या मंत्रानें तो गंध अंगास लावणें. ] जिनांघ्रिस्पर्शमात्रेण त्रैलोक्यानुग्रहक्षमाः । इमाः स्वर्गरमादूतीर्धारयामि वरस्रजः ॥ स्रग्धारणं ॥ २ ॥ ( येथें फुलाची माळ गळ्यांत घालणें. ) शुभ्रपुष्पलनातते शुचिरुची भ्राजिष्णुमैत्रीनगे गच्छालापतिना गुणैर्नवविमोद्दीर्णैरिवासूत्रिते ॥ एकद्रव्यवराहंदग्भिरपिचोद्धृत्ये प्रवेक्ष्ये नम्वाच्छिद्रे नेह सह प्रभोरहमिमे दिव्ये दधे वाससी ॥ देवांगवस्त्रपरिग्रहः ॥ ३ ॥ [ येथें अंतरीय ( नेसण्याचें वस्त्र ) उत्तरीय ( पांघरण्याचें वस्त्र ) हीं २ नवीं वस्त्रें धारण करणें. ] मुक्ताशेखरपट्टयोर्निजकरैराकम्य चूलालिकं राज्ञोर्जित्वरवत् क्षमं व्यतिकरं रोद्धुं बलाद्धृष्यतोः । स्फुर्जत्कुंडलकर्णपूरगचितोपांतेंद्रचापश्रिया मूर्ध्नां तन्मकुटं जितार्यमज-

यत्त्वर्हत्प्रणामोद्गुरि ॥ शेखरादिविशिष्टमकुटोपयोगः ॥ ४ ॥ ( येथें शेंडीस माळ बांधणें अगर मस्तकावर किरीट घालणें. ) प्रालंबसूत्रजिनसूत्रविराजहारं सद्दर्शनस्फुरितविस्फुरितात्मतेजः । ग्रैवे-यकं चरणचारुभजं जिनेज्यासज्जं तनोम्यमलचिद्रुचि यज्ञसूत्रं ॥ प्रालंबसूत्राद्युपेतयज्ञोपवीत-गृहितिः ॥ ५ ॥ ( येथें यज्ञोपवीत, मोत्याचा हार, कंठी, गोप वगैरे गळ्यांत घालणें. ) केयूरांगदकटकैर्दोलास्तंभौ जिनेंद्रमुखलक्ष्म्याः । सत्कृत्य भुजौ तद्रसमुन्मुद्रयितुं करेऽर्पये मुद्रां ॥ केयूरादिभिर्युक्तमुद्रिकास्वीकारः ॥ ६ ॥ ( येथें बाजुबंद व मुद्रिका धारण करणें. ) छुरिकाच्छवि-विछुरितं नूपुररुचिचुंबनोत्कदाममुखं । सारसनं वध्वांघ्रि सकनकमुद्रं जिनाध्वरे विदधे ॥ कटिसूत्रा-दिचरणोर्मिकाधारणं ॥ ७ ॥ ( येथें सुवर्णाचा कडदोरा व कंबरपट्टा कंबरेंत घालणें व तसेंच पायांत तोडे व अंगठ्या घालणें. ) इदमसलिनसम्यग्दर्शनज्ञानदेशव्रतमयचरितात्मा कर्णिका ब्रह्मचर्यं । स्फुरदरमुपवासेनाग्रत्नत्रयं मे भवतु भगवदर्हद्यज्ञदीक्षाविशिष्टं ॥ अर्हद्देवयज्ञदीक्षां-गीकारः ॥ ८ ॥ ( येथें पुजकानें पुजेच्या दिवशीं उपवासाचें व ब्रह्मचर्याचें व्रत घेणें. ) तन्वन् हृदुपवीतमज्जनरुचिप्रव्यक्तरत्नत्रयं ख्याताणुव्रतशक्तिपंचवसुवद्विभ्रत्करे कंकणं । मौज्य-श्रोणियुजा जिनक्रतुमिति ब्रह्मव्रतं द्योतयन् यज्ञेऽस्मिन् खलु दीक्षितोऽहमधुना मान्योऽस्मि शक्रैरपि ॥ दीक्षाचिन्हाद्वहनं ॥ ९ ॥ ( येथें कंबरेस दर्भाचा कडदोरा व उजव्या हातास

सुताचें कंकण बांधणें.) ॐ वज्राधिपतये आँ हाँ अः ऐं ह्रीं ह्रः श्रूं क्षः इंद्राय संवौषट् ॥ अनेनैकविंशतिवारात्मन्याधिवासयेत् ॥ १० ॥ (येथें वरील मंत्र २१ वेळा मनांतल्या मनांत म्हणणें.) विघ्नौघाः प्रलयं यांतु व्याधयो नाशमाप्नुयुः । विषं निर्विषतां यातु स्थावरं जंगमं तथा ॥ ११ ॥ दूरादेव प्रणश्यंतु शाकिनीभूतपन्नगाः । लोके हितं ह्वये ध्यानादेतस्मादपरं परं ॥ १२ ॥ ॐ ह्रीं णमो अरहंताणं अर्हद्भ्यो नमः । ॐ ह्रीं णमो सिद्धाणं सिद्धेभ्यो नमः ॥ परमात्मध्यानं ॥ (येथें या मंत्रानें परमात्म्याचें ध्यान करणें.) ॥ इति यज्ञदीक्षाविधानं ॥

## ॥ अथ सहस्रनामपूजा ॥

ॐ प्रसिद्धाष्टसहस्रेद्धलक्षणं त्वां गिरांपतिं । नाम्नामष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये ॥ १ ॥ श्रीमान् स्वयंभूर्वृषभः शंभवः शंभुरात्मभूः । स्वयंप्रभः प्रभुर्भोक्ता विश्वभूरपुनर्भवः ॥ २ ॥ विश्वात्मा विश्वलोकेशो विश्वतश्चक्षुरक्षरः । विश्वविद्विश्वविद्येशो विश्वयोनिरनीश्वरः ॥ ३ ॥ विश्वदृश्वा विभुर्धाता विश्वेशो विश्वलोचनः । विश्वव्यापी विधिर्वेधाः शाश्वतो विश्वतोमुखः ॥ ४ ॥ विश्वकर्मा जगज्ज्येष्ठो विश्वमूर्तिर्जिनेश्वरः । विश्वदृग्विश्वभूतेशो विश्वज्योतिरनश्वरः ॥ ५ ॥ जिनो जिष्णुरमेयात्मा विश्वरीशो जगत्पतिः । अनंतचिदचिंत्यात्मा भव्यबंधुरबंधनः ॥ ६ ॥ युगादिपुरुषो ब्रह्मा पंचब्रह्ममयः शिवः । परः परतरः सूक्ष्मः परमेष्ठी सनातनः ॥ ७ ॥ स्वयंज्योतिरजोऽजन्मा ब्रह्मयोनिरयो-

निरयोनिजः । मोहारिविजयी जेता धर्मचक्री दयाध्वजः ॥ ८ ॥ प्रशांतारिरनंतात्मा योगी योगीश्वरार्चितः । ब्रह्मविद् ब्रह्मतत्त्वज्ञो ब्रह्मोद्याविद्यतीश्वरः ॥ ९ ॥ शुद्धो बुद्धः प्रबुद्धात्मा सिद्धार्थः सिद्धशासनः । सिद्धः सिध्दांतविद् ध्येयः सिध्दसाध्यो जगध्दितः ॥ १० ॥ सहिष्णुरच्युतोऽनंतः प्रभविष्णुर्भवोद्भवः । प्रभूष्णुरजरोऽजर्यो भ्राजिष्णुर्धीश्वरोऽव्ययः ॥ ११ ॥ विभावसुरसंभूष्णुः स्वयंभूष्णुः पुरातनः । परमात्मा परंज्योतिस्त्रिजगत्परमेश्वरः ॥ १२ ॥ इति श्रीमच्छतं ॥ १ ॥ सुवारिगंधाक्षतचारुपुष्पैर्नैवेद्यसद्दीपसुधूपवर्गैः । फलैर्महार्घ्यैर्जिनपं तु भक्त्या श्रीमच्छतं तत्परिपूजयामि । श्रीमच्छतार्घ्यं ॥ १ ॥ दिव्यभाषापतिर्दिव्यः पूतवाक् पूतशासनः । पूतात्मा परमज्योतिर्धर्माध्यक्षो दमीश्वरः ॥ १ ॥ श्रीपतिर्भगवानर्हन्नरजा विरजाः शुचिः । तीर्थकृत्केवलीशानः पूजार्हः स्नातकोऽमलः ॥ २ ॥ अनंतदीप्तिर्ज्ञानात्मा स्वयंबुद्धः प्रजापतिः । मुक्तः शक्तो निराबाधो निष्कलो भुवनेश्वरः ॥ ३ ॥ निरंजनो जगज्ज्योतिर्निरुक्तोक्तिरनामयः । अचलस्थितिरक्षोभ्यः कूटस्थः स्थाणुरक्षयः ॥ ४ ॥ अग्रणीर्ग्रामणीर्नेता प्रणेता न्यायशास्त्रकृत् । शास्ता धर्मपतिर्धर्म्यो धर्मात्मा धर्मतीर्थकृत् ॥ ५ ॥ वृषध्वजो वृषाधीशो वृषकेतुर्वृषायुधः । वृषो वृषपतिर्भर्त्ता वृषभांको वृषोद्भवः ॥ ६ ॥ हिरण्यनाभिर्भूतात्मा भूतभृद् भूतभावनः । प्रभवो विभवो भास्वान् भवो भावो भवांतकः ॥ ७ ॥ हिरण्यगर्भः श्रीगर्भः प्रभूतविभवोऽभवः । स्वयंप्रभुः प्रभूतात्मा भूतनाथो जग-

प्रभुः ॥ ८ ॥ सर्वादिः सर्वदृक् सार्वः सर्वज्ञः सर्वदर्शनः । सर्वात्मा सर्वलोकेशः सर्ववित् सर्व-लोकजित ॥ ९ ॥ सुगतः सुश्रुतः सुश्रुक् सुवाक् सूरिर्बहुश्रुतः । विश्रुतो विश्वतःपादो विश्वशीर्षः शुचिश्रवाः ॥ १० ॥ सहस्रशीर्षः क्षेत्रज्ञः सहस्राक्षः सहस्रपात् । भूतभव्यभवद्भर्त्ता विश्वविद्या-महेश्वरः ॥ ११ ॥ इति दिव्यशतं ॥ विमलजलसुगंधैरक्षतैर्दिव्यपुष्पैर्वरसुचरुसुदीपैर्धूपनानाफ-लौघैः । विपुलकनकपात्रे स्थापिताघ्यं यजामो जिनपतिवरादिव्यभावनाम्नां शतं तत् ॥ दिव्यश-ताघ्यं ॥ २ ॥ स्थविष्ठः स्थविरो ज्येष्ठः प्रष्ठः प्रेष्ठो वरिष्ठधीः । स्थेष्ठो गरिष्ठो बंहिष्ठः श्रेष्ठोऽनिष्ठो गरिष्ठगीः ॥ १ ॥ विश्वभृद् विश्वसृड् विश्वेड् विश्वभुग् विश्वनायकः । विश्वाशीर्विश्वरूपात्मा विश्वजिद् विजितांतकः ॥ २ ॥ विभवो विभयो वीरो विशोको विजरोऽजरन् । विरागो विर-तोऽसंगो विविक्तो वीतमत्सरः ॥ ३ ॥ विनेयजनताबंधुर्विलीनाशेषकल्मषः । वियोगो योगविद् विद्वान् विधाता सुविधिः सुधीः ॥ ४ ॥ क्षांतिभाक् पृथ्वीमूर्तिः शांतिभाक् सलिलात्मकः । वायु-मूर्तिरसंगात्मा वन्हिमूर्तिरधर्मधक् ॥ ५ ॥ सुयज्वा यजमानात्मा सुत्वा सुत्रामपूजितः । ऋत्विग् यज्ञपतिर्यज्ञो यज्ञांगममृतं हविः ॥ ६ ॥ व्योममूर्तिरमूर्तात्मा निर्लेपो निर्मलोऽचलः । सोममूर्तिः सुसौम्यात्मा सूर्यमूर्तिर्महाप्रभः ॥ ७ ॥ मंत्रविन् मंत्रकृन् मंत्री मंत्रमूर्तिरनंतकः । स्वतंत्रस्तंत्रकृत स्वांतः कृतांतांतः कृतांतकृत ॥ ८ ॥ कृती कृतार्थः सत्कृत्यः कृतकृत्यः कृतक्रतुः । नित्यो मृत्युं-

जयोऽमृत्युरमृतात्माऽमृतोद्भवः ॥ ९ ॥ ब्रह्मनिष्ठः परब्रह्मा ब्रह्मात्मा ब्रह्मसंभवः । महाब्रह्मपति-ब्रंह्मेड् महाब्रह्मपदेश्वरः ॥ १० ॥ सुप्रसन्नः प्रसन्नात्मा ज्ञानधर्मदमप्रभुः । प्रशमात्मा प्रशांतात्मा पुराणपुरुषोत्तमः॥ ११ ॥ इति स्थविष्ठशतं ॥ ३ ॥ वार्गंधतंडुलललतांतहविःप्रदीपैर्धूपैः फलैर्वरसदर्घ्य-मिदं कृतं तत् । संपूजये वरस्थविष्ठशतं सुनाम देवाधिदेवजिनपं त्वमरेंद्रवंद्यं ॥ स्थविष्ठशतार्घ्यं ॥ महाशोकध्वजोऽशोकः कः स्रष्टा पद्मविष्टरः । पद्मेशः पद्मसंभूतिः पद्मनाभिरनुत्तरः ॥ १ ॥ पद्म-योनिर्जगद्योनिरित्यः स्तुत्यः स्तुतीश्वरः । स्तवनार्हो हृषीकेशो जितजेयः कृतक्रियः ॥ २ ॥ गणा-धिपो गणज्येष्ठो गण्यः पुण्यो गुणाग्रणीः । गुणाकरो गुणांभोधिर्गुणज्ञो गुणनायकः ॥ ३ ॥ गुणादरी गुणोच्छेदी निर्गुणः पुण्यगीर्गुणः । शरण्यः पुण्यवाक् पूतो वरेण्यः पुण्यनायकः ॥ ४ ॥ अगण्यः पुण्य-धीर्गुण्यः पुण्यकृत् पुण्यशासनः । धर्मारामो गुणग्रामः पुण्यापुण्यनिरोधकः ॥ ५ ॥ पापापेतो विपा-पात्मा विपाप्मा वीतकल्मषः । निर्द्वंद्वो निर्मदः शांतो निर्मोहो निरुपद्रवः ॥ ६ ॥ निर्निमेषो निरा-हारो निष्क्रियो निरुपप्लवः । निष्कलंको निरस्तैना निर्धूतांगो निरास्रवः ॥ ७ ॥ विशालो विपुल-ज्योतिरतुलोऽचिंत्यवैभवः । सुसंवृतः सुगुप्तात्मा सुभुक् सुनयतत्त्ववित् ॥ ८ ॥ एकविद्यो महाविद्यो मुनिः परिवृढः पतिः । धीशो विद्यानिधिः साक्षी विनेता विहतांतकः ॥ ९ ॥ पिता पितामहः पाता पवित्रः पावनोऽगतिः । त्राता भिषग्वरो वर्यो वरदः परमः पुमान् ॥ १० ॥ कविः पुराण-

पुराणो वर्षीयान् वृषभः पुरुः । प्रतिष्ठाप्रसवो हेतुर्भुवनैकपितामहः ॥ ११ ॥ इति महाशतं ॥ ४ ॥
जनमलयजसारैस्तंडुलैः फुल्लवृंदैर्विपुलचरुविभास्वद्दीपधूपैः फलौघैः । जिनपतिवरमहाशतके चाख्यनाम नमितनरसुरेंद्रं पूजयेऽहं त्रिशुध्या ॥ महाशतार्घ्यं ॥ श्रीवृक्षलक्षणः श्लक्ष्णो लक्षण्यः शुभलक्षणः । निरक्षः पुंडरीकाक्षः पुष्कलः पुष्करेक्षणः ॥ १ ॥ सिद्धिदः सिद्धसंकल्पः सिध्दात्मा सिध्दिसाधनः । बुध्दबोध्यो महाबोधिर्वर्धमानो महर्द्धिकः ॥ २ ॥ वेदांगो वेदविद् वेद्यो जातरूपो विदांवरः । वेदवेद्यः स्वसंवेद्यो विवेदो वदतांवरः ॥ ३ ॥ अनादिनिधनो व्यक्तो व्यक्तवाग् व्यक्तशासनः । युगादिकृद् युगाधारो युगादिर्जगदादिजः ॥ ४ ॥ अतींद्रोऽतींद्रियोऽधींद्रो महेंद्रोऽतींद्रियार्थदृक । अनिंद्रियोऽहमिंद्रार्च्यो महेंद्रमहितो महान् ॥ ५ ॥ उद्भवः कारणः कर्ता पारगो भवतारकः । अगाह्यो गहनो गुह्यः परार्ध्यः परमेश्वरः ॥ ६ ॥ अनंतार्द्धिरमेयर्ध्दिरचिंत्यर्ध्दिः समग्रधीः । प्राग्र्यः प्राग्रहरोऽभ्यग्रः प्रत्यग्रोऽग्र्योऽग्रिमोऽग्रजः ॥ ७ ॥ महातपा महातेजा महोदर्को महोदयः । महायशा महाधामा महासत्वो महाधृतिः ॥ ८ ॥ महाधैर्यो महावीर्यो महासंपन् महाबलः । महाशक्तिर्महाज्योतिर्महाभूतिर्महाधृतिः ॥ ९ ॥ महामतिर्महानीतिर्महाक्षांतिर्महोदयः । महाप्रज्ञो महानंदो महाभागो महाकविः ॥ १० ॥ महामहा महाकीर्तिर्महाकांतिर्महावपुः । महादानो महाज्ञानो महायोगो महागुणः ॥ ११ ॥ महामहपतिः

प्राप्तमहाकल्याणपंचकः । महाप्रभुर्महाप्रातिहार्याधीशो महेश्वरः ॥ १२ ॥ इति श्रीवृक्षशतं ॥ चारुनीरगंधशालितंडुलप्रपुष्पकैः । सच्चरुप्रदीपधूपसत्फलैर्महार्घ्यकैः ॥ देवदेववीतरागसंश्रीवृक्षक शतं । अर्चयामि पापतापनाशनं सुखप्रदं ॥ श्रीवृक्षशतार्घ्यं ॥ महामुनिर्महामौनी महाध्यानो महोदयः । महाक्षमो महाशीलो महायज्ञो महामखः ॥ १ ॥ महाव्रतपतिर्मह्यो महाकांतिर्धराधिपः । महामैत्री महामेयो महोपायो महादमः ॥ २ ॥ महाकारुणिको मंता महामंत्रो महायतिः । महानादो महाघोषो महेज्यो महसांपतिः ॥ ३ ॥ महाध्वरधरो धुर्यो महौदार्यो महिष्ठवाक् । महात्मा महसांधाम महर्षिर्महितोदयः ॥ ४ ॥ महाक्लेशांकुशः शूरो महाभूतपतिर्गुरुः । महापराक्रमोऽनंतो महाक्रोधरिपुर्वशी ॥ ५ ॥ महाभवाब्धिसंतारिर्महामोहाद्रिसूदनः । महागुणाकरः क्षांतो महायोगीश्वरः शमी ॥ ६ ॥ महाध्यानपतिर्ध्याता महाधर्मो महाव्रतः । महाकर्मारिहाऽऽत्मज्ञो महादेवो महेशिता ॥ ७ ॥ सर्वक्लेशापहः साधुः सर्वदोषहरो हरः । असंख्येयः प्रमेयात्मा शमात्मा प्रशमाकरः ॥ ८ ॥ सर्वयोगीश्वरोऽचिंत्यः श्रुतात्मा विष्टरश्रवाः । दांतात्मा धर्मतीर्थेशो योगात्मा ज्ञानसर्वगः ॥ ९ ॥ प्रधानमात्मा प्रकृतिः परमः परमोदयः । प्रक्षीणबंधः कामारिः क्षेमकृत् क्षेमशासनः ॥ १० ॥ प्रणवः प्रणतः प्राणः प्राणदः प्राणतेश्वरः । प्रमाणं प्रणिधिर्दक्षो दक्षिणोऽध्वर्युरध्वरः ॥ ११ ॥ आनंदो नंदनो नंदो वंद्योऽनिंद्योऽभिनंदनः । कामहा कामदः काम्यः कामधेनुर-

रिंजयः ॥ १२ ॥ इति महामुनिशतं ॥ ६ ॥ नीरैर्नीरजवासितैः प्रविमलैर्गंधैः सुगंधैर्वरैरक्षुण्णैः कलमाक्षतैः परिमलैः पुष्पैः सुभक्ष्यामृतैः । दीपैर्धूपफलैर्महार्घ्यममलं देवं यजामो वयं नाम्ना तत्सुखदं महामुनिशतं संसारदुःखापहं ॥ महामुनिशतार्घ्यं ॥ ६ ॥ असंस्कृतः सुसंस्कारः प्राकृतो वैकृतांतकृत् । अंतकृत् कांतगुः कांतश्चितामणिरभीष्टदः ॥ १ ॥ अजितो जितकामारि रमितोऽमितशासनः । जितक्रोधो जितामित्रो जितक्लेशो जितांतकः ॥ २ ॥ जिनेंद्रः परमानंदो मुनींद्रो दुंदुभिस्वनः । महेंद्रवंद्यो योगींद्रो यतींद्रो नाभिनंदनः ॥ ३ ॥ नाभेयो नाभिजोऽजातः सुव्रतो मनुरुत्तमः । अभेद्योऽनत्ययोऽनाश्वानधिकोऽधिगुरुः सुधीः ॥ ४ ॥ सुमेधा विक्रमी स्वामी दुराधर्षो निरुत्सुकः । विशिष्टः शिष्टभुक् शिष्टः प्रत्ययः कमनोऽनघः ॥ ५ ॥ क्षेमी क्षेमंकरोऽक्षय्यः क्षेमधर्मपतिः क्षमी । अग्राह्योऽज्ञाननिग्राह्यो ध्यानगम्यो निरुत्तमः ॥ ६ ॥ सुकृती धातुरिज्यार्हः सुनयश्चतुराननः । श्रीनिवासश्चतुर्वक्त्रश्चतुरास्यश्चतुर्मुखः ॥ ७ ॥ सत्यात्मा सत्यविज्ञानः सत्यवाक् सत्यशासनः । सत्याशीः सत्यसंधानः सत्यः सत्यपरायणः ॥ ८ ॥ स्थेयान् स्थवीयान् नेदीयान् दवीयान् दूरदर्शनः । अणोरणीयाननणुर्गुरुराद्यो गरीयसां ॥ ९ ॥ सदायोगः सदाभोगः सदातृप्तः सदाशिवः । सदागतिः सदासौख्यः सदाविद्यः सदोदयः ॥ १० ॥ सुघोषः सुमुखः सौम्यः सुखदः सुहितस्सुहृत् । सुगुप्तिर्गुप्तिभृद् गोप्ता लोकाध्यक्षो दमीश्वरः ॥ ११ ॥ इति असंस्कृतशतं ॥ ७ ॥

वनमलयजशालितंदुलपुष्पाचरुदीपधूपफलानिवहैः । नमितनरामराधिपदेवमसंस्कृतनामशतं पूजये भक्त्या ॥ असंस्कृतशतार्घ्यं ॥ ७ ॥ बृहन् बृहस्पतिर्वाग्मी वाचस्पतिरुदारधीः । मनीषी धिषणो धीमान् शेमुषीशो गिरांपतिः ॥ १ ॥ नैकरूपो नयोत्तुंगो नैकात्मा नैकधर्मकृत् । अविज्ञेयो प्रतर्क्यात्मा कृतज्ञः कृतलक्षणः ॥ २ ॥ ज्ञानगर्भो दयागर्भो रत्नगर्भो प्रभास्वरः । पद्मगर्भो जगद्गर्भो हेमगर्भः सुदर्शनः ॥ ३ ॥ लक्ष्मीवांस्त्रिदशाध्यक्षो द्रढीयानिन ईशिता । मनोहरो मनोज्ञांगो धीरो गंभीरशासनः ॥ ४ ॥ धर्मयूपो दयायागो धर्मनेमिर्मुनीश्वरः । धर्मचक्रायुधो देवः कर्महा धर्मघोषणः ॥ ५ ॥ अमोघवागमोघज्ञो निर्मलोऽमोघशासनः । सुरूपः सुभगस्त्यागी समयज्ञः समाहितः ॥ ६ ॥ सुस्थितः स्वास्थ्यभाक् स्वस्थो नीरजस्को निरुद्धवः । अलेपो निष्कलंकात्मा वीतरागो गतस्पृहः ॥ ७ ॥ वश्येंद्रियो विमुक्तात्मा निस्सपत्नो जितेंद्रियः । प्रशांतोऽनंतधामर्षिमंगलो मलहाऽनघः ॥ ८ ॥ अनीदृगुपमाभूतो दृष्टिर्दैवमगोचरः । अमूर्तो मूर्तिमानैकोऽनैको नानैकतत्वदृक् ॥ ९ ॥ अध्यात्मागम्यो गम्यात्मा योगविद् योगिवंदितः । सर्वत्रगः सदाभावी त्रिकालविषयार्थदृक् ॥ १० ॥ शंकर शंवदो दांतो दमी क्षांतिपरायणः । अधिपः परमानंदः परात्मज्ञः परात्परः ॥ ११ ॥ त्रिजगद्वल्लभोऽभ्यर्च्यस्त्रिजगन्मंगलोदयः । त्रिजगत्पतिपूज्यांघ्रिस्त्रिलोकाग्रशिखामणिः ॥ १२ ॥ इति बृहच्छतं ॥ ८ ॥ अंभःसुगंधैः सदकैर्मनोज्ञैः पुष्पैर्हविर्भक्ष्यविचि-

त्रदीपैः । धूपैः सुधूम्रान्वितसत्फलौघैर्देवं बृहन्नामशतं यजेऽहं ॥ बृहच्छतार्घ्यं ॥ ८ ॥ त्रिकाल-
दर्शी लोकेशो लोकदाता दृढव्रतः । सर्वलोकातिगः पूज्यः सर्वलोकैकसारथिः ॥ १ ॥ पुराणपुरुषः
पूर्वः कृतपूर्वांगविस्तरः । आदिदेवः पुराणाद्यः पुरुदेवोऽधिदेवता ॥ २ ॥ युगमुख्यो युगज्येष्ठो
युगादिस्थितिदेशकः । कल्याणवर्णः कल्याणः कल्यः कल्याणलक्षणः ॥ ३ ॥ कल्याणप्रकृतिर्दीप्रः
कल्याणात्मा विकल्मषः । विकलंकः कलातीतः कलिलघ्नः कलाधरः ॥ ४ ॥ देवदेवो जगन्नाथो
जगद्बंधुर्जगद्विभुः । जगद्धितैषी लोकज्ञः सर्वगो जगदग्रजः ॥ ५ ॥ चराचरगुरुर्गोप्यो गूढात्मा
गूढगोचरः । सद्योजातः प्रकाशात्मा ज्वलज्ज्वलनसत्प्रभः ॥ ६ ॥ आदित्यवर्णो भर्माभः सुप्रभः
कनकप्रभः । सुवर्णवर्णो रुक्माभः सूर्यकोटिसमप्रभः ॥ ७ ॥ तपनीयनिभस्तुंगो बालार्काभोऽन-
लप्रभः । संध्याभ्रबभ्रुर्हेमाभस्तप्तचामीकरच्छविः ॥ ८ ॥ निष्टप्तकनकच्छायः कनत्कांचनस-
न्निभः । हिरण्यवर्णः स्वर्णाभः शातकुंभनिभप्रभः ॥ ९ ॥ द्युम्नभा जातरूपाभो दीप्तजांबूनदद्युतिः ।
सुधौतकलधौतश्रीः प्रदीप्तो हाटकद्युतिः ॥ १० ॥ शिष्टेष्टः पुष्टिदः पुष्टः स्पष्टः स्पष्टाक्षरः क्षमः ।
शत्रुघ्नोऽप्रतिघोऽमोघः प्रशास्ता शासिता स्वभूः ॥ ११ ॥ शांतिनिष्ठो मुनिज्येष्ठः शिवतातिः
शिवप्रदः । शांतिदः शांतिकृत् शांतिः कांतिमान् कामितप्रदः ॥ १२ ॥ श्रेयोनिधिरधिष्ठानोऽप्रतिष्ठः
प्रतिष्ठितः । सुस्थिरः स्थावरः स्थाणुः प्रथीयान् प्रथितः पृथुः ॥ १३ ॥ इति त्रिकालशतं ॥ ९ ॥

नीरैः सुगंधैः कलमाक्षतौघैः पुष्पैर्वरैश्चारुहविःप्रदीपैः । धूपैर्दशांगैः सुफलैर्मनोज्ञैर्यजे शतं नाम त्रिकालदर्शी ॥ त्रिकालशतार्घ्यं ॥ ९ ॥ दिग्वासा वातरसनो निर्ग्रंथेशो निरंबरः । निष्किंचनो निराशंसो ज्ञानचक्षुरमोमुहः ॥ १ ॥ तेजोराशिरनंतौजा ज्ञानाब्धिः शीलसागरः । तेजोमयोऽमितज्योतिर्ज्योतिर्मूर्तिस्तमोऽपहः ॥ २ ॥ जगच्चूडामणिर्दीप्तः शंवान् विघ्नविनायकः । कलिघ्नः कर्मशत्रुघ्नो लोकालोकप्रकाशकः ॥ ३ ॥ अनिद्रालुरतंद्रालुर्जागरूकः प्रमामयः । लक्ष्मीपतिर्जगज्ज्योतिर्धर्मराजः प्रजाहितः ॥ ४ ॥ मुमुक्षुर्बंधमोक्षज्ञो जिताक्षो जितमन्मथः । प्रशांतरसशैलूषो भव्यपेटकनायकः ॥ ५ ॥ मूलकर्ताऽखिलज्योतिर्मलघ्नो मूलकारणः । आप्तो वागीश्वरः श्रेयान् श्रायसोक्तिर्निरुक्तवाक् ॥ ६ ॥ प्रवक्ता वचसामीशो मारजिद् विश्वभाववित् । सुतनुस्तनुनिर्मुक्तः सुगतो हतदुर्नयः ॥ ७ ॥ श्रीशः श्रीश्रितपादाब्जो वीतभीरभयंकरः । उत्सन्नदोषो निर्विघ्नो निश्चलो लोकवत्सलः ॥ ८ ॥ लोकोत्तरो लोकपतिर्लोकचक्षुरपारधीः । धीरधीर्बुद्धसन्मार्गः शुद्धः सूनृतपूतवाक् ॥ ९ ॥ प्रज्ञापारमितः प्राज्ञो यतिर्नियमितेंद्रियः । भदंतो भद्रकृद् भद्रः कल्पवृक्षो वरप्रदः ॥ १० ॥ समुन्मूलितकर्मारिः कर्मकाष्ठाशुशुक्षणिः । कर्मण्यः कर्मठः प्रांशुर्हेयादेयविचक्षणः ॥ ११ ॥ अनंतशक्तिरच्छेद्यस्त्रिपुरारिस्त्रिलोचनः । त्रिनेत्रस्त्र्यंबकस्त्र्यक्षः केवलज्ञानवीक्षणः ॥ १२ ॥ समंतभद्रः शांतारिर्धर्माचार्यो दयानिधिः । सूक्ष्मदर्शी जितानंगः

कृपालुर्धर्मदेशकः ॥ १३ ॥ शुभंयुः सुखसाद्भूतः पुण्यराशिरनामयः । धर्मपालो जगत्पालो धर्म-साम्राज्यनायकः ॥ १४ ॥ इति दिग्वासःशतं ॥ १० ॥ विमलजलसुगंधैरक्षतैः पुष्पजालैर्वरचरुसु-विदीपैर्धूपनानाफलैश्च । जिनपतिवरदिग्वासःशंतं पूजयेऽहं प्रणुतनरसुरेंद्रं सौख्यदं तत्र भक्त्या ॥ दिग्वासःशतार्घ्यं ॥ १० ॥ धाम्नांपते तवामूनि नामान्यागमकोविदैः । समुच्चितान्यनुध्यायन् पुमान् पूतस्मृती लभेत् ॥ १ ॥ गोचरोऽपि गिरामासां त्वमवाग्गोचरो मतः । स्तोता तथाऽप्यसंदिग्धं त्वत्तोऽभीष्टफलं लभेत् ॥ २ ॥ त्वमतोऽसि जगद्बंधुस्त्वमतोऽसि जगद्भिषक् । त्वमतोऽसि जगद्धाता त्वमतोऽसि जगद्धितः ॥ ३ ॥ त्वमेकं जगतां ज्योतिस्त्वंद्विरूपोपयोगभाक् । त्वं त्रिरूपैकमुक्त्यंगः स्वोत्थानंतचतुष्टयः ॥ ४ ॥ त्वं पंचब्रह्मतत्वात्मा पंचकल्याणनायकः । षड्भेदभावतत्वज्ञस्त्वं सप्तनयसंग्रहः ॥ ५ ॥ दिव्याष्टगुणमूर्तिस्त्वं नवकेवललब्धिकः । दशावतारनिर्धार्यो मां पाहि परमेश्वर ॥ ६ ॥ युष्मन्नामावलिदृब्धविलसत्स्तोत्रमालया । भवंतं वरिवस्यामः प्रसीदानुगृहाण नः ॥ ७ ॥ जयेश जय निर्दग्धकर्मेंधन जया जर । जय लोकगुरो सार्व जगतां जय जित्वर ॥ ८ ॥ इदं स्तोत्रमनुस्मृत्य पूतो भवति भाक्तिकः । यः सपाठं पठत्येनं स स्यात् कल्याणभाजनं ॥ ९ ॥ ततः सदेदं पुण्यार्थी पुमान् पठतु पुण्यधीः । पौरुहूतीं श्रियं प्राप्तुं परमामभिलाषुकः ॥ १० ॥ स्तुतिः पुण्यगुणोत्कीर्तिः स्तोता भव्यः प्रसन्नधीः । निष्ठितार्थो भवेत् स्तुत्यः फलं

निश्रेयसं सुखं ॥ ११ ॥ इति धाम्नां शतं ॥ ११ ॥ पानीयचंदनसदक्षतचारुपुष्पैर्नैवेद्यदीपवरधूपफलैर्विचित्रैः । संस्थापितैः कनकनिर्मितचारुपात्रे धाम्नां शतं सुखकरं परिपूजयामि ॥ धाम्नांशतार्घ्यं ॥ ११ ॥ यः स्तुत्यो जगतां त्रयस्य च पुनः स्तोता स्वयं कस्यचित् । ध्येयो योगिजनस्य यस्तु नितरां ध्याता स्वयं कस्यचित् ॥ यो नम्रानपि नेतुमुन्नतिमलं नंतव्यपक्षे स्थितः । स श्रीमान् जगतां त्रयस्य च गुरुर्देवः पुरुः पातु नः ॥ १ ॥ तं देवं त्रिदशाधिपार्चितपदं घातिक्षयानंतरं । प्रोत्थानंतचतुष्टयं जिनवरं भव्याब्जिनीनामिनं ॥ मानस्तंभविलोकनानतजगन्मान्यं त्रिलोकीपतिं । प्राप्ताचिंत्यबहिर्विभूतिमनघं भक्त्या प्रवंदामहे ॥ २ ॥ इति श्रीजिनसेनाचार्यविरचितसहस्रनामस्तोत्रं संपूर्णं ॥ अष्टाधिकोत्तरसहस्रसुनामभाजस्तीर्थेशिनः शतमखैः शतसेव्यमानान् । इत्यार्चितस्य वसुद्रव्ययुतार्घ्यदानैः संघस्य संतु सततं वरमंगलानि ॥ पूर्णार्घ्यं ॥

## ॥ अथ नित्यपूजाक्रमः ॥

ॐ मंगलं भगवानर्हन् मंगलं भगवान् जिनः । मंगलं प्रथमाचार्यो मंगलं वृषभेश्वरः ॥ १ ॥ ॐ परमब्रह्मणे नमो नमः स्वस्ति २ जीव २ नंद २ वर्धस्व २ विजयस्व २ अनुशाधि २ पुनिहि २ पुण्याहं २ मांगल्यं २ पुष्पांजलिः ॥ घंटाटंकारवीणाक्वणितमुरजयांदां क्रियां काहलाचिझंकारोदारभेरीपटहदलदलंकारसंभृतघोषैः । आक्रम्याशेषकाष्ठान्तटमवघाटितं प्रोद्घटं दभ्रटिभ्रमि-

ष्टाधिष्ठार्हदिष्टिप्रमुखमिह लतांतांजलिं प्रोत्क्षिपामि ॥ २ ॥ ॐ ह्रीं वाद्यमुद्घोषयामि स्वाहा । वाद्यमुद्घोषणं ॥ श्रीमत्त्रिलोकीतिलकं जिनेंद्रं स्वात्मप्रतिष्ठं सकलप्रतिष्ठं । नत्वा प्रतिष्ठातिलकं प्रवक्ष्ये संगृह्य सारं जिनसंहितानां ॥ ३ ॥ जलस्थलशिलावालुकापर्यंतरभूमिशोधनपुरःसरपरिपूरितशुद्धवालुकेष्टकोमलमृत्स्नाधिष्ठिताधिष्ठाने । पंचविधरत्नरमणीयपंचालंकारोपेतशातकुंभमयस्तंभसंभृते । सततशैत्यमाद्यसौरभसंसक्तमंदानिलांदोलितपताकापंक्तिविलसिते । सुवर्णशिखरनिकरविन्यस्तमाणिक्यमयूखमालाश्लेडिनश्रीविराजमाने । चतुर्दिक्षु गोपुरद्वारतोरणोभयपार्श्वप्रदेशविनिहितमणिमयमंगलकलशे । विविधाविमलांबरविरचितवितानालंबितमुक्तादामाद्यलंकृते । मुक्तिवधूस्वयंवरश्रीविवाहविभवनिवासभासुरे । समुचितसमस्तसपर्यायद्रव्यसंदोहसमन्वितविपुलतरचैत्यायतनने । जिनेंद्रकल्याणाभ्युदयमहामहोत्सवाभिरामेषु । यागमंडपाभ्यंतरेषु मंडपपुष्पाक्षतं क्षिपेत ॥ ( येथें मंडपांत फुलें व अक्षता टाकणें. ) ॐ मणिमयमहास्तंभसंभृतत्र्यादित्रिवर्धिष्णुचतुर्विंशतिकरान्यतमायामसमुत्तुंगचतुरस्रचतुर्द्वारोत्तंभितघंटादर्पणाद्यलंकृतं । तोरणोपांतरमणीयकं । धवलदुकूलवसनकन्याकर्दबकृतकपिलाविशुद्धगोमयपयोद्रुमत्वक्कषायसंमार्जनसहितं । महीतलविहितविरचितविचित्ररंगावलिविराजितं । समयसमुत्पन्नसुम्वापशतशंकावहचित्रवितानसंपादितचित्तचमत्कारसौरभासक्तमधुकरमालाकरंबितकमनीयकं । सुमनमालाकलापनिरंतरितांतरालं । दशविधानेकध्वजदंडकोटिविघट्य-

मानघनाघनगलन्मुक्तामार्गसंकाशं । मुक्ताफललंबूषतारकादिविभूषणविभूषितं । विविधाकारकलित। कल्पकेतुनवमालालंबनधवलकलशाष्टकदर्भमालावरणविभ्राजितं । धूपघटपटलनिर्धूमरेखासौरभ्यप्रसरसुरभीकृतसकलदिग्मुखं । दर्शनविशुध्यादिषोडशभावनीयभावबीजयवसिद्धार्थादिद्रव्यबीजकुलपुंजनिकरकर्बुरं । भवद्रव्यरत्नफलपल्लवदूर्वादिपूजोपकरपरिपूर्णं । घोषविशुद्धप्रवचनपारस्तवघनाशीर्वादवाद्यप्रमुखनिनादमुखरीकृतदिगंतरविविधविनयजनपरिपूरितं । जन्माभिषवणसमयपांडुकशिलातटघटितमहामंडपफललक्ष्मीमात्मशोभातिशयभव्यजनसंकल्प्याभ्यासमात्मसात्कुर्वाणं । निर्वाणकारणदयायागसाधनतया महनीयमखिलमंडितं महामंडपमिमं बहुमानयामहे ॥ प्लक्षोदुंबरपिप्पलद्रुमवटाश्रीतोरणालंकृतैर्द्वारैर्वारितपापकर्मनिकरैर्द्वारैश्चतुर्भिर्युतं । निर्गच्छन्वरधूपधूमपटलाभ्रांतालिमालाकुलं घंटादर्पणवस्त्रदर्भसुमनोमालावलीसंभृतं ॥ १ ॥ आगच्छन्परिपूर्णपुण्यफलदैर्धान्यैः फलैरावृतं मुक्तालंबकदंबसंभृततटं दीपप्रभाभासुरं । भर्तुर्मुक्तिवधूस्वयंवरविधावुद्भूतसन्मंडपं प्रव्यं वीक्षणसौख्यदं जिनसवायामंडिनं मंडपं ॥ २ ॥ सद्वृत्तानुत्तमांगान् कलितसुमनसांऽछात्रसंस्कारयुक्तानन्योन्याबाधमानान फलभरितमुखान् संगतानंदसांद्रान् । उत्फुल्लांभोजवक्त्रान् विमलगुणयुताञ्जैनपूजामसमेतान् विद्वन्मंथानदोषादमृतभृतघटान स्थापयित्वाऽर्चयामि ॥ ३ ॥ श्रीमंडपाभं मिलितं त्रिलोकीश्रीमंडितं पंडितपुंडरीकं । श्रीमंडपं खंडितपापतापं क्रमेण ह्यर्घ्येण च मंडयामः ॥ ४ ॥

ॐ ऱ्हीं मंडपांतरघ्योंद्धरणं ॥ ( येथें या मंत्रानें मंडपास अर्घ्य देणें. )

## ॥ अथ पंचकुमारपूजा ॥

श्रीमज्जैनमहामहोत्सवविधिव्यापारसंसिद्धये भव्यानामपि तन्नियोगनिचयश्रद्धापरीतात्मनां । क्षेमार्थं क्रियमाणवास्तुविधिवत्संघातसंपूजनप्रस्तावे प्रविकीर्यंते जय जयारावेण पुष्पांजलिः ॥ १ ॥ ॐ ह्रीं श्रीं क्ष्वीं भूः स्वाहा वास्तुपुष्पांजलिः ॥ आलिप्याखिलमंडपादिजगतीं मृत्पंचगव्यैर्मरुन्मेघाभीनमरान् समर्च्य वसुधामर्त्यैर्विशोध्य त्रिधा । संतर्प्याथ ततोऽप्यहीन् कुशततिं निक्षिप्य दिक्षु क्रमाद्द्वार्दर्भादिभिरर्चयामि महितां सर्वज्ञयज्ञक्षितिं ॥ २ ॥ ॐ ह्रीं प्रकृतिक्रमविध्यवधानाय वेश्यां जातिकुंकमलुलितदर्भदूर्वादिक्रमेण वास्तुपुष्पांजलिः ॥ श्रीवास्तुदेव वास्तूनामधिष्ठानकृतानिश । कुर्वन्ननुग्रहं कस्य मान्योनासीति मन्यसे ॥ ३ ॥ ॐ ह्रीं वास्तुकुमारदेव अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं वा० अत्र स्वस्थाने तिष्ठ २ ठठ स्वाहा । आह्वानस्थापनं ॥ सर्वेषु वास्तुषु सदा निवसंतमेनं श्रीवास्तुदेवमखिलस्य कृतोपकारं । प्रागेव वास्तुविधिकल्पितयज्ञभागमीशानकोणदिशि पूजनया धिनोमि ॥ ४ ॥ ॐ ह्रीं वास्तुकुमारदेव इदमर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥ शांति-

भागं ॥ इंद्राज्ञया धनदनिर्मितवेदिकायां रत्नावलीरचितमंगलरंगवल्ल्यां । संशोधयामि मृदुपावन-
दर्भपूलैर्यत्कल्मषं सकलकिल्बिषनिर्जरार्थं ॥ ५ ॥ ॐ ह्रीं वायुकुमार सर्वविघ्नविनाशनाय महीं
पूतां कुरु २ हूं फट् स्वाहा ।.षट्दर्भमलैर्भूमिं सम्मार्जयेत् ॥ ॐ ह्रीं वायुकुमार अत्र आगच्छा-
गच्छ संवौषट् स्वाहा । ॐ ह्रीं वा॰ अत्र स्वस्थाने तिष्ठ २ ठठ स्वाहा । आह्वानस्थापनं ॥
मृदुसुरभिवहंतः प्रीयणंतो विनेयान् कुमुदतृणलवादीन् मार्जयंतो मखोर्व्यां । इह पवनकुमाराः
सर्वदाऽऽगत्य शांत्यै विरचितमिदमुच्चैः साधु गृण्हीध्वमर्घ्यं ॥ ॐ ह्रीं वायुकुमार इदमर्घ्यमि-
त्यादि ॥ ६ ॥ यस्यार्थं॰ ॥ श्रीतीर्थकृत्सवनमंडपमंडितायास्तोयैः कुशाग्रकलितैरिह वेदिकायाः ।
पातुं सुवर्णकरकोन्नतनाळमुक्तैः संप्लावयामि रजसामपि संवराय ॥ ७ ॥ ॐ ह्रीं मेघकुमार
धरां प्रक्षलाय २ अं हं सं ठं क्षः फट् स्वाहा । षट्दर्भपूलोपात्तजलेन भूमिं सिंचयेत् ॥ ॐ ह्रीं
मेघकुमार अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ह्रीं मे॰ अत्र स्वस्थाने तिष्ठ २ ठठ स्वाहा ।
आह्वानस्थापनं ॥ परिमलजलवृष्ट्या भव्यसस्याभिवृध्यै क्षपितदुरितमाल्याः प्लावयंतोऽध्वरोर्वीं ।
स्तनितकुलकुमारा विद्युद्योतितांगा विनहितममुमुच्चैरर्घ्यमुद्धारयामि ॥ ८ ॥ ॐ ह्रीं मेघकुमार
इदमर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे
प्रतिगृह्यतां २ स्वाहा ॥ यस्यार्थं क्रियते पूजा तस्य शांतिर्भवेत्सदा । शांतिके पौष्टिके चैव सर्व-

कार्येषु सिद्धिदा ॥ शांतिधारां ॥ दर्भाग्निना प्रोन्नितदर्चिपात्रानिःशेषदग्धाघमयेंधनेन । श्रीवेदिकोपांतमुर्वं पुनानि प्रागुत्तराशांतरसंगतेन ॥ ९ ॥ ॐ ह्रीं वन्हिकुमार ह्म्ल्व्र्यूं ज्वल २ प्रज्वल २ तेजपते अमिततेजसे स्वाहा । षड्दर्भपूल्लानलेन भूमिं ज्वालयेत ॥ जिनत्रिभुवनजनार्थं दीपधूपोपहारैस्त्वमसि यदिह नित्यं साधुवं साधुसब्धैः । तदिह वरमखेऽस्मिन्नर्घ्यपाद्यादिभिस्त्वामहमनलकुमारं स्थापयाम्यादरेण ॥ ॐ ह्रीं वन्हिकुमार इदमर्घ्यमित्यादि यस्यार्थं० ॥ १० ॥ स्वस्त्यस्तु पातालमधिष्ठितेभ्यः । सत्षष्टिसंख्यातसहस्रकेभ्यः । अत्रामृतानंदितपन्नगेभ्यः पूर्वोत्तरस्यां दिशि संस्थितेभ्यः ॥ ११ ॥ ॐ ह्रीं श्रीं क्षीं भूषष्टिसहस्रसंखेभ्यो नागेभ्योऽमृतांजलिं प्रसिंचयामि स्वाहा । क्षीरसेचनमैशान्यां दिशि नागमंतर्पणं ॥ ॐ ह्रीं नागकुमार अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ना० अत्र स्वस्थाने तिष्ठ २ ठठ २ स्वाहा । आह्वानस्थापनं ॥ मधुरतरसुधाभिः शर्कराभिर्हविर्भिर्विपुलकनकपात्रेष्वर्घ्यमुद्धारिताभिः । जिनमखभुवि तुष्टान् षष्टिसंख्यासहस्रप्रकटितनिजभोगान् पन्नगान् प्रीणयामि ॥ ॐ ह्रीं नागकुमार इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ १२ ॥

## ॥ अथ क्षेत्रपालपूजा ॥

प्रणम्य श्रीजिनेशानां वर्धमानं जिनेश्वरं । पूजां श्रीक्षेत्रपालानां वक्ष्ये विघ्नविघातये ॥ १ ॥
प्रथमो माणिभद्रश्च द्वितीयो भैरवस्ततः । तृतीयो वीरभद्रश्च चतुर्थो जयसंज्ञकः ॥ २ ॥

पंचमो विजयश्चैव क्षेत्रपाला अमी सुराः । याक्षे कुले भवाः ख्याता विश्वविघ्नविघातकाः ॥ ३ ॥
भो क्षेत्रपालाः परिवारयुक्ताः संशब्दयेऽहं भवतो गुणाढ्याः । आयात चात्रैव जिनेंद्रभक्ता-
स्तिष्ठंतु मे सन्निहिता भवंतु ॥ क्षेत्रं सर्वं पवित्रं गृहनगरवनोद्यानधन्वादिभेदं यो रक्षत्यक्षसाक्षा-
दपि समवसृतिक्षेत्रमेतद्विशेषात् । तैलैः सिंदूरधूलीगुडकुसुमलसद्गंधकौसुंभवस्त्रैरन्नाद्यैश्चापि यज्ञे
प्रमुदितहृदयं तं यजे क्षेत्रपालं ॥ ५ ॥ ॐ आँ क्रों ह्रीं पंचमहाक्षेत्रपाला अत्र आगच्छतागच्छत
संवौषट् स्वाहा । ॐ आँ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ आँ० अत्र मम सन्निहिता भवत २
वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ सिंहशावकसन्निभांजननीलनीरजमेचकं रात्रिजागर-
मूढमायतबाहुभिर्विधृतं सदा । स्वर्णपात्रमसिं ह दंडमरं नत्रोरगभूषणं । क्षेत्रपालमिहाह्वये विविधां-
तरारिविघातिनं ॥ ६ ॥ सद्येनापि सुगंधेन स्वच्छेन बहुलेन च । स्नपनं क्षेत्रपालस्य तैलेन
प्रकरोम्यहं ॥ ७ ॥ ॐ ह्रीं क्षेत्रपालाय तैलाभिषेचनं करोमि स्वाहा । तैलस्नपनं ॥ सुंदुरैरुणा-
कारैः पीतवर्णादिसंभवैः । चर्चनं क्षेत्रपालस्य सिंदूरैः प्रकरोम्यहं ॥ ८ ॥ ॐ ह्रीं क्षेत्रपालाय
सिंदूरधूलीसिंचनं करोमि स्वाहा । सिंदूरधूलीसिंचनं ॥ सिंदूरसुंदरभरेण सुकुंकुमेन तैलेन तीर्थ-
जलसन्निभपावनेन । अर्घ्येण सद्गुडतिलेन च मोदकेन क्षेत्राधिपं जिनसुसेवकमर्चयामि ॥ ९ ॥
ॐ ह्रीं क्षेत्रपालाय सुगंधगंधानुलेपनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय कौसुंभवस्त्रवेष्टनं

करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय पुष्पमालावेष्टनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय गुष्मोदकार्पणं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय सुगंधद्रव्यार्चनं करोमि स्वाहा ॥



## ॥ अथ अष्टकं ॥

स्वर्णघटोदरसंभृतकुंभैरिद्रनदीजलचंदनयुक्तैः । संभ्रमगोत्रलजैनपदाब्जक्षेत्रपतेः पदपंकजपूजां ॥ ॐ ह्रीं क्षेत्रपालाय जलं समर्पयामि ॥ १ ॥ चंदनकुंकुमकर्पूरसारैः कस्तुरीजीवनगंधसुपंकैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ गंधं ॥ २ ॥ अक्षमसुद्रजफेनसुपिंडैः शालियतंडुलपांडुरपुंजैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ अक्षतान् ॥ ३ ॥ पद्मलताऽरुणचंपकजातीमल्लिसुपाटलफुल्लसुवृंदैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ पुष्पं ॥ सुरत्नसुष्टितपात्रगताज्यैर्भक्ष्यमितोदनपायसशाकैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ चरुं ॥ ५ ॥ इंद्रमयोर्जितरंगमुतेजैश्चंद्रमयोगविराजितदीपैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ दीपं ॥ ६ ॥ कालागरुश्रीखंडमगलैर्धूपितवन्हिमुयोगसुधूपैः । संभ्र० ॥ ॐ ह्रीं क्षे० ॥ धूपं ॥ ७ ॥ आम्रसुदाडिमलांगलिपूगैः पात्रगगोस्तनिरंभकपित्थैः । संभ्र० ॥ ॐ ह्रीं क्षेत्र० फलं ॥ ८ ॥ श्रीजैनपादांबुजसेविभृंगं श्रीजैनगेहं प्रतिपालयंतं । मुनीश्वराणां सुखकारणोक्तं श्रीक्षेत्रपालं परिपूजयामि ॥ ॐ ह्रीं क्षे० ॥ अर्घ्यं ॥ ९ ॥ सर्वजनस्तुतपूजितदेहं पापविनाशनशांतिकधारां । संभ्र० ॥ शांतिधारां ॥

## ॥ अथ प्रत्येकपूजा ॥

श्रीमाणिभद्राख्यसुक्षेत्रपालं जिनेंद्रसेवारतमुग्रमूर्तिं । सुसौख्यनिर्दोषवरं सुरेशं सदृष्टिनं सुप्रयजे जलाद्यैः ॥ १ ॥ ॐ आँ क्रों ऱ्हीं माणिभद्रक्षेत्रपालाय इदमर्घ्यं पाद्यं जलं गंधं अक्षतान् पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा । शांतिधारां ॥ १ ॥ श्रीभैरवाख्यं वरयक्षराजं केयूरहारांगदभूषणांगं । सुदिव्यदेहं वरकृष्णवर्णं यजे महार्घ्यैवरका-लरूपं ॥ २ ॥ ॐ आँ क्रों ऱ्हीं भैरवक्षेत्रपालाय इदमर्घ्यमित्यादि ॥ २ ॥ यज्ञोपवीतान्वितमुग्र-तेजं सुखड्गहस्तं कृतनागभूषं । सदूर्ध्वकेशं कृतमौलिचंद्रं समर्चये श्रीसुरवीरभद्रं ॥ ३ ॥ ॐ आँ क्रों ऱ्हीं वीरभद्रक्षेत्रपालाय इदमर्घ्यमित्यादि ॥ ३ ॥ जिनेंद्रपादद्वयसेव्यमानमाताम्र-नेत्रं कररत्नदंडं । सुधौतवस्त्रं शुभश्वाधिरूढं संपूजये श्रीजयक्षेत्रपालं ॥ ४ ॥ ॐ आँ क्रों ऱ्हीं जयक्षेत्रपालाय इदमर्घ्यमित्यादि ॥ ४ ॥ क्षेत्राधिनाथो विजयः सुरार्च्यः सुहास्यमानो भुवि रक्ष्यमानः । सुपद्मवक्त्रः सकलस्वरूपः संपूज्यते श्रीजिनपादभक्तः ॥ ५ ॥ ॐ आँ क्रों ऱ्हीं विजयक्षेत्रपालाय इदमर्घ्यमित्यादि ॥ ५ ॥ क्षेत्रपाला भुवि ख्याताः कुर्वंतु भव्यमंगलं । पूर्णार्घ्यप्रापिताः सर्वे शांतिदानेन वर्णिताः ॥ पूर्णार्घ्यम् ॥

## ॥ अथ स्तोत्रं ॥

यं यं यं यंत्रराजं दशदिशि धगिनं भूमिकंपायमानं । सं सं संहारमूर्तिं शिरमुकुटजटाशेखरं चंद्रबिंबं । दं दं दं दीर्घकायं विकृतनखमुखं मूर्धगेमं करालं । पं पं पं पापनाशं प्रणमतु सततं भैरवं क्षेत्रपालं ॥ १ ॥ रं रं रं रक्तवर्णं करकृतजटिलं तीक्ष्णदंष्ट्राकरालं । घं घं घं घोषघोषं घघघघघटितं घूर्घराघोषघोषं । कं कं कं कालरूपं दिगि दिगि दिगितं ज्वालितं उग्रतेजं । तं तं तं दिव्यदेहं प्रणमतु० ॥ २ ॥ लं लं लं लंबलंबं ललललल ललितं दीर्घजिव्हाकरालं । धूं धूं धूं धूम्रवर्णं स्फुटविकृतमुखं भासुरं भीमरूपं । रुं रुं रुं रुंडमालं रुदिनमयमयं ताम्रनेत्रं विशालं । नं नं नं नग्नरूपं प्रणमतु० ॥ ३ ॥ वं वं वं वायुवेगं प्रलयपरिवृतं ब्रह्मरूपं स्वरूपं । खं खं खं खड्गहस्तं त्रिभुवननिलयं कालरूपं प्रशान्तं । चं चं चं चंचलत्वं चलचल चलितं चालितं भूतवृंदं । मं मं मं मायरूपं प्रणमतु० ॥ ४ ॥ शं शं शं शंखहस्तं शशिकरधवलं यक्षसंपूर्णतेजं । मं मं मं मायमायं कुलत्रकुलकुलं मंत्रमूर्तिं मुनत्वं । भे भे भे भूतनाथं किलिकिलिकिलितवचोगृण्हगृण्हाल्लुलंतं । अं अं अं अंतरिक्षं प्रणमतु० ॥ ५ ॥ पुं पुं पुं खड्गभेदं विषमममृतकरं कालकालांधकारं । क्षीं क्षीं क्षीं क्षिप्रवेगं दहदहदहनं नेत्रसंदीप्यमानं । हूं हूं हूंकारनादं हरिहरहसितं एहि एहि प्रचंडं । मं मं मं सिद्धनाथं प्रणमतु सततं भैरवं क्षेत्रपालं ॥ ६ ॥ सं सं सं सिद्धयोगं सकलगुणमयं देवदेवं प्रसन्नं । यं यं यं यज्ञनाथं हरिहरवदनं

चंद्रसूर्याग्निनेत्रं । जं जं जं जक्षनाथं वसुवरुणगुरासिद्धगंधर्वनागं । रुं रुं रुं रुद्ररूपं प्रणमतु० ॥ ७ ॥ हं हं हं हंसघोषं हसितकुहकुहारावरौद्राट्टहासं । यं यं यं यक्षमर्त्यं शिरकनकमहाबद्धखड्गांगपाशं । रं रं रं रंगरंगं प्रहसितवदनं पिंगकस्मस्मशानं । सं सं सं सिद्धनाथं प्रणमतु० ॥ ८ ॥ इत्येवं भावयुक्तः पठति च नियतं भैरवस्याष्टकं यो । निर्विघ्नं दुःखनाशं त्वसुरभयहरं शाकिनीडाकिनीनां । त्रासो नो व्याघ्रसर्पधृतिवहनि सदा राजशत्रोस्तथाऽज्ञात् । सर्वे नश्यंति दूरा ग्रहगणाविषमाश्चितिताऽभीष्टसिद्धिः ॥

## ॥ अथ जयमाला ॥

लक्ष्मीधामकरं जगत्सुखकरं सद्दीर्घकायं वरं । रात्रीजागरवाहनं सुखरं कर्वालपाणीधरं ॥ निर्विघ्नं ग्रहनाशनं भयहरं भूतादित्रासोत्करं । वंदे श्रीजिनसेवकं हरिहरं श्रीक्षेत्रपालं सदा ॥ १ ॥ सुरासुरखेचरपूजितपाद गुणाकरसुंदर हूंकृतनाद । मनोहर पन्नगकंठविमाल सदा सुमहोदय जय क्षेत्रपाल ॥ १ ॥ सुडाकिनिशाकिनिनाशनवीर सुयाकिनिराकिनिभ्रंशनधीर । अनुपममस्तकशोभितमाल सदा सु० ॥ २ ॥ सुल्याकिनिहाकिनिपन्नगवास सुभूपतितस्करदुर्भयनाश । निशाकरशेखरमंडितभाल सदा सु० ॥ ३ ॥ समुद्गलशार्दूलमकरवृंद सुराक्षसभोंकसदुर्भयकंद । सदामलकोमलांगविशाल । सदा सु० ॥ ४ ॥ सुचित्रकर्कुजर सागरपार सुदुर्जनशोचन शत्रुसंहार । सुकं-

पितकिन्नरभूतरसाल सदा सु० ॥ ५ ॥ सुवृद्धिसमृद्धिसुदायकपूर सुपुत्रकमित्रकलत्रसुपूर । सुरंजितनरसुरकामिनिबाल सदा सु० ॥ ६ ॥ सुकेयूरकुंडलहारसुवाद सुशेखर सुस्वरकिंकिणिनाद । भयंकर भीषणभासुर काल सदा सु० ॥ ७ ॥ सुकामिनिक्षालनदिव्यशरीर सुवाहन हासनमोदनधीर । सुभाषणरंजित तत्वविचार सदा सु० ॥ ८ ॥ सुस्थापितनिर्मलजैनसुवाक्य निकंदितदुर्मतदुर्मतिसांख्य । प्रकाशितशासनजैनरसाल सदा सु० ॥ ९ ॥ सुभाक्तिश्रेय सुभव्य सुवंश महोदय जैनसरोवरहंस । महासुखसागरकेलिविशाल सदा सु० ॥ १० ॥ घत्ता ॥ असमयसुखसारं तीक्ष्णदंष्ट्राकरालं स्वकरकृतजटीलं दीर्घजिव्हाकराळं । सुघटविकृतवक्त्रं शांतिदासप्रसस्यं भजतु नमतु जैनं भैरवं क्षेत्रपालं ॥ अर्घ्यं ॥ ११ ॥ लक्ष्मीप्रापकरी कलत्रसुकरी चौरादिशत्रून्हरी । शाकिन्यादिहरी प्रशर्मसुचरी राज्यर्द्धिसंवर्धिनी ॥ विद्यानंदधनौघधामनगरीविघ्नौघनिर्नाशिनी । पूजा श्रीजिनक्षेत्रपस्य भवतु संपत्करी चित्करी ॥ इत्याशीर्वादः ॥

## ॥ अथ पुण्याहवाचनं ॥

श्रीनिर्जरेशाधिपचक्रपूर्वमित्यादि भण्या संकल्पपूर्विकांत्यं पठेत् ॥

१. श्रीनिर्जरेशाधिपचक्रपूर्व हे आदिकरून, भण्या सकल्पपूर्विका पर्यंत पुण्याहवाचन सांगणे. पृष्ठ ३० पहा.

## ॥ अथ दर्भस्थापनं ॥

परमब्रह्मभूमात्मं परमात्मं जिनक्रतौ । ब्रह्मस्थाने स्थितं कुर्वे दर्भं विघ्नोपशांतये ॥ १ ॥ यदुक्तं ब्रह्म-सद्ब्रह्मचर्यं व्रतविधौ यतन् । केवलज्ञानहेतुश्च तत्र दर्भं न्यसाम्यहं ॥ ॐ ह्रीं दर्पमथनाय नमः ब्रह्मदर्भः ॥ १ ॥ इंद्रस्थानमिदं यस्मादिंद्रादीनेति सौम्यतां । तत्र दर्भं न्यसाम्येष शक्रासनवि-शुद्धये ॥ ॐ ह्रीं द० इंद्रदर्भः ॥ २ ॥ रुष्कदावाग्निसंतप्तचित्तसंतापशांतये । आग्नेय्यां दिशि दर्भेण वन्हेरर्चनमादधे ॥ ॐ ह्रीं द० अग्निदर्भः ॥ ३ ॥ दुष्कर्मदंडितानेकप्राणिनां सुखहेतवे । यमासनपदे दर्भं विदधे दक्षिणां दिशं ॥ ॐ ह्रीं द० यमदर्भः ॥ ४ ॥ रोगराक्षसमुत्क्षिप्तं जग-द्रक्षाविचक्षणं । आसनं तु प्रयच्छामि रक्षोराजाय तद्दिशं ॥ ॐ ह्रीं द० नैर्ऋतदर्भः ॥ ५ ॥ संसारार्णवमग्नानां तदुद्धरणकारणं । वरुणस्यासनं दर्भं तद्दिशि प्रतनोम्यहं ॥ ॐ ह्रीं द० वरुण-दर्भः ॥ ६ ॥ मनःपवनपूतेन क्षालनार्थं मनोमलं । दर्भेणासनमारोप्य वायुं तद्दिशमानये ॥ ॐ ह्रीं द० वायव्यदर्भः ॥ ७ ॥ लसल्लक्ष्मीपतेर्लक्ष्मीसत्प्रयोगाव्ययाय वै । उत्तराशापतिं दर्भं तत्र संक-ल्पयाम्यहं ॥ ॐ ह्रीं द० कुबेरदर्भः ॥ ८ ॥ ईशत्वादिलसत्सिद्धेः सिद्धये दर्भमंजसा । ईशान्या-सनमारोप्यालंकार एष तद्दिशं ॥ ॐ ह्रीं द० ईशान्यदर्भः ॥ ९ ॥ अधोभुवननाथस्य धरणेंद्रस्य तद्दिशं । दर्भासनं पुरस्कृत्य तं तथैव प्रसादये ॥ ॐ ह्रीं द० धरणेंद्रदर्भः ॥ १० ॥ पुष्यत्पी-

गृपनिर्म्यंदर्भाणिनेत्यामगृग्निनः । शीतांशोरासनं दर्भमूर्ध्वायां दिशि संदधे ॥ ॐ ऱ्हीं द० सोमदर्भः ॥ ११ ॥

## ॥ अथ भूम्यर्चनं ॥

श्रीमत्कुंकुमपंकलिप्तनवरत्नस्फाररंगावलीशोभालंकरणादिसारग्चितां स्फूर्जत्प्रभासंचितां । वार्गंधाक्षतपुष्पदामचरुभिर्दीपैश्च धूपैः फलैः श्रीमन्नागदलैरलं भुवमलं कुर्वे जिनेंद्रोत्सवे ॥ १ ॥ ॐ ऱ्हीं भूर्भूमिदेवते अत्र आगच्छागच्छ संवौषट् स्वाहा । ॐ ऱ्हीं भूर्भू० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ऱ्हीं भूर्भू० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसान्निधीकरणं ॥ वार्दर्भगंधैः सुमनोऽक्षतौघैर्दीपैः सुधूपैरमृतोपमान्नैः । क्रमान्महासो महितां महाभिर्मही महादेवमहामहस्य ॥ २ ॥ ॐ ऱ्हीं नीरजसे नमः । ॐ ऱ्हीं शीलगंधाय नमः । ॐ ऱ्हीं अक्षताय नमः । ॐ ऱ्हीं विमलाय नमः । ॐ ऱ्हीं परमसिद्धाय नमः । ॐ ऱ्हीं ज्ञानोद्योताय नमः । ॐ ऱ्हीं श्रुतधूपाय नमः । ॐ ऱ्हीं अभीष्टफलदाय नमः । ॐ भूर्भूमिदेवतायै भूम्यर्चनं करोमि स्वाहा । भूम्यर्चनं ॥ ( येथें या मंत्रानें यज्ञभूमीस अर्घ्य देणें.)

## ॥ अथ होतुरुपवेशनं ॥

दर्भे प्रस्तीर्य वस्त्रं वा वेत्रासनमथोऽपि वा । अत्रोपवेशनं कुर्वे वामे पल्यंकयोगतः ॥ १ ॥ यंत्रमंडपाग्रे होतुरुपवेशनं ॥ ( येथें पूजकानें साध्या [दळ] काढलेल्या मंडपापुढें दर्भ किंवा

नवें वस्त्र अंथरून, अथवा वेताचें आसन करून, त्यावर पल्यंकासनयोगानें [ म्हणजे उजवा पाय डाव्या मांडीवर ठेवून अलकट पालकट घालून ] बसणें. )

## ॥ अथ मंडपप्रतिष्ठाविधानं ॥

साष्टारत्निशतैश्चतुर्वेदिरुचिरं शक्रः कुबेरेण यं । ज्यायांसं मणिमंडपं विरचयत्यर्हत्प्रतिष्ठाकृते ॥ अंतर्निर्मितदिव्यवेदिविलसल्लक्ष्मीकटाक्षोज्ज्वः । सोऽयं मंगलमंडपो विजयते जैनप्रतिष्ठोत्सवे ॥ १ ॥ मंडपांतः समंतात् कुंकुमाक्तपुष्पाक्षतं क्षिपेत् ॥ ( येथें यज्ञमंडपाच्या आंतल्या चोहोंबाजूस केशरानें रंगिविलेले तांदूळ व फुलें टाकणें. ) पुण्या एतेऽत्र भूपाः प्रवचनपठतः स्तंभयज्ञांगपात्रा दर्भा वा द्रव्यबीजध्वजकलशदलस्रग्वितानादिभावाः । स्तोत्राशीर्गीतवाद्यध्वनिनिचितादिशो भाक्तिकाः पूर्णथैतैस्त्रीसूत्रैः पंचवर्णैर्बहिरपि नवसूत्रेण वार्घ्येण युंजेत् ॥ २ ॥ भूषणादिवस्तु पृथक् पुष्पाक्षतं प्रक्षिप्य बहिः पंचवर्णसूत्रेण त्रीन्वारान् वेष्टयित्वाऽर्घ्यं दद्यात् ॥ ( येथें पवित्र व सुशोभित व शास्त्रोक्त यज्ञमंडपांत असलेल्या खांब, पुजापात्र, दर्भ, द्रव्यबीज, [ यव, पांढऱ्या मोहऱ्या इत्यादिक धान्यें ] ध्वज, कलश, तोरणमाला, पुष्पमाला, मौक्तिकमाला ह्या प्रत्येक पदार्थावर तांदूळ व फुलें टाकून, भव्यजनानीं स्तोत्र, आशीर्वाद व पदें पद्यें म्हणत व नाना-

वाद्यें वाजवीत यज्ञमंडपाच्या बाहेरल्या बाजूस ज्या प्रत्येकवर्णाचे तीन पदर आहेत अशा पंच-वर्णसूत्रांनी अथवा नव्या पांढऱ्या सुतांनी गुंडाळून अर्घ्य देणें.)

## ॥ अथ कुमुदादि द्वारपालानुकूलनं ॥

पूर्वद्वारप्रदेशे प्रणिहितकुमुदाद्युद्घदौवारिकैर्दक्षैः संरक्षमाणो निखिलमुनिजनोदीरिताशीर्निनादः। विद्वत्सामाजिकाद्युच्चरितजयजयारावसंपूर्णमाणो विभ्राजत्येष यज्ञे सकलजनहिते मंडपो मंडिताशः ॥ ३ ॥ एतत् वृत्तं पठित्वा मंडपांतः समंतात पुष्पाक्षतं विकीर्येत ॥ (येथे हा समुदायमंत्र उच्चारून मंडपाच्या आंतल्या बाजूस चोहोंकडे अक्षता व फुलें टाकणें.) पूर्वद्वारप्रदेशे प्रविलिखितलसत्स्वस्तिकं न्यस्तकुंभं। पंचास्यं सर्वधान्यांकुररुचिरतरं पांडुरं प्रेक्षमाणं ॥ हैमं दंडं प्रकांडं मरकतखचितं भ्रामयन् मुहुरं तं। स्फूर्जद्रूपागमेतं कुमुद इह महाद्वाःस्थितोऽभ्यर्चनीयः ॥ १ ॥ ॐ ह्रीं कुमुदप्रतीहार पूर्वद्वारे तिष्ठ २ ठठ स्वाहा। स्थापनं ॥ ॐ ह्रीं कुमुदप्रतीहार इदमर्घ्यं पाद्यं जलं गंधं अक्षतान पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ शांतिधारां ॥ १ ॥ प्राग्वा प्रध्मानमानामलकलशमहाद्वारदेशे प्रतिष्ठन्। पश्यन्नुद्दंडदंडायुधमपि च तथा बिभ्रयन् भीमरूपं ॥ क्षुद्रप्राणिप्रवेशे निगदितकरहुंकारपूर्वं निरुंधन्। अभ्यर्च्येतांजनाभो जिनयजनविधावंजनद्वारपालः ॥ २ ॥ ॐ ह्रीं अंजनप्रतीहार दक्षिणद्वारे तिष्ठ २ ठठ

स्वाहा । स्थापनं ॥ ॐ ऱ्हीं अंजनप्रतीहार इदमर्घ्यमित्यादि ॥ २ ॥ प्रत्यग्द्वारे विराजत्कलशमपि तथाभीक्ष्णमुद्वीक्षमाणो । विभ्राजच्चंडदंडं चकचकितरुचं तद्वदुद्दाममेषन् ॥ सभ्यानां संप्रवेशे विदधदनुमतिं कुंदचंद्रावदातः । प्रीतः संपूजनेन प्रभवतु यजने वामनद्वारपालः ॥ ३ ॥ ॐ ऱ्हीं वामनप्रतीहार पश्चिमद्वारे तिष्ठ २ ठठ स्वाहा । स्थापनं ॥ ॐ ऱ्हीं वामनप्रतीहार इदमर्घ्यमित्यादि ॥ ३ ॥ शस्तायामुत्तरस्यां ककुभि विरचितद्वारदेशे तथैव । प्रभ्राजत्कुंभवक्त्रे विनिहितविमलापांगरम्यावलोकान् ॥ शुंभद्रत्नस्फुरद्भूषणरुचिरकरेणाद्धरद्दिव्यदंडं । पुष्पस्रग्भूषितांगः सुजनजनहितं पुष्पदंतस्तनोतु ॥ ४ ॥ ॐ ऱ्हीं पुष्पदंतप्रतीहार उत्तरद्वारे तिष्ठ २ ठठ स्वाहा । स्थापनं ॥ ॐ ऱ्हीं पुष्पदंतप्रतीहार इदमर्घ्यमित्यादि ॥ ४ ॥

## ॥ अथातो वेदिकाप्रतिष्ठाविधानं ॥

यवादिजैर्मंगलदानतूर्यैर्यवारकैः कार्जिनस्य गर्भे । जगत्पतेः सिद्धवधूविवाहवेदीमिमां भूमिमलंकरोमि ॥ यवारकस्थापनं ॥ १ ॥ ( गहू, भात, जवस, वेणुफल, मोहऱ्या, सातू, वरे, जोंधळे व गळे या नऊ धान्यास " यवारक " ह्मणतात. या धान्याचे पुंज वेदिकेस [ कट्यास ] शोभा येईल असे वेदिकेवर घालणें, याला यवारकस्थापन ह्मणतात. ) आदेशावहितान्यवासवपरीवारोपनिर्माप्यया । द्रकशुद्धिप्रति वृद्धये प्रयजने सौधर्मसोऽर्हत्प्रभं ॥ सोऽयं वेदिमतल्लिकापरि-

कश्चंद्रोपकायोऽप्ययं । सोऽत्र स्फूर्जति मंगलादिवदिमे ते भांति भांडोच्चयाः ॥ २ ॥ वेद्यां चंद्रोपकादिषु कुंकुमाक्तपुष्पाक्षतं क्षिपेत् ॥ ( येथें वेदीवर बांधलेला चंद्रोपक ह्म० [ चांदवा ] व भांडोच्चय ह्म० [ वेदीच्या च्यारी कोपऱ्यास रचिलेल्या पांच पांच रंगविलेल्या ओल्या मडक्याची उतरंडी ] यावर केशरानें रंगविलेले तांदूळ व फुलें टाकणें. ) प्रोक्षत्प्रोक्षणमंत्रपूतपयसा वेदीं वरार्घैः समालभ्याभ्यर्च्य चरुस्रगादिभिरिमां नीराजयामोऽजसा । लावण्योद्धतयाऽवतार्य लवणस्तोमं पवित्रार्णसा संपूर्णानवतारयामि कलशानस्यां महामेचकान् ॥ ३ ॥ प्रोक्षणविधिः ॥ ( येथें वेदीवर प्रोक्षणमंत्रानें ह्म० [ ॐ अमृतेऽमृतोद्भवे इत्यादिमंत्रानें ] पवित्र झालेल्या पाण्याचा सितोडा देणें, व त्या वेदीस कुंकू लावणें, अर्घ्य देणें, फुलांची माळ चढविणें, व नीराजनावतरण करणें; त्यानंतर वेदिकेवर मिठाची रास शोभेकरितां घालून, पूर्वादि आठ दिशेस स्वच्छ पाण्यानें भरलेले झळझळीत कलश ठेवणें. याला प्रोक्षणविधि ह्मणतात. )

## ॥ अथातो यागमंडलवर्त्तनाविधानं ॥

श्वेताः पीता हरीता लोहितरुचिरुचः शामलाश्चापि देवाः । श्वेताद्यै रत्नचूर्णैर्जिनमहसमये भक्तितो वेदिकायां ॥ अष्टार्धाष्टद्विरष्टत्रिचतुरभिहतास्तच्छदाब्जचतुर्द्धाः । कोणान्यल्पानि पंचैवकमनियबृहन्मंडलान्यालिखंतु ॥ ॐ ह्रीं श्वेतपीतहरितारुणकृष्णमणिचूर्णं स्थापयामि स्वाहा । पंचचूर्णस्थापनं ॥

श्रीनागराजः सितदेहदीप्तिः सद्वर्णवस्त्राभरणाद्युपेतः । यज्ञोचितां वेदिमलंकरोतु पाणिस्फुरत्पांडु-ररत्नचूर्णैः ॥ २ ॥ ॐ ह्रीं नागराजाय अमिततेजसे स्वाहा । श्वेतचूर्णस्थापनं ॥ सुवर्ण-वर्णाभरणांगरागो विमानमाल्यादिमनोज्ञवेशः । सुवर्णवर्णो धनदो वितर्दी भक्त्या लिखेदुद्वसु-वर्णचूर्णैः ॥ ३ ॥ ॐ ह्रीं हेमप्रभाय धनदाय ठठ स्वाहा । पीतचूर्णस्थापनं ॥ लसत्प्रियंगूदल-कायकांतिस्तादृक्प्रभाकल्पसमीक्षणीयः । लिखावितर्दी लिखिताद्वितानीं मंत्राश्मगर्भोत्तमरत्न-चूर्णैः ॥ ४ ॥ ॐ ह्रीं हरितप्रभाय शत्रुमथनाय स्वाहा । हरितचूर्णस्थापनं ॥ पद्मप्रभाभासुरदि-व्यमूर्तिः पद्माभदिव्यांबरभूषणो यः । वेद्यां सपर्या रचनां तनोतु स पद्मरागोज्वलरत्नचूर्णैः ॥ ५ ॥ ॐ ह्रीं रक्तप्रभाय सर्ववशंकराय वषट् स्वाहा । अरुणचूर्णस्थापनं ॥ श्वेतेतरच्छायशरीररश्मि स्तद्वत्प्रभाकल्पयुतो दिवौकाः । करोतु वेद्यां रचनाविशेषं तादिन्द्रनीलोत्तमरत्नचूर्णैः ॥ ६ ॥ ॐ ह्रीं कृष्णप्रभाय मम शत्रुविनाशाय फट् घे २ स्वाहा । कृष्णचूर्णस्थापनम् ॥ अथामरेंद्रः समुपेत्य भक्त्या सुचित्रकायो वरवेदिकायाः । विदिक्षु वज्राणि लिखेदमुष्य करांबुजस्वीकृतरत्न-चूर्णैः ॥ ७ ॥ वेदिकोणेषु प्रत्येकं वज्रद्वयमवस्थापयामि स्वाहा । वज्रस्थापनं ॥ इति यागमंडल-वर्त्तनविधानं ॥

# ॥ अथ पंचपूजा ॥



आह्वयाम्यहमर्हंतं स्थापयामि जिनेश्वरं । सन्निधीकरणं कुर्वे पंचमुद्रान्वितं महे ॥ १ ॥ ॐ ह्रीं अर्हत्परमेष्ठिन् अत्र अवतरावतर संवौषट् स्वाहा । ॐ ह्रीं अर्ह० अत्र तिष्ठ २ स्वाहा । ॐ ह्रीं अर्ह० अत्र मम सन्निहितो भव वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ कनककुंभभृतै-र्जलपूरितैर्मलहरैर्वरसौरभपूरितैः । परियजे जिनपादपयोजकं सकलप्राणिभृतां सुखयोजकं ॥ ॐ ह्रीं अर्हन्नमः जन्मजरामृत्युविनाशनाय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयपर्वतजैः शुभ-नंदनैः परिमलागतषट्पदचंदनैः । परि० ॥ ॐ ह्रीं अर्हन्नमः सुगंधशरीरसंप्रापकाय ॥ गंधं ॥ २ ॥ अतिमनोहरशालिसुपुंजकैः शशिकरौघ दीर्घशरीरकैः । परि० ॥ ॐ ह्रीं अर्हन्नमः अक्षयसुखसं-प्रापकाय ॥ अक्षतान् ॥ ३ ॥ कमलचंपकजातिमुकेतकीबकुलपाटलपुष्पसमूहकैः । परि० ॥ ॐ ह्रीं अर्हन्नमः सुमनःसुखप्रदाय ॥ पुष्पं ॥ ४ ॥ घृतसुमोदकमंडलसंयुतैश्चरुवरैर्मणिभाजन-संस्थितैः । परि० ॥ ॐ ह्रीं अर्हन्नमः क्षुद्रोगनिवारणाय ॥ चरुं ॥ ५ ॥ सुघनसारविशोभितदी-पकैः सुजनशोकविदाहनदक्षकैः । परि० ॥ ॐ ह्रीं अर्हन्नमः केवलज्ञानप्रकाशकाय ॥ दीपं ॥ ६ ॥ अगरुचंदनचंद्रविमिश्रितैर्विविधवस्तुभृतैर्घनधूपकैः । परि० ॥ ॐ ह्रीं अर्हन्नमः अष्टकर्मदहनाय ॥ धूपं ॥ ७ ॥ फलभरैः कनकाम्रसुदाडिमैः सुरसगंधरसेन मनोहरैः । परि० ॥ ॐ ह्रीं अर्हन्नमः

अभीष्टफलदाय ॥ फलं ॥ ८ ॥ तीर्थकराणां कृतमष्टकाव्यं श्रीराजपालेन कलाक्षतौघं । जलादियुक्तं कविनाऽऽदिनोक्तं मोक्षं तु सौख्यादि भणंतु भव्याः ॥ अर्घ्यं ॥ ९ ॥ ततो जिनेंद्रपादांते वारिधारां निपातये । भृंगाग्नालिकोद्भानां विनमल्लोकशांतये ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥

## ॥ अथ जयमाला ॥

जय जय जगत्त्रयाधिप जय जय मोहांधकारनीरजबंधो । जय जय पुरुपरमेश्वर जय जय निःप्रतिविमलकेवलबोध ॥ १ ॥ पुरुपरमेश्वर सुरनुत जय जय । परमानंदसुखास्पद जय जय ॥ अजितजिनाधिप अचलित जय जय । विजितमनोभवभुजबल जय जय ॥ १ ॥ शंभव गंभीरांबुधे जय जय । चुंबितनुतकीर्तीश्वर जय जय ॥ अभिनंदन जिनवल्लभ जय जय । इभरिपुपीठाधिष्ठित जय जय ॥ २ ॥ सुमतिजिनाधिप सुरनुत जय जय । कुमतांबुधिवडवानल जय जय ॥ पद्मप्रभ परमेश्वर जय जय । पद्माश्रयपदपंकज जय जय ॥ ३ ॥ वरसुपार्श्व जिनाधिप जय जय । निरुपमगुणगणनिलय जय जय ॥ चंद्रप्रभपरमेश्वर जय जय । रुद्रमुनीश्वरनुतपद जय जय ॥ ४ ॥ पुष्पदंत जिनपुंगव जय जय । पुष्पापुष्पसमीरण जय जय ॥ शीतलजिन परमेश्वर जय जय । भूतलपतिनुतवंदित जय जय ॥ ५ ॥ श्रेयांस परमेश्वर जय जय । आयतमुक्तिश्रीयुत जय जय ॥ वासुपूज्य जिनवल्लभ जय

जय । भासुरभव्यनिवासन जय जय ॥ ६ ॥ विमल श्रीरमणीपते जय जय । द्युमणिसहस्र-
द्युतियुत जय जय ॥ अनघ अनंत जिनेश्वर जय जय । घनकर्माटवीपावक जय जय ॥ ७ ॥
धर्मजिनेश्वर निर्मल जय जय । धर्माचलनिभनिश्चल जय जय ॥ शांतिजिनेश्वर शाश्वत जय
जय । संततबोधाकरनुत जय जय ॥ ८ ॥ सुललित कुंथुजिनेश्वर जय जय । जलजनाभसुत-
जित जिन जय जय ॥ अरजिन सद्वृत्तधारक जय जय । परमश्रीकुचकुंकुम जय जय ॥ ९ ॥
मल्लिजिनेश्वर वल्लभ जय जय । सल्लालितोन्नत वंदित जय जय ॥ मुनिसुव्रत जिनकुंजर जय
जय । मुनिवृंदारकवंदित जय जय ॥ १० ॥ नमितसुरेश्वर नमिजिन जय जय । क्रमकल्याणसु-
पंचक जय जय ॥ सुरविरचित नेमीश्वर जय जय । हरिवंशांबुधिहिमकर जय जय ॥ ११ ॥
श्रीमत् पार्श्व जिनाधिप जय जय । काममदंभमदभंजन जय जय ॥ वर्धमान जिननाथ जय
जय । सद्धर्मप्रतिपालक जय जय ॥ १२ ॥ जय नाथ जय जिनेश्वर जय जय कंदर्पदर्परिपुकुल-
मथन । जय नष्टघातिकर्मक जय जय देवेंद्रवृंदवंदितचरण ॥ अर्घ्यं ॥

## ॥ अथ सिद्धपूजा ॥

ऊर्ध्वाधो रयुतं सबिंदु सपरं ब्रह्मस्वरावेष्टितं । वर्गापूरितदिग्गतांबुजदलं तत्संधितत्वान्वितं ॥ अंतः-
पत्रतटेष्वनाहतयुतं ह्रींकारसंवेष्टितं । देवं ध्यायति यः स मुक्तिसुभगो वैरीभकंठीरवः ॥ १ ॥

ॐ ह्रीं सिद्धपरमेष्ठिन् अत्र अवतरावतर संवौषट् स्वाहा । ॐ ह्रीं सिद्ध० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ह्रीं सिद्ध० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ शुद्धैः शुद्धापगानीतैस्तोयैस्तापहरैर्वरैः । सिद्धचक्रमहं भक्त्या पूजयाम्यमृतश्रियै ॥ ॐ ह्रीं अर्हं अनाहतविद्याय असिआउसा श्रीसिद्धाधिपतये नमः ॥ जलं निर्वपामि स्वाहा ॥ १ ॥ काश्मीरागरुसंजातैर्गंधैरिंदुमनोहरैः । सिद्धच० ॥ ॐ ह्रीं० ॥ गंधं ॥ २ ॥ कुंदेंदुवरसंकाशैरक्षतैः कलमाक्षतैः । सिद्धच० ॥ ॐ ह्रीं० ॥ अक्षतान् ॥ ३ ॥ मालतीवरपद्मानां पुष्पैरलिकुलावृतैः । सिद्धच० ॥ ॐ ह्रीं० ॥ पुष्पं ॥ ४ ॥ चरुभिर्दधिस्वच्छाच्छक्षीरभक्ष्यादिसंयुतैः । सिद्धच० ॥ ॐ ह्रीं० ॥ चरुं ॥ ५ ॥ रत्नदीपसमाकारैर्दीपैः कर्पूरकल्पितैः । सिद्धच० ॥ ॐ ह्रीं० ॥ दीपं ॥ ६ ॥ लोहेंदुवरसंकाशैर्धूपैः स्वर्गिमनोहरैः । सिद्धच० ॥ ॐ ह्रीं० ॥ धूपं ॥ ७ ॥ रुचकक्रमुकादीनां फलैः पक्वैर्मनोहरैः । सिद्धच० ॥ ॐ ह्रीं० ॥ फलं ॥ ८ ॥ शीतैर्जलैः कुंकुमयुक्तगंधैः श्वेताक्षतौघैः प्रमत्तैर्नैवेद्यैः । दीपैः सुधूपैः कदलीफलौघैः श्रीसिद्धचक्रं परिपूजयामि ॥ अर्घ्यं ॥ इत्येवं सिद्धचक्रस्य पूजामष्टगुणान्वितां । सुगंधद्रव्ययुक्तेन शांतिधारां करोम्यहं ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

त्रैलोक्येश्वरवंदनीयचरणान् प्रापुः श्रियं शाश्वतीं यानाराध्य निरुध्दचंडमनसः संतोऽपि तीर्थंकरान् । सत्सम्यक्त्वविबोधवीर्यविशदाव्याबाधिताद्यैर्गुणैर्युक्तांस्तानिह तोष्टवीमि सततं सिध्दान् विशुध्दोदयान् ॥ १ ॥ विराग सनातन शांत निरंस । निरामय निर्भय निर्मल हंस ॥ सुधाम विबोधनिदान विमोह । प्रसीद विशुध्द सुसिध्दसमूह ॥ १ ॥ विदूरितसंसृतिभाव निरंग । सदामृतपूरित देव विसंग ॥ अबंध कषायविहीन विमोह । प्रसीद० ॥ २ ॥ निवारितदुष्करकर्मविपाश । सदामलकेवलकेलिनिवास ॥ भवोदधिपारग शांत विमोह । प्रसीद० ॥ ३ ॥ अनंतसुखामृतसागर धीर । कलंकरजोभरभूरिसमीर ॥ विखंडितकाम विराम विमोह । प्रसीद० ॥ ४ ॥ विकारविवर्जित तर्जितशोक । विबोधसुनेत्रविलोकितलोक ॥ विहार विरंग विराग विमोह । प्रसीद० ॥ ५ ॥ रजोमलखेदविमुक्त विगात्र । निरंतरनित्यसुखामृतपात्र ॥ सुदर्शनराजित नाथ विमोह । प्रसीद० ॥ ६ ॥ नरामरवंदित निर्मलभाव । अनंतमुनीश्वरपूजितपाद ॥ सदोदय विश्वमहेश विमोह । प्रसीद० ॥ ७ ॥ विडंब वितृष्ण विदोष विनिद्र । परापरशंकर सार वितंद्र ॥ विकोप विरूप विशंक विमोह । प्रसीद० ॥ ८ ॥ जरामरणोझ्झित वीतविहार । विचिंतित निर्मल निरहंकार ॥ अचिंत्यचरित्र विदर्प विमोह । प्रसीद विशुध्द सुसिद्धसमूह ॥ ९ ॥

विवर्ण विगंध विमान विक्षोभ । विमाय विकाय विशब्द विशोभ ॥ अनाकुल केवलसर्व-विमोह । प्रसीद० ॥ १० ॥ घत्ता ॥ असमयसमसारं चारुचैतन्यचिन्हं । परपरिणतिमुक्तं पद्मनंदीन्द्रवंद्यं ॥ निखिलगुणनिकेतं सिध्दचक्रं विशुद्धं । स्मरति नमति यो वा स्तौति सोऽभ्येति मुक्ति ॥ अर्घ्यं ॥

## ॥ अथ कलिकुंडपूजा ॥

सिद्धं विशुद्धं महिमानवेशं दुष्टाग्निमारीग्रहदोषनाशं । सर्वेषु योगेषु परं प्रधानं संस्थापये श्रीकलिकुंडयंत्रं ॥ १ ॥ ॐ ऱ्हीं कलिकुंडदंड चंडोग्र पार्श्वनाथ अत्र अवतरावतर संवौषट् स्वाहा । ॐ ऱ्हीं कलि० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ऱ्हीं कलि० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ गंगापगातीर्थसुनीरपूरैः शीतैः सुगंधैर्घनसारमिश्रैः । दुष्टोपसर्गैकविनाशहेतु समर्चये श्रीकलिकुंडयंत्रं ॥ ॐ ऱ्हीं कलिकुंडदंडचंडोग्रपार्श्वनाथाय नमः । जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीचंदनैर्गंधविलुब्धभृंगैः सर्वोत्तमैर्गंधविलासयुक्तैः । दुष्टोप० ॥ ॐ ऱ्हीं क० ॥ गंधं ॥ २ ॥ चंद्रावदातैः सरलैः सुगंधैरनिंद्यपात्रैर्वरशालिपुंजैः । दुष्टोप० ॥ ॐ ऱ्हीं क० ॥ अक्षतान् ॥ ३ ॥ मंदारजातीबकुलादिकुंदैः सौरभ्यरम्यैः शतपत्रपुष्पैः । दुष्टोप० ॥ ॐ ऱ्हीं क० ॥ पुष्पं ॥ ४ ॥ बाष्पायमानैर्घृतपूरपूरैर्नानाविधैः पात्रगतैरमाद्यैः । दुष्टोप० ॥

 

ॐ ह्रीं क० ॥ चरुं ॥ ५ ॥ विश्वावकाशैः कनकावदातैर्दीपैश्च कर्पूरमयैर्विलासैः । दुष्टोप० ॥ ॐ ह्रीं क० ॥ दीपं ॥ ६ ॥ कर्पूरकृष्णागुरुचंदनाद्यैर्धूपैः सुधूम्रैर्वरद्रव्ययुक्तैः । दुष्टोप० ॥ ॐ ह्रीं क० ॥ धूपं ॥ ७ ॥ खर्जूरराजादननालिकेरैराम्रैः फलैर्मोक्षफलाभिलाषैः । दुष्टोप० ॥ ॐ ह्रीं क० ॥ फलं ॥ ८ ॥ जलचंदनविशदाक्षतलतांतचरुदीपधूपफलनिवहैः । श्रीकलिकुंडाय वरं ददे पुष्पांजलिं विमलं ॥ अर्घ्यं ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

प्रोद्यत्सन्मणिनागनाथकफणाटोपोल्लसन्मंडपं । सद्भक्त्या नमदिंद्रमौलिमणिभिर्भास्वत्पदांभोरुहं ॥ प्रोन्नीलं नवनीरदालिपटलीशंकासमुत्पादकं । ध्याये श्रीकलिकुंडदंडविलसत्खंडाग्रपार्श्वप्रभुं ॥ १ ॥ सुसिद्ध विशुद्ध विबोधनिदान । विकासितविश्वविवेकनिदान ॥ विडंबितकाम जगज्जयचंड । सदा सदयोदय जय कलिकुंड ॥ १ ॥ पयोधिपयोधरधीरनिनाद । निराकृतनिर्मितदुर्मतवाद ॥ असत्यपथैकपतत्पविदंड । सदा स० ॥ निराकुल निर्मल शील निरीश । निराश निरंजन जिनवरसिंह । विपाटितदुष्टमदद्विपगंड । सदा स० ॥ ३ ॥ कषायचतुष्टयकाष्ठकुठार । निरामय नित्य निरामयसार ॥ विदीर्णघनाघनविघ्नकरंड । सदा सदयोदय जय कलिकुंड ॥ ४ ॥ अनल्पविकल्प विनीलविकल्प । विशल्य विशून्य विदर्प विसर्प ॥ विराग विभोग विखंड विमुंड । सदा

स० ॥ ५ ॥ फणेश नरेश सुरेश महेश। दिनेश शुभेश गुणेश गणेश ॥ चिदर्कविकासितशतदल-तुंड। सदा म० ॥ ६ ॥ विशोक विशंक विमुक्तकलंक। विकामित विश्वविदूरितपंक ॥ कलाकुल केवलचिन्मयपिंड। सदा म० ॥ ७ ॥ विखंडितमोहमहीरुहखंड। वरप्रद संपद संपदमुंड ॥ त्रिदंडविखंडितमाय विखंड। सदा स० ॥ घत्ता ॥ ८ ॥ कलिलमथनदक्षं योगियोगोपदक्षं। द्यविकल्लकलिकुंडं दंडपार्श्वप्रचंडं ॥ शिवसुखशुभसंपद्वासवल्लीवसंतं। प्रतिदिनमहमीडे वर्धमान-द्धिसिद्ध्यै ॥ अर्घ्यं ॥

## ॥ अथ रत्नत्रयपूजा ॥

भक्त्यांजसा वा व्यवहारतो वा युक्तो निजात्माऽपिच येन वार्तः। सद्दर्शनज्ञानचारित्ररूपं रत्न-त्रयं तत्प्रति कल्पयेऽर्घ्यं ॥ १ ॥ ॐ ह्रीं व्यवहारनिश्चयरत्नत्रय अत्र अवतरावतर संवौषट् स्वाहा। ॐ ह्रीं व्य० अत्र तिष्ठ २ ठठ स्वाहा। ॐ ह्रीं व्य० अत्र मम सन्निहितं भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ स्वर्धुनीनीरधाराभिर्गंधसाराभिरादरात्। द्विधासद्दर्श-नज्ञानचारित्राण्यर्चयाम्यहं ॥ ॐ ह्रीं व्यवहारनिश्चयरत्नत्रयाय जलं निर्वपामि स्वाहा ॥ १ ॥ हरिचंदननिर्यासैर्दिग्वासैः कासहारिभिः। द्विधा० ॥ ॐ ह्रीं व्य० ॥ गंधं ॥ २ ॥ तंदुलैः पांडुराखंडैः पुंजितैः रलिगुंजितैः। द्विधा० ॥ ॐ ह्रीं व्य० ॥ अक्षतान् ॥ ३ ॥ प्रसूनैः सौर-

भानूनैर्नूनैर्दृनदुर्लभैः । द्विधा० ॥ ॐ ह्रीं व्य० ॥ पुष्पं ॥ ४ ॥ साम्नायैर्स्तर्जिताम्नायैर्निकायैर्गुणसंपदां । द्विधा० ॥ ॐ ह्रीं व्य० ॥ चरुं ॥ ५ ॥ प्रदीपैर्दीपिकाशेषदिक्चक्रनयनप्रियैः । द्विधा० ॥ ॐ ह्रीं व्य० ॥ दीपं ॥ ६ ॥ धूपनैर्धूमधूताभ्रविभ्रमैर्भ्रमरभ्रमैः । द्विधा० ॥ ॐ ह्रीं व्य० ॥ धूपं ॥ ७ ॥ फलभेदैरसम्पर्शगंधवर्णादिसंभवैः । द्विधा० ॥ ॐ ह्रीं व्य० ॥ फलं ॥ ८ ॥ अर्घ्येणाऽर्घ्याबुदूर्वादिद्रव्यसर्वस्वहारिणा द्विधा० ॥ ॐ ह्रीं व्य० ॥ अर्घ्यं ॥ ९ ॥ इत्यर्चयंति ये भेदाभेदरत्नत्रयं सदा । ते शिवाः सादरं मुक्तिश्रियो विंदंति निर्वृतिम् ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥

## ॥ अथ जयमाला ॥

इह चरित्त पवित्तउ बहुगुणजुउ । अघ्घउत्तरगिय वरकरउ ॥ तिविपयाहि णादिविणुभाबधरिंपिणु । वरचणहु अरगायिट्ठाणहु ॥ णिच्चयदंसणबोधचरित्तं । मोक्खपथैकसुदंसिदमग्गं ॥ भव्वजणीविरचय्यमहघ्घं । संपयजे परमोत्सवजुत्तं ॥ १ ॥ महघ्घ करे विधरेवि महंतु । सुकाहळातुरहभेरिय हंतु ॥ सुरचर मंगळ चारु भणंति । सुणारय तुंबर गीय कुणंति ॥ २ ॥ तिळोत्तम उव्वसी रंभ णडंति । सुरिंद णरिंद फणिंद थुवंति ॥ सुमालयिकुंदकयंबसुमिंदु । लवंगणिवाळियचंपयरिंदु ॥ ३ ॥ सुकेयुरकंकणयारुमयारु । रुहेडीयपाडळजूयीयसारु ॥ आसोहीयवंतीय पारीयजाय ।

सुवल्लासेवंतिखुज्जयणाय ॥ सुपांहुमाहंमिरिपदजा सुमणेहिं । सुउच्चलियउ अघ दुहेहि घणेहि ॥ घत्ता ॥ इह कुसुमसमिदउ वरचउरिंदउ । कणयथालु सुरवर धरियो । पकुर्पिपयासिउ अळियण-भासिउ । त्रिवहरमिध्दिहि परियरिउ ॥ अर्घ्यं ॥

## ॥ अथ श्रुतपूजा ॥

स्याद्वादकल्पतरुमूलविराजमानां । रत्नत्रयांबुजमरोवरराजहंसीं ॥ अंगप्रकीर्णकचतुर्दशपूर्वकाया-माहंत्यसद्गुणमयीं गिरमाह्वयामि ॥ १ ॥ ॐ र्‍हीं शारदादेवि अत्र अवतरावतर संवौषट् स्वाहा । ॐ र्‍हीं शा० अत्र तिष्ठ २ ठठ स्वाहा । ॐ र्‍हीं शा० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ श्रीमदपुनर्भवश्रीकरतलधारापुरःसरैर्नीरैः । परिमलितदिक्-तटांतैः परमागमभारतीं चार्चे ॥ ॐ र्‍हीं शब्दब्रह्ममुखोत्पन्नश्रुतशारदादेव्यै जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीमन्निवृतिरमणीतिलकीभूतैश्चंदनक्षोदैः । परि० ॥ ॐ र्‍हीं शब्द० ॥ गंधं ॥ २ ॥ श्रीमन्मुक्तरमृढाकरतलधारार्पितैः मदकैः । परि० ॥ ॐ र्‍हीं शब्द० ॥ अक्षतान् ॥ ३ ॥ श्रीमद-पवर्गलक्ष्म्या जिनवरितैः प्रकल्पितैर्माल्यैः । परि० ॥ ॐ र्‍हीं शब्द० ॥ पुष्पं ॥ ४ ॥ श्रीमदमृ-तांगनाया हद्यैरमृतोपमैर्हव्यैः । परि० ॥ ॐ र्‍हीं शब्द० ॥ चरुं ॥ ५ ॥ श्रीमत्सिद्धरमायाः कल्याणविबोधितैर्दीपैः । परि० ॥ ॐ र्‍हीं शब्द० ॥ दीपं ॥ ६ ॥ श्रीमदजरामरश्रीवाससंवासितै-

धूपैः परि० ॥ ॐ ह्रीं शब्द० ॥ धूपं ॥ ७ ॥ श्रीमदनंतचतुष्टयफलैः फलैः स्वर्णपरिपाकैः । परि० ॥ ॐ ह्रीं शब्द० ॥ फलं ॥ ८ ॥ नीरादिवस्तूत्करनिर्मितेन चार्घ्येण भक्त्याऽऽगम तेऽभिसिद्ध्यै । वाग्वादिनीं जैनमुखप्रजातां प्रार्चामि लोकत्रयसेव्यमानां ॥ अर्घ्यं ॥ इत्यमीभिः समाराध्य पूजाद्रव्यैः श्रुतं वरं । भवसंतापविच्छेदं शांतिधारां करोम्यहं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

श्रीजिनवरवाणी अमियसुवाणी । गंभीरमधुरसुवाणीया ॥ समदुखविरहिता बहुगुणसहिता । मनोहररळिया वाणीया ॥ १ ॥ सुकंठविओष्ठविरहितसुचंगा । सुअंगविपूर्वकसहितविभंगा ॥ सुसुमतिपूर्वकसुज्ञानविशाळा । ते पूजो जिनवाणी गुणमाळा ॥ १ ॥ सुएक अनेक प्रदेशसुखाणी । सुदुरीय सम सम सुनयसुजाणी ॥ सुशीतळपण ससिकळ सुविशाळा । ते पू० ॥ २ ॥ सुतत्वप्रकाशनदीपहतेजा । सुपढता भवियण उपदेशहेजा ॥ सुमिथ्यात्वतिमिर फेडनसुविशाळा । ते पू० ॥ ३ ॥ सुपरब्रह्ममुखकमळायोतपन्ना । सुबारह अंगतहितसुचंगा ॥ सुसरस्वती वाग्देवी सुवीयशाळा । ते पू० ॥ ४ ॥ सुपहिलो आचारंग विजाणी । सुदूजो सूत्रकृत वखाणी ॥ सुतीजो स्थानंग सुवीयशाळा । ते पू० ॥ ५ ॥ सुचवथो समवायंग सुचंगा । सुपंचमो व्याख्याप्रज्ञामियभंगा सुछट्टो ज्ञातृकथा सुविशाळा । ते पू० ॥ ६ ॥ सुसातमो उपवासक

गुणवंता । सुआटमो अंतकृत जयवंता ॥ सुनवमो अनुत्रयअंग विशाळा । ते पू० ॥ ७ ॥ सुदशमो प्रश्नव्याकरण विचंगा । सुग्यारमो विपाकसुत्र उत्तुंगा ॥ सुबारमो दृष्टिवाद सुविशाळा । ते पू० ॥ ८ ॥ सुजिनवरमुखकमळायोत्पन्ना । सुद्वादशअंगश्रुत निःपन्ना ॥ सुगणधरग्रंथित ज्ञानविशाळा । ते पू० ॥ ९ ॥ सुमुनिवरविस्तारित गुणवंता । सुत्रिभुवनमहिमाजित जयवंता । सुभारती सारद गुणहविशाळा । ते पू० ॥ १० ॥ सुभवियणवंदित त्रिभुवनतारा । सुजिनशासनशोभित सिनगारा ॥ सुरेंद्रनरेंद्रसेवित सुविशाळा । ते पू० ॥ ११ ॥ घत्ता ॥ अज्ञानतिमिरहरो सुज्ञानदिवाकरो । पढी गणी जे भावधरी ॥ ब्रह्मजिनदास भाषे विबुधप्रकासे । मनवांछितफलबुद्धि घणी ॥ अर्घ्यं ॥

## ॥ अथ गुरुपूजा ॥

समनःपर्ययज्ञानश्रुतसागरपारगान् । आचार्यत्रयस्वामीनां पंचाचारपरायणान् ॥ ॐ ऱ्हीं नमः गणधर अत्र अवतरावतर संवौषट् । ॐ ऱ्हीं नमः ग० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ऱ्हीं नमः ग० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ श्रीशातकुंभोत्तमकुंभपूर्णैरंभोभिरुच्चैः सुमनैः सुगंधैः । वर्तस्यमानानिह वर्तमानान् वृत्तान् यजे श्रीनवकोटिसाधून् ॥ ॐ ऱ्हीं नमः गणधराय जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीगंधसारैरिव साधुवर्गैरशांबरामोदिभि-

रिंदुमिश्रैः ॥ वर्त० ॥ ॐ ह्रीं नमः ग० ॥ गंधं ॥ २ ॥ रत्नत्रयेणेव सतां सितेन पुंजत्रयेणाक्षतमत्तमेन । वर्त० ॥ ॐ ह्रीं नमः गणधराय ॥ अक्षतान् ॥ ३ ॥ इंदिंदिराऽऽलिंगितनव्यपुष्पैः संस्तूयमानैरिव साधुवर्गैः । वर्त० ॥ ॐ ह्रीं नमः ग० ॥ पुष्पं ॥ ४ ॥ आत्मानमाल्हादयितेन शुक्लध्यानेन तेषां चरुणा वरेण । वर्त० ॥ ॐ ह्रीं नमः ग० ॥ चरुं ॥ ५ ॥ ज्ञानप्रदीपैरिव सन्मुनीनां मनोहरर्द्धिर्मणिदीपवृंदैः । वर्त० ॥ ॐ ह्रीं नमः ग० ॥ दीपं ॥ ६ ॥ आमोदिताशैरिव संयतानां गुणैः सुकालागरुधूपधूमैः । वर्त० ॥ ॐ ह्रीं नमः ग० ॥ धूपं ॥ ७ ॥ फलैरुदर्कैरिव साम्ययाऽक्षैरानंदनैश्चोचरसालमुख्यैः । वर्त० ॥ ॐ ह्रीं नमः ग० ॥ फलं ॥ ८ ॥ श्रीहेमपात्रे निहितेन भास्वदर्घ्येण वारादिकस्वास्तिकेन । वर्त० ॥ ॐ ह्रीं नमः ग० अर्घ्यं ॥ ९ ॥ गुरुभक्त्या वयं सार्धद्वीपद्वितयवर्तिनः । वंदामहे त्रिसंख्योननवकोटिमुनीश्वरान् ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥

## ॥ अथ जयमाला ॥

सकल मुनीश्वर नमितसुरासुर । अनुदिन चरणकमल नमो ॥ तस्म परसादे मन आल्हादे । स्तवन करी बहुदुःख गमो ॥ १ ॥ सुएक आतमध्यानसहित नमो । दुइ रागद्वेष परिहरित नमो ॥ तीनि रयणमंडितवरकाय नमो । चउकषायरहित वरपाय नमो ॥ २ ॥ पंचाचार-

विचार नमो पंचाश्रवआश्रवरहित नमो ॥ पंचेंद्रियशोषितगात्र नमो ॥ पंचमगतिसाधित तात नमो ॥ ३ ॥ षट्कायदयाकर वीर नमो । षड्द्रव्यप्रकाशन धीर नमो ॥ षट्षड्मनचिंतित देव नमो । षट्काल वखाणित सेव नमो ॥ ४ ॥ भय सात रहित गुणवंत नमो । गुणस्थान सात जयवंत नमो ॥ आठ ध्यानमहित मुनिकाय नमो । आठ मदरहित यतिपाय नमो ॥ ५ ॥ नव नयकलित गंभीर नमो । नवविध शील पालीत नमो ॥ दशलक्षणधर्म प्रकाश नमो । दशाधर्मध्यान आवास नमो ॥ ६ ॥ दहएक पडिम उपदेश नमो । दहदूविध तपस्वी ईश नमो ॥ दहतीनि चरण पालीत नमो । दहचारी मल टाळीत नमो ॥ ७ ॥ दह पंच प्रमाद विरहित नमो । दहषट् परिभावनसहित नमो ॥ दहसात संयम गुणवंत नमो । दह आठ दोष दुरिकरण नमो ॥ ८ ॥ दह आठ सहस्र शील चरण नमो । दह नव मासक जीव हरण नमो ॥ दह दह वर मार्गण कथित नमो । दह दह एक चतुर्गुणलक्ष नमो ॥ ९ ॥ दहदहदू परीसह सहन नमो । दह दह तीनि स्थानकलीत नमो ॥ दह दह चतुर्जिनवर-पाय नमो । दह दह पण भावन भावीन नमो ॥ १० ॥ इह गुण अधिगुणवंत नमो । निर्ग्रंथ मुनी जयवंत नमो ॥ गणधर यतिवरपाय नमो । मन वचन सफल करु काय नमो ॥ ११ ॥ तिहुयणजनपूजीत चरण नमो । तिहुयण भवियण उध्दरण नमो ॥ ते तरण

तारण भवतरंड नमो । करुणारससमकरंड नमो ॥ १२ ॥ धर्म शुक्लध्यान धरण नमो । गुण-स्थानश्रेणिआरूढ नमो ॥ श्रीकेवलज्ञान उद्योत नमो । श्रीमुक्तिरमणिवरकांत नमो ॥ घत्ता ॥ श्रीमुनीश्वर स्वामी नमू शिर नामी । दोई कर जोडी विनय करू ॥ दीक्षा अति निर्मली देउ मज उज्वळी । ब्रह्मजिनदास भणे कृपा करी ॥ अर्घ्यं ॥ इति पंचपूजा समाप्त ॥

## ॥ अथ नवदेवताविधानं ॥

अथाधिवास्य चिद्रूपामित्यादि विधिना परं । ब्रह्मार्हदादिधर्मं च मध्यमंडलमर्चये ॥ १ ॥ इति पठित्वा यंत्रोपरि पुष्पांजलिं क्षिपेत् ॥ निर्ग्रंथार्याः प्रमादं कुरुत पदमिहादत्त सध्दर्मदीप्त्यै । देवाः सर्वेऽप्युतांना विकुरुत सुमनोः क्ष्मामिमामेव शांत्यै ॥ क्षिप्त्वा कर्मारिचक्रं किमपि तदशमं स्फूर्जदावर्जतेजाः । सो ध्यायं शासदीशस्त्रिजगदिह परं स्थाप्यतेऽनुग्रहे तु ॥ प्रभावकसिंहसान्निध्यविधानाय समंतात्पुष्पाक्षतं क्षिपेत् ॥ २ ॥ एते त्वर्पत्विहाशीरमृतममृषिगणाः साधु हुत्वाऽभिराध्या । विश्वे देवाश्च शाम्यं वृजिनपरिजनान् घ्नंतु विघ्नानि ह्येते ॥ स्थानस्था एव चैनं महसुरमुनयस्तेऽहमिंद्राः स्तुवंतः । श्रध्दत्वार्यो महाऽयं जिनयजनविधौ प्रस्तुवे दिव्यसिध्दान् ॥ ३ ॥ त्रिभुवनसाधर्मिकाद्योपणाय समंतात् कुंकुमाक्तपुष्पाक्षतं क्षिपेत् ॥ दृक्शुध्याादिसमिध्दशक्तिपरमब्रह्मप्रकाशोद्धुरं । शब्दब्रह्मशरीरमीश्विपदं तन्मूलमंत्रादिभिः ॥ इंद्राद्यैरभिराध्यते तदभितो दीप्ताभिमु-

क्षमासने । न्यस्याऽर्चामि मुभक्तिमुक्तिदमहं ब्रह्मार्हमित्यक्षरं ॥ ४ ॥ शब्दब्रह्मार्चनाय कर्णिकामध्ये पुष्पांजलिं क्षिपेत् ॥ चिद्रूपं विश्वरूपं व्यतिकलितमनाद्यंतमानंदसांद्रं । यत्प्राप्तैस्तैस्त्रिवर्त्तैर्व्यहरद-धिपते दुःखसौख्याभिमानैः ॥ कर्मौघैकात्तदात्मप्रतिघमलभिदोद्भिन्ननिःसीमतेजः । प्रत्यासीदत्प-रौजःस्फुरदिह परमब्रह्मयज्ञार्हमर्हं ॥ ५ ॥ ॐ ह्रीं परमब्रह्मयज्ञप्रतिज्ञापनाय कर्णिकांतः कुसुमांजलिं क्षिपेत् ॥ स्वामिन् संवौषट्कृताह्वाननस्य ॥ द्विष्ठांतेनोट्टंकितस्थापनस्य ॥ स्वाहानिर्णीते वषट्का-रजाग्रे सान्निध्यस्य प्राग्भे ह्यष्टधेष्टिं ॥ ६ ॥ मलयरुहलुलिततंडुलपुष्पैरधिवासनं जिनेंद्रस्य । संवौ-षट् ठठ वषडिति पल्लवमंत्रैस्त्रिकरणैः कुर्वे ॥ ७ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अर्हत्सिद्धाचार्योपा-ध्यायसर्वसाधुजिनधर्मजिनागमजिनचैत्यचैत्यालयाश्च नवदेवता अत्र अवतरतावतरत संवौषट् स्वाहा । अनेन गंधपुष्पाक्षतान्वितपाणिपात्रेण पुष्पांजलिं प्रयुंजयेत् ॥ आह्वानं ॥ ॐ० अर्हं० अत्र तिष्ठत ठठ स्वाहा । अनेन तद्वत्प्रतिष्ठापयेत ॥ स्थापनं ॥ ॐ० अर्हं० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । अनेन तद्वत् सान्निधापयेत् ॥ सन्निधीकरणं ॥

## ॥ अथ अष्टकं ॥

गांगेयोज्वलमंगलात्मकमहाभृंगारनालोद्गतैर्गंगाद्युत्तमतीर्थसारसलिलैर्गंधात्तभृंगव्रजैः । चार्येऽहं जिन-सिद्धसूरिविमलान सत्पाठकं साधवं जैनेंद्रोक्तसुधर्ममागममथो चैत्यं च चैत्यालयं ॥ ॐ ह्रीं

अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुजिनधर्मजिनागमजिनचैत्यजिनचैत्यालयनवदेवताभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीगंधर्वरंगावलिंधुरमदोन्मत्तालिभिः स्नापकैः। पूतैः शीतलरश्मिधूलिकलितैः काश्मीरमंमिश्रितैः॥ चार्येऽहं जिनसिद्धसूरिविमलान् सत्पाठकं साधवं। जैनेंद्रोक्तसुधर्ममागममथो चैत्यं च चैत्यालयं ॥ ॐ ह्रीं अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुजिनधर्मजिनागमजिनचैत्यजिनचैत्यालयनवदेवताभ्यो गंधं ॥ २ ॥ श्रीमत्पार्वणशार्वरीशशिकरज्वालोरुलीलाधरैः। पूतैः शीतलरश्मिगंधमधुरैः शाल्यक्षतैश्चर्चितैः॥ चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ अक्षतान ॥ ३ ॥ फुल्लैर्मल्लिमल्लिकाकुवलयश्रीकेतकीजातिकासत्सौगंधकबंधुजीवबकुलैर्मान्यैर्गलिश्लाघ्यकैः। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ पुष्पं ॥ ४ ॥ हव्यैर्नव्यघृतान्वितैर्जनमनःसंव्यंजनैर्व्यंजनैर्भक्ष्यै रक्षसुखप्रदैर्वरसुधामाधुर्यधौर्यायकैः। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ चरुं ॥ ५ ॥ चंद्रार्कद्युतिहार्यतीर्यदुरितध्वांतौघविध्वंसकैः सद्दिव्योत्तमभावशुद्धिसदृशैर्मव्यप्रदीपव्रजैः। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ दीपं ॥ ६ ॥ भद्रश्रीहिमवालुकालविहितैर्धूपैर्रसैः कर्णिकानामत्काम्यकटाक्षसौम्यसुरभिभ्राम्यैः सुधूम्याभरैः। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ धूपं ॥ ७ ॥ सद्योऽभीष्टफलप्रदानमधुरैं स्थानवद्योत्तम–द्राक्षादाडिमजंबुजंभरुचकादीत्यैवर्चोचैः फलैः। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥ फलं ॥ ८ ॥ अर्घ्येणार्घ्यमहामहारजततत्पात्रादिसंरंजितं सिद्धार्थादिसुमंगलार्थवरस्वर्गापवर्गानर्घ्यश्रियैं। चार्येऽहं० ॥ ॐ ह्रीं अर्हं० ॥

अर्घ्यं ॥ ९ ॥ ततो जिनेंद्रपादांते वारिधारां निपातयेत् । भृंगारनालिकोद्भूतां विनमल्लोकशांतये ॥ शांतिधारां ॥ १० ॥ देवेंद्रवृंदमणिमौलिसमर्चितांघ्रिर्देवाधिदेवपरमेश्वरकीर्तिभाजः । पुष्पायुधप्रमथनस्य जिनेश्वरस्य पुष्पांजलिं विरचितोऽस्तु विनयशांत्यै ॥ पुष्पांजलिः ॥

## ॥ अथ प्रत्येकपूजा ॥

सिंध्वादिनदिसत्तीर्थादानीतैर्विमलैर्जलैः । श्रीजिनेंद्रांघ्रिपंकजद्वंद्वमर्चेऽघमुक्तये ॥ ॐ ह्रीं अर्हं नमः परमेष्ठिने ॥ जलं निर्वपामि स्वाहा ॥ १ ॥ चंद्रचंदनकालादिगंधद्रव्योत्थगंधकैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ गंधं ॥ २ ॥ अक्षतैरक्षतैरंगैर्लक्ष्मीलक्षणलक्षितैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ अक्षतान् ॥ ३ ॥ गंधलुब्धादिसंगीतैस्तुगपद्मादिपुष्पकैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ पुष्पं ॥ ४ ॥ हव्यैर्नव्यांशुभक्ष्यसारदुग्धादिसंयुतैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ चरुं ॥ ५ ॥ सत्सोमदीपसंदोहैरपवर्गसुखप्रदैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ दीपं ॥ ६ ॥ धूपैः श्रीखंडकर्पूरकाश्मीरागरुमुख्यकैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ धूपं ॥ ७ ॥ जंबूजंबीरकाम्राम्रचोचमोचाम्रगत्फलैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ फलं ॥ ८ ॥ अर्घ्यैरनर्घ्यपात्रस्थैर्नीरगंधादिनिर्मितैः । श्रीजिनें० ॥ ॐ ह्रीं० ॥ अर्घ्यं ॥ एवं जिनेंद्रमभ्यर्च्य सुरसंदोहपूजितं । वार्धारा नु जगच्छांत्यै श्रीपीठाग्रे कृताऽर्हतः ॥ शांतिधारां ॥ देवेंद्रवृंदमणिमौलिसमर्चितांघ्रिर्देवाधिदेवपरमेश्वरकीर्तिभाजः । पुष्पायुधप्रमथनस्य जिनेश्वरस्य पुष्पांजलिर्विरचितोऽस्तु विनयशांत्यै ॥ पुष्पांजलिः ॥

## ॥ अथ सिद्धार्चनं ॥



स्वाहतैः परमपावनतीर्थवारिभिर्विधुरजःपरमिश्रैः । सिद्धमष्टगुणयुक्तमनंतं पूजयामि वरनिर्वृतिसिध्यै ॥ ॐ ह्रीं सिद्धपरमेष्ठिने जलं निर्वपामि स्वाहा ॥ जॉगकंदुहरिचंदनधीरद्रव्यजैः श्रमहरैर्वरगंधैः । सिद्ध० ॐ ह्रीं सि० ॥ गंधं ॥ इंदुकुंदवरमुक्तिसुहारैः श्वेतकैः कलमतंडुलपुंजैः । सिद्ध० ॥ ॐ ह्रीं सि० ॥ अक्षतान ॥ ३ ॥ चंपकाब्जबकुलोत्पलजातीमल्लिकाकुरवकादिलतांतैः । सिद्ध० ॥ ॐ ह्रीं सि० ॥ पुष्पं ॥ ४ ॥ भक्ष्यभक्तघृतपायसपूर्वैर्हेमभाजनगतैश्चरुभिश्च । सिद्ध० ॥ ॐ ह्रीं सि० ॥ चरुं ॥ ५ ॥ भव्यकिल्बिषतमश्चयनाशैरंगिमोक्षसुखदैर्विधुदीपैः । सिद्ध० ॥ ॐ ह्रीं सि० ॥ दीपं ॥ ६ ॥ लोहपीतनमिताभ्रसुरम्यैश्चंदनादिजदशांगसुधूपैः । सिद्ध० ॥ ॐ ह्रीं सि० ॥ धूपं ॥ ७ ॥ नालिकेरकदळीफलपूराम्रादिजैः फलकुलैः परिपक्वैः । सिद्ध० ॥ ॐ ह्रीं सि० ॥ फलं ॥ ८ ॥ वार्गंधतंडुलममुद्गमहव्यदीपधूपप्रकृष्टफलनिर्मितमेतदर्घ्यं । संप्रस्तुतं रुचिरकांचनजातपात्रे सिद्धाय सिद्धसुखदाय मुदा ददेऽहं ॥ अर्घ्यं ॥ ९ ॥ श्रीखंडसोमांघ्रिविभूतिधूलीसंवासितैस्तीर्थजलैः प्रकुर्वे । सच्छांतिधारात्रयमग्रतोऽस्य श्रीसिद्धलोकत्रयसर्वशांत्यै ॥ शांतिधारां ॥ १० ॥ परिमलमयकुंदेंदूवरांभोजमुख्यै । रलिकुलनिनदैः पुष्पांजलिं सत्प्रसूनैः ॥ निखिलसुजननापव्यापसंहारिणोऽग्रे । निरुपमगुणवार्द्धेः सिद्धनाथस्य कुर्वे ॥ पुष्पांजलिः ॥ ११ ॥

## ॥ अथ आचार्यार्चनं ॥

सद्वासिकामोदकृनंदुमिश्रैस्तोयैरधश्यामहरैः पवित्रैः । चार्ये मनःपर्ययबोधयुक्तं श्रीधर्मसूरिं श्रुतपारगं तं ॥ ॐ ह्रूँ आचार्यपरमेष्ठिने जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडकर्पूरसुजोंगकादिद्रव्योत्थगंधैर्विधुभानुशीतैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ गंधं ॥ २ ॥ सद्धर्मपुंजैरिव सौख्यदानैरजस्रगौरैर्वरतंडुलौघैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ अक्षतान् ॥ ३ ॥ बंदूकमंदारमहोत्पलादिपुष्पोत्करैर्भृंगसमूहनादैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ पुष्पं ॥ ४ ॥ सामोदबाष्पान्वितशालिभक्तापूपाज्यदुग्धादियुतैः सुहव्यैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ चरुं ॥ ५ ॥ दीपैर्जगत्पापतमोविनाशैः सत्कांचनारित्रसमादिरूपैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ दीपं ॥ ६ ॥ सद्योत्पन्नेंदूत्तमधीरलोहश्रीचंदनाद्युद्भवसारधूपैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ धूपं ॥ जंबीरजंबूफलपूरधात्रीरंभाम्रघोंटाम्लफलैः सदिष्टैः । चार्ये० ॥ ॐ ह्रूँ आ० ॥ फलं ॥ ८ ॥ अर्घ्येण सद्भाजनमध्यगेन वार्गंधकाद्यै रचितेन पूतैः । चार्ये मनःपर्ययबोधयुक्तं श्रीधर्मसूरिं श्रुतपारगं तं ॥ ॐ ह्रूँ आचार्यपरमेष्ठिने ॥ अर्घ्यं ॥ ९ ॥ संवासितैर्मंजुसुगंधचूर्णैर्लोकप्रकृष्टामलदिव्यतोयैः । सच्छांतिधारात्रयमातनोमि श्रीधर्मसूर्यंघ्रिमहोत्पलाग्रे ॥ शांतिधारां ॥ १० ॥ सच्चंचरीकावृतमल्लिकाब्जश्रीमालतीकेतकिमुख्यपुष्पैः । पुष्पांजलिं तं प्रकरोमि भक्त्या सूरेः पदाग्रे यतिवंदितांघ्रेः ॥ पुष्पांजलिः ॥ ११ ॥

## ॥ अथ पाठकार्चनं ॥

सुगंधचूर्णवासितैर्विधुश्रितैः सुसज्जलैः । सुपाठकक्रमद्वतः प्रपूजयामि सिद्धये ॥ ॐ ह्रौं उपाध्यायपरमेष्ठिने जलं निर्वपामि स्वाहा ॥ १ ॥ वरेंदुचंदनादिजैः सुरेंद्रवंद्यगंधकैः । सुपा० ॥ ॐ ह्रौं उ० ॥ गंधं ॥ २ ॥ मृगांकभानुपांडुरैर्गतस्तुषैः सदक्षतैः । सुपा० ॥ ॐ ह्रौं उ० ॥ अक्षतान् ॥ ३ ॥ लतांबुजोत्पलादिकैर्लतांतकैः सुसंगमैः । सुपा० ॥ ॐ ह्रौं उ० ॥ पुष्पं ॥ ४ ॥ अपूपभक्तकादिकैर्मनोहरैः सुहव्यकैः । सुपा० ॥ ॐ ह्रौं उ० ॥ चरुं ॥ ५ ॥ हिमसुधेशसंचयैः क्षतैरघतमश्चयं । सुपा० ॥ ॐ ह्रौं उ० ॥ दीपं ॥ ६ ॥ सुरेंदुलोहकादिकैः सुधूपकैः सुधूमकैः । सुपा० ॥ ॐ ह्रौं उ० ॥ धूपं ॥ ७ ॥ मनोऽक्षनासिकाहरै रसालकादिसत्फलैः । सुपा० ॥ ॐ ह्रौं उ० ॥ फलं ॥ ८ ॥ जलगंधादिभिर्द्रव्यैः कृतेनार्घ्येण पावनैः । अंचामि तमुपाध्यायपरमेष्ठिनमिष्टितं ॥ अर्घ्यं ॥ ९ ॥ शांतिं कुर्वंतु जगतां शांतये शांतिधारिणां । उपाध्यायपदस्याग्रे कुर्वे पुष्पांजलिं मुदा ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥

## ॥ अथ सर्वसाध्वर्चनं ॥

श्रीपुण्यतीर्थसलिलैरमृतांशुधूलीसंमिश्रितैर्मुनिमनोभिरिवातिपूतैः । सध्यानमौनयुतमस्तमनोजमानं श्रीसर्वसाधुपरमेष्ठिनमर्चयामि ॥ ॐ ह्रः सर्वसाधुपरमेष्ठिने जलं निर्वपामि स्वाहा ॥१॥ सद्गंधुराग-

कर्पूरकुंकुमयुतश्रीचंदनप्रभृतिगंधवसूत्यगंधः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ गंधं ॥ २ ॥ मुक्ता-फलेंदुकरकैरवकुंदशुभ्रैरक्षीणमोक्षसुखदैरचिताक्षतौघैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ अक्षतान् ॥ ३ ॥ जातीकुरंटकमदुत्पलचंपकाद्यैः पुष्पैर्द्विरेफवरपूरितदिक्समूहैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ पुष्पं ॥ ४ ॥ शाल्यन्नपायसघृतप्रमुखैः सुपक्वैर्हव्यैः सुवर्णकृतमंजुलभाजनस्थैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ चरुं ॥ कर्पूरदीपाविसरैर्जगदक्षरम्यैर्भव्येष्टनाकशिवसौख्यसुदानदक्षैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ दीपं ॥ ६ ॥ श्रीगारसितागरुसिताभ्रसुचंदनादिसद्गंधवस्तुजनितै रमणीयधूपैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ धूपं ॥ ७ ॥ सद्राक्षनारंगफनसदाडिमपूगरंभासन्नालिकेररुचकादिफलैः सुदानैः । सध्या० ॥ ॐ ह्नः सर्वं० ॥ फलं ॥ ८ ॥ पानीयगंधसदकोद्गमहव्यदीपधूपादिभिर्वसुभिरर्घ्यमिदं कृतं तैः । संस्थापितं कनकनिर्मितचारुपात्रे श्रीसाधवेऽमरनताय ददामि तस्मै ॥ अर्घ्यं ॥ ९ ॥ स्वभावनिर्मलजलैः शीतलैश्चंद्रमिश्रितैः । शांतिधारामिमां कुर्वे साधोरग्रे महादरात् ॥ शांतिधारां ॥ १० ॥ सन्मालतीकुरवकांबुरुहादिपुष्पैः सद्गंधलुब्धमधुपावलिरम्यशब्दैः । भक्त्या करोमि कुसुमांजलिमिंद्रवंद्यश्रीसर्वसाधुपरमेष्ठिपदांबुजाग्रे ॥ पुष्पांजलिः ॥

## ॥ अथ जिनधर्मार्चनं ॥

तोयैरशेषतनुभृद्भवतापनाशैस्तीर्थोदकैः सरसिजैः कलितैः सुराच्यैः । दृग्बोधवृत्तमयमंगिदयोरुमूलं श्रीजैनधर्ममनघं महयामि भक्त्या ॥ ॐ ह्रीं जिनधर्माय नमः । जलं निर्वपामि स्वाहा ॥ १ ॥

सद्गंधसारवरबांशिकजानगंधैः सद्गंधभावितसमस्तदिगंतरौघैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ गंधं ॥ २ ॥ संजानमल्लिकलिकाब्जकरावदातैः शाल्यक्षतैः सुकृतपुंजवदिष्टदातैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ अक्षतान् ॥ ३ ॥ श्रीबंधुजीवकलनांबुजकुंदनीलसन्मल्लिकासुमनसादिलतांतमाल्यैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ पुष्पं ॥ ४ ॥ सद्व्यंजनाज्यपरमान्नसदन्नभक्ष्यैः क्षीरादिकैः रुचिकरैश्चरुकैर्मनोज्ञैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ चरुं ॥ ५ ॥ कर्मांधकारभवहारिभिरिंदुदीपव्रातैर्विनेयजनतामलबोधबीजैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ दीपं ॥ ६ ॥ सांतिपिंडकागरुरजादिभरैः सुधूपैः सर्वामराभिमतगंधसुदानदक्षैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ धूपं ॥ ७ ॥ घोंटाम्रकादिकदलीफलपूरधात्रीनारंगतिंदुकसुदानफलप्रदक्षैः । दृग्बो० ॥ ॐ ह्रीं जि० ॥ फलं ॥ ८ ॥ सन्नीरगंधकलमाक्षतचारुपुष्पहव्यादिपूजनसुवस्तुकृतैः सदर्घ्यैः० । दृग्बो० ॥ ॐ ह्रीं जि० ॥ अर्घ्यं ॥ ९ ॥ यस्मात्सुरेंद्रनरपाधिपराज्यलक्ष्मीर्यत्सर्वयोगिनुतबोधजिनेंद्रपद्मा । यस्मात्सुसिद्धिकमला हि भवेन्नराणां तं जैनधर्ममहमादरतः प्रवंदे ॥ शांतिधारां । पुष्पांजलिः ॥ ॥

## ॥ अथ आगमार्चनं ॥

सरोजनामकैरवप्रभृतिपुष्पवासितैः पवित्रपात्रवारिभिः कनककुंभपूरितैः । जिनाननाद्विनिर्गतां गणधरादिसेवितां यजे परमभारतीं सकललोकपूजितां ॥ ॐ ह्रीं जिनागमाय नमः ॥ जलं निर्व-

पामि स्वाहा ॥ १ ॥ मनोज्ञचंद्रचंदनागरुतन्मणा रसैः सुगंधपरिपक्तषट्पदसुगरम्यकैः । जिनान० ॥
ॐ ह्रीं जिनाग० ॥ गंधं ॥ २ ॥ निशापतिमयूखममपांडुरैः सदक्षतैर्मनोज्ञमद्गंधिभिर्ललितकाय-
शोभितैः । जिनान० ॥ ॐ ह्रीं जिनाग० ॥ अक्षतान् ॥ ३ ॥ लतावकुलनीपकुंदसुरभूजपुन्नागक-
प्रसूननिवहैर्जपाकमलजातिचंपकैः । जिना० ॥ ॐ ह्रीं जिनाग० ॥ पुष्पं ॥ ४ ॥ सदाज्यदुग्ध-
दधिभक्ष्यवरशालिभक्तादिकैः सुवर्णमणिभाजनश्रितपवित्रनैवेद्यकैः । जिनान० ॥ ॐ ह्रीं जिनाग० ॥
चरुं ॥ ५ ॥ कर्पूरभरहारिभिः सिताभदीपव्रजैरशेषजनलोचनप्रियैरखंडप्रभैः । जिनान० ॥ ॐ ह्रीं
जिनाग० ॥ दीपं ॥ ६ ॥ सुधीरहिमवालुकामलयजादिधूपकैः सुरासुरनरोरगप्रमोददैः सुमोहिभिः ।
जिनाननाद्विनिर्गतां गणधरादिसेवितां यजे परमभारतीं सकललोकपूजितां ॥ ॐ ह्रीं जिनागमाय
नमः ॥ धूपं निर्वपामि स्वाहा ॥ ७ ॥ इक्षुपूगदाडिमरसालमोचादिभिः सुरूपसद्गंधयुक्फलकुलैर्मनो-
हारिभिः । जिनान० ॥ ॐ ह्रीं जिनाग० ॥ फलं ॥ ८ ॥ महाधवलदुकूलनेत्रादिविजांगचित्रादिकैः
सुशिल्पिपरिनिर्मितैर्धवलगौरशोणसंज्ञकैः । जिनान० ॥ ॐ ह्रीं जिनाग० ॥ वस्त्रं ॥ ९ ॥ किरीट-
सारहारकंकणवलयनूपुरांजनैः सुवर्णमणिमुद्रिकाविविधकुंडलैर्मेखलैः । जिनान० ॥ ॐ ह्रीं जिनाग० ॥
षोडशाभरणं ॥ १० ॥ पूतांभोभिः सुगंधैरगरुमलयजाद्युद्भवैर्गंधलेपैः सद्भरैरक्षतौघै रुचिरपरिमलै-
श्चंपकादिप्रसूनैः । नैवेद्यैर्दीपकौघैरगरुसुरभिदार्वादिधूपैः प्रशस्तैः सद्यैः संसत्फलौघै रचितमिदमहं

शारदायै ददेऽर्घ्यं ॥ अर्घ्यं ॥ ११ ॥ श्रीवीतरागमुखमारविनिर्गतं यच्छ्रीमद्गणेंद्रकथितं त्रगसिद्धसारं । तद्द्वादशांगममलं बहुलार्थयुक्तं वंदे श्रुतं परमहं सततं पवित्रं ॥ शांतिधारां । पुष्पांजलिः ॥ १२ ॥



## ॥ अथ जिनबिंबार्चनं ॥

आनीतैर्वारिभिस्तीर्थैरिदुक्षोदप्रवाहकैः । जिनबिंबान् यजे रत्नस्वर्णरूप्यादिनिर्मितान् ॥ ॐ ह्रीं जिनचैत्येभ्यो नमः । जलं निर्वपामि स्वाहा ॥ १ ॥ गंधैः कर्पूरभद्रश्रीकाश्मीरादिसमुद्भवैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ गंधं ॥ २ ॥ तंडुलैर्गंधशालीनां कुंदजालकपांडुरैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ अक्षतान् ॥ ३ ॥ पुष्पैर्बाणाब्जसंमल्लीतुंगाद्यैरलिझंकृतैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ पुष्पं ॥ ४ ॥ नैवेद्यैरन्नदुग्धाज्यपूपाद्यैर्घ्राणतर्पणैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ चरुं ॥ ५ ॥ दीपैः सच्चंद्रसंजातैर्ध्वस्ताघतिमिरव्रजैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ दीपं ॥ ६ ॥ धूपैराजाहृणादेश्च घ्राणादेश्च समुद्भवैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ धूपं ॥ ७ ॥ फलैः सद्गंधसद्वर्णसद्दर्शैर्दाडिमादिकैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० । फलं ॥ ८ ॥ पावनैर्वारिगंधाद्यैः कृतैरर्घ्यैर्महाजनैः । जिनबिं० ॥ ॐ ह्रीं जिनचै० ॥ अर्घ्यं ॥ ९ ॥ चतुर्णिकायदेवौघप्रार्चितश्रीजिनेशिनः । स्मरामि भावतस्तेषां बिंबानां कर्महानये ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥

# ॥ अथ जिनालयार्चनं ॥

जैनधर्मैरिव स्वच्छैरंभोभिः शशिशीतलैः । कृत्रिमाकृत्रिमानंचे जिनानामालयान् मुदा ॥ ॐ ह्रीं जिनालयेभ्यो नमः जलं निर्वपामि स्वाहा ॥ १ ॥ बहिस्तापहरैर्गंधैर्गंधसारादिसंभवैः । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ गंधं ॥ २ ॥ लक्ष्मीनेत्रांतविशदैः सुगंधिकलमाक्षतैः । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ अक्षतान् ॥ ३ ॥ केतकीमालतीजातीसादिंदीवरपुष्पकैः । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ पुष्पं ॥ ४ ॥ घृतक्षीराज्यभक्ष्याद्यैश्चरुकैः स्वर्णपात्रगैः । कृत्रिमाकृत्रिमानंचे जिनानामालयान् मुदा ॥ ॐ ह्रीं जिनालयेभ्यो नमः ॥ चरुं ॥ ५ ॥ चारुकर्पूरदीपौघैरघध्वांतविनाशकैः । कृत्रि० ॥ ॐ ह्रीं जि० ॥ दीपं ॥ ६ ॥ दशांगधूपकैर्लेखघ्राणमोदप्रदायकैः । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ धूपं ॥ ७ ॥ नानाविधफलैस्तोषप्रदैर्नासाक्षिचेतमां । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ फलं ॥ ८ ॥ कृतेनार्घ्येण पानीयश्रीखंडसदकादिकैः । कृत्रि० ॥ ॐ ह्रीं जिनाल० ॥ अर्घ्यं ॥ ९ ॥ इत्येतैरष्टभिर्द्रव्यैर्जिनालयसमर्चिनं । शांतिं करोतु सर्वेभ्यः पुष्पांजलिपुरःसरं ॥ शांतिधारां । पुष्पांजलिः ॥ १० ॥ एवमर्हदादीनभ्यर्च्य शरच्चंद्रमरीचिरोचिषोऽतश्वेतसि चिंत्यैवमनादिसिद्ध-मंत्राभिमंत्रितकर्पूरहरिचंदनद्रवलुलितसुरभिशुभ्रपुष्पांजलिभिरेकविंशतिवारानधिवास्य पूर्णार्घ्यदानेन बहुमानयेत ॥

## ॥ अथ अनादिसिद्धमंत्रः ॥

ॐ णमो अरहंताणं । णमो सिद्धाणं । णमो आइरियाणं । णमो उवज्झायाणं । णमो लोए सव्वसाहूणं ॥ चत्तारि मंगलं । अरहंता मंगलं । सिद्धा मंगलं । साहू मंगलं । केवलिपण्णत्तो धम्मो मंगलं ॥ चत्तारि लोगुत्तमा । अरहंता लोगुत्तमा । सिद्धा लोगुत्तमा । साहू लोगुत्तमा । केवलिपण्णत्तो धम्मो लोगुत्तमा ॥ चत्तारि सरणं पव्वज्जामि ॥ अरहंते सरणं पव्वज्जामि । सिद्धे सरणं पव्वज्जामि । साहू सरणं पव्वज्जामि । केवलिपण्णत्तो धम्मो सरणं पव्वज्जामि ॥ ॐ ह्रीं शांतिं कुरु कुरु सर्वशांतिं कुरु कुरु वषट् स्वाहा ॥ अयमनादिसिद्धमंत्रः ॥ ( येथें या मंत्रानें कर्पूर व चंदन यांच्या गंधानें मिश्रित सुगंधित शुभ्र अशा फुलांनीं २१ वेळा पुष्पांजलि करणें. ) जिनसिद्धसूरिदेशकसाधुवरानखिलभव्यजनमहितान् । धर्मागमचैत्यचैत्यालयसमन्वितान् पूजयामि नवदेवान् ॥ पूर्णार्घ्यं ॥

## ॥ अथ जयमाला ॥

मणुय णागिंदसुर धरिय छत्तत्तया । पंचकल्लाण सोक्खावली पत्तया ॥ दंसणं णाणसोक्खं अणंतं बलं । ते जिणा दिंतु अह्मो वरं मंगलं ॥ १ ॥ जेहि झाणग्गिजालेहि अइथद्धियं । जम्म जर मरण णयरत्तयं दड्ढयं ॥ जेहि पत्तं सिवं सासयं ठाणियं । ते मम दिंतु सिद्धा वरं णाणयं ॥ २ ॥

पंचमहाचार पंचंगिसंसाहया । बारहंगाइ सुदजलधि अवगाहया ।। मोख्खलच्छी महंते महत्ती सया । सूरिणा दिंतु मोख्खंगयामग्गया ।। ३ ।। घोरसंसार भीमाटवी काणणे । तिख्खविहराळतह पावपंचाणणे ।। णट्ठमग्गाण जीवाण पहदेसया । वंदिमो उवज्झाय अह्मो सया ।। ४ ।। उग्गतव-चरणकरणेहि जार्णगया । धम्मवरझाणसुक्केकझाणंगया ।। निम्भरं तवसिरिए समालिंगया । साहवो ते महा मोख्खगइ वं दिंतु मे ।। ५ ।। जस्स ळोए पयासेण भविया जणा । अख्खयं सोख्खयं दिंतु णिच्चं वरं ।। मंगळं ळोगुत्तमोय सरणं तहा । सो मम देउ धम्मो वरं मंगळं ।। ६ ।। सव्वसंसारजीवाण हिद देसया । सव्वदोसेहि णिच्चं परं णिम्मळं ।। सव्वभासं पगं सव्वमणरंजणं । सव्वसोख्खं मम देउ जिणभासियं ।। ७ ।। रुप्प कंचण विविह मणिमयाळोमया । कट्टिमाकट्टिमा सुहलख्खणं णण्णिदा ।। भवियजणसम्मत्तबाहिरं कारणं । दिंतु सोख्खं मम जिणवरा चावरं ।। ८ ।। कट्टिमाकट्टिमा दिट्टिमणरंजया । पट्टसालाहि संसोहिया सव्वदा ।। अट्टाळयाळजुगुदुणउरुसो-हिया । दिंतु मे तिळोख्खजिणवस मंगळं ।। ९ ।। येण तोत्थेण णवदेवता वंदिये । गुरुहिसंसार-घणमल्लि संछिजये ।। ळहयदो सिद्धिसोख्खाय बहुमाणणं । कुणयि कम्मिघणं पुज्जपुज्जा-णणं ।। १० ।। घत्ता ।। शुद्धार्हत्सिद्धसूरीन् सततमखिलशास्त्रोपदेशप्रवीणान् । साधुश्रीजैनधर्म-श्रुतिनिकरसुधाचैत्यचैत्यालयार्घ्यान् ।। अर्हद्देवान् प्रवंदे स्वगुणमणिगणापूर्णसिंधून् नवैतान् । स्वात्मोत्थानंतबोधानुलबलपरमानंददृग्वृन्नचेतान् ।। अर्घ्यं ।। इति नवदेवताविधानं संपूर्णं ।।

## ॥ अथ तत्वार्थपूजा ॥

त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः । पंचान्ये चास्तिकाया व्रतसमितिगतिज्ञान-चारित्रभेदाः ॥ इत्येतन्मोक्षमूलं त्रिभुवनमहितं प्रोक्तमर्हद्भिरेभिः प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ १ ॥ सिद्धे जयप्पसिद्धे चउविहाराहणाफलं पत्ते । वंदे ता अर-हंते वोच्छं आराहणा कमसो ॥ २ ॥ उज्जोवणमुज्जोवणं णिव्वाणसाहणं च णिच्छरणं । दंसण-णाणचरित्तं तवाणमाराहणा भणिया ॥ ३ ॥ नमोऽस्तु नमोऽस्तु नमोऽस्तु ॥ मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृतां । ज्ञातारं विश्वतत्वानां वंदे तद्गुणलब्धये ॥ ४ ॥ सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ तत्वार्थश्रद्धानं सम्यग्दर्शनं ॥ २ ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥ जीवाजीवास्र-वबंधसंवरनिर्जरामोक्षास्तत्वं ॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥ प्रमाणनयैरधिगमः ॥ ६ ॥ निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥ सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च ॥ ८ ॥ मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानं ॥ ९ ॥ तत्प्रमाणे ॥ १० ॥ आद्ये परोक्षं ॥ ११ ॥ प्रत्यक्षमन्यत् ॥ १२ ॥ मतिः स्मृतिः संज्ञा चिंताभिनिबोध इत्यनर्थांतरं ॥ १३ ॥ तदिंद्रियानिंद्रि-यनिमित्तं ॥ १४ ॥ अवग्रहेहावायधारणाः ॥ १५ ॥ बहुबहुविधक्षिप्रानिसृतानुक्तध्रुवाणां सेत-राणां ॥ १६ ॥ अर्थस्य ॥ १७ ॥ व्यंजनस्यावग्रहः ॥ १८ ॥ न चक्षुरनिंद्रियाभ्यां ॥ १९ ॥

श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदं ॥ २० ॥ भवप्रत्ययोऽवधिर्देवनारकाणां ॥ २१ ॥ क्षयोपशमनिमित्तः षड्विकल्पः शेषाणां ॥ २२ ॥ ऋजुविपुलमती मनःपर्ययः ॥ २३ ॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २४ ॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्यययोः ॥ २५ ॥ मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेषु ॥ २६ ॥ रूपिष्ववधेः ॥ २७ ॥ तदनंतभागे मनःपर्ययस्य ॥ २८ ॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥ २९ ॥ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३० ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३१ ॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥ नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता नयाः ॥ ३३ ॥ ज्ञानदर्शनयोस्तत्वं नयानां चैव लक्षणं । ज्ञानस्य च प्रमाणत्वमध्यायेऽस्मिन्निरूपितं ॥ १ ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः ॥ १ ॥ कमलगंधशुभाक्षतपुष्पकैश्चरुवरैर्वरदीपसुधूपकैः ॥ विविधजातिफलोत्तमसत्फलैः प्रवियजे प्रथमं जिनमत्रकं ॥ अर्घ्यं ॥ औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्वमौदयिकपारिणामिकौ च ॥ १ ॥ द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमं ॥ २ ॥ सम्यक्त्वचारित्रे ॥ ३ ॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥ ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥ गतिकषायलिंगमिथ्यादर्शनाज्ञानासंयतासिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥ जीवभव्याभव्यत्वानि च ॥ ७ ॥ उपयोगो लक्षणं ॥ ८ ॥ स द्विविधोऽष्टचतु-

भेदः ॥ ९ ॥ संसारिणो मुक्ताश्च ॥ १० ॥ समनस्कामनस्काः ॥ ११ ॥ संसारिणस्त्रसस्थावराः ॥ १२ ॥ पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥ द्वींद्रियादयस्त्रसाः ॥ १४ ॥ पंचेंद्रियाणि ॥ १५ ॥ द्विविधानि ॥ १६ ॥ निर्वृत्युपकरणे द्रव्येंद्रियं ॥ १७ ॥ लब्ध्युपयोगौ भावेंद्रियं ॥ १८ ॥ स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ १९ ॥ स्पर्शरसगंधवर्णशब्दास्तदर्थाः ॥ २० ॥ श्रुतमनिंद्रियस्य ॥ २१ ॥ वनस्पत्यंतानामेकं ॥ २२ ॥ कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २३ ॥ संज्ञिनः समनस्काः ॥ २४ ॥ विग्रहगतौ कर्मयोगः ॥ २५ ॥ अनुश्रेणिगतिः ॥ २६ ॥ अविग्रहा जीवस्य ॥ २७ ॥ विग्रहवती च संसारिणः प्राक्चतुर्भ्यः ॥ २८ ॥ एकसमयाविग्रहा ॥ २९ ॥ एकं द्वौ त्रीन्वानाहारकः ॥ ३० ॥ संमूर्च्छनगर्भोपपादाज्जन्म ॥ ३१ ॥ सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३२ ॥ जरायुजांडजपोतानां गर्भः ॥ ३३ ॥ देवनारकाणामुपपादः ॥ ३४ ॥ शेषाणां संमूर्च्छनं ॥ ३५ ॥ औदारिकवैक्रियिकाहारकतैजसकार्मणशरीराणि ॥ ३६ ॥ परंपरं सूक्ष्मं ॥ ३७ ॥ प्रदेशतोऽसंख्येयगुणं प्राक्तैजसात् ॥ ३८ ॥ अनंतगुणे परे ॥ ३९ ॥ अप्रतिघाते ॥ ४० ॥ अनादिसंबंधे च ॥ ४१ ॥ सर्वस्य ॥ ४२ ॥ तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ४३ ॥ निरुपभोगमंत्यं ॥ ४४ ॥ गर्भसंमूर्च्छनजमाद्यं ॥ ४५ ॥ औपपादिकं वैक्रियिकं ॥ ४६ ॥ लब्धिप्रत्ययं च ॥ ४७ ॥ तैजसमपि ॥ ४८ ॥ शुभं विशुद्धमव्या-

धाति चाहारकं प्रमत्तसंयतस्यैव ॥ ४९ ॥ नारकसंमूर्छिनो नपुंसकानि ॥ ५० ॥ न देवाः ॥ ५१ ॥ शेषास्त्रिवेदाः ॥ ५२ ॥ औपपादिकचरमोत्तमदेहाः संख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५३ ॥ इति तत्त्वार्थाधिगमे मोक्षशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥ पयश्चंदनैरक्षतैः पुष्पवृंदैर्नैवेद्यैःप्रदीपैर्धूपधूम्रैः ॥ फलैरर्घ्यदानैरहं पूजयामि जिनेंद्रस्य सूत्रं द्वितीयं भजामि ॥ अर्घ्यं ॥ २ ॥ रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभा भूमयो घनांबुवाताकाशप्रतिष्ठाः सप्ताधोऽधः ॥ १ ॥ तासु त्रिंशत्पंचविंशतिपंचदशदशत्रिपंचोनैकनरकशतसहस्राणि पंच चैव यथाक्रमं ॥ २ ॥ प्रथमायां प्रतरास्त्रयोदशाधोऽधो द्विहीनाः ॥ ३ ॥ नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ४ ॥ परस्परोदीरितदुःखाः ॥ ५ ॥ संक्लिष्टासुरोदीरितदुःखाश्च प्राक्चतुर्थ्याः ॥ ६ ॥ तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्वानां परा स्थितिः ॥ ७ ॥ जंबूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ८ ॥ द्विर्द्विर्विष्कंभाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ९ ॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जंबूद्वीपः ॥ १० ॥ भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ ११ ॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ १२ ॥ हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥ १३ ॥ मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः ॥ १४ ॥ पद्ममहापद्मतिगिंच्छकेसरीपुंडरीकमहापुंडरीका ह्रदास्तेषामुपरि ॥ १५ ॥ प्रथमो योजनसहस्रा-

 यामस्तादर्धविष्कंभो ह्रदः ॥ १६ ॥ दशयोजनावगाहः ॥ १७ ॥ तन्मध्ये योजनं पुष्करं ॥ १८ ॥ 
तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च ॥ १९ ॥ तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः
पल्योपमस्थितयः सामानिकपरिषत्काः ॥ २० ॥ गंगासिंधूरोहिद्रोहितास्याहरिद्धरिकांतासीतासीतो-
दानारीनरकांतासुवर्णरूप्यकूलारक्तारक्तोदाः सरितस्तन्मध्यगाः ॥ २१ ॥ द्वयोर्द्वयोः पूर्वाः पूर्वगाः
॥ २२ ॥ शेषास्त्वपरगाः ॥ २३ ॥ चतुर्दशनदीसहस्रपरिवृता गंगासिंध्वादयो नद्यः ॥ २४ ॥
भरतः षड्विंशतिपंचयोजनशतविस्तारः षट् चैकोनविंशतिभागा योजनस्य ॥ २५ ॥ तद्द्विगुणद्वि-
गुणविस्तारा वर्षधरवर्षा विदेहांताः ॥ २६ ॥ उत्तरा दक्षिणतुल्याः ॥ २७ ॥ भरतैरावतयोर्वृद्धिह्रासौ
षट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्यां ॥ २८ ॥ ताभ्यामपरा भूमयोऽवस्थिताः ॥ २९ ॥ एकद्वित्रिप-
ल्योपमस्थितयो हैमवतकहारिवर्षकदैवकुरवकाः ॥ ३० ॥ तथोत्तराः ॥ ३१ ॥ विदेहेषु संख्येय-
कालाः ॥ ३२ ॥ भरतस्य विष्कंभो जंबूद्वीपस्य नवतिशतभागः ॥ ३३ ॥ द्विर्धातकीखंडे ॥ ३४ ॥
पुष्करार्धे च ॥ ३५ ॥ प्राङ्मानुषोत्तरान्मनुष्याः ॥ ३६ ॥ आर्या म्लेच्छाश्च ॥ ३७ ॥ भरतैरावत-
विदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ ३८ ॥ नृस्थिती परावरे त्रिपल्योपमांतर्मुहूर्ते ॥ ३९ ॥
तिर्यग्योनिजानां च ॥ ४० ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥ पानीयचंद-
नशुभाक्षतचारुपुंजश्वेतनगीववुलचंपकपारिजातैः । नैवेद्यकैः प्रवरदीपसुधूपसारैः सूत्रं यजामि

तृतियं जिनदेव भक्त्या ॥ अर्घ्यं ॥ देवाश्चतुर्णिकायाः ॥ १ ॥ आदितस्त्रिषु पीतांतलेश्याः ॥ २ ॥ दशाष्टपंचद्वादशविकल्पाः कल्पोपपन्नपर्यंताः ॥ ३ ॥ इंद्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥ त्रायस्त्रिंशल्लोकपालवर्ज्या व्यंतरज्योतिष्काः ॥ ५ ॥ पूर्वयोर्द्वींद्राः ॥ ६ ॥ कायप्रवीचारा आ ऐशानात् ॥ ७ ॥ शेषाः स्पर्शरूपशब्दमनःप्रवीचाराः ॥ ८ ॥ परेऽप्रवीचाराः ॥ ९ ॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ १० ॥ व्यंतराः किन्नरकिंपुरुषमहोरगगंधर्वयक्षराक्षसभूतपिशाचाः ॥ ११ ॥ ज्योतिष्काः सूर्याचंद्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥ १२ ॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥ १३ ॥ तत्कृतः कालविभागः ॥ १४ ॥ बहिरवस्थिताः ॥ १५ ॥ वैमानिकाः ॥ १६ ॥ कल्पोपपन्नाः कल्पातीताश्च ॥ १७ ॥ उपर्युपरि ॥ १८ ॥ सौधर्मैशानसानत्कुमारमाहेंद्रब्रह्मब्रह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धौ च ॥ १९ ॥ स्थितिप्रभावसुखद्युतिलेश्याविशुद्धींद्रियावधिविषयतोऽधिकाः ॥ २० ॥ गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ २१ ॥ पीतपद्मशुक्ललेश्याः द्वित्रिशेषेषु ॥ २२ ॥ प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २३ ॥ ब्रह्मलोकालया लौकांतिकाः ॥ २४ ॥ सारस्वतादित्यवन्ह्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥ २५ ॥ विजयादिषु द्विचरमाः ॥ २६ ॥ औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २७ ॥

स्थितिरसुरनागसुपर्णद्वीपशेषाणां ॥ २८ ॥ सागरोपमत्रिपल्योपमार्धहीनमिताः ॥ २९ ॥ सौधर्मैशा-
नयोः सागरोपमेऽधिके ॥ ३० ॥ सनत्कुमारमाहेंद्रयोः सप्त ॥ ३१ ॥ त्रिसप्तनवैकादशत्रयोदशपंचद-
शभिरधिकानि तु ॥ ३२ ॥ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु सर्वार्थसिध्दौ च ॥ ३३ ॥
अपरा पल्योपममधिकं ॥ ३४ ॥ परतः परतः पूर्वापूर्वानंतराः ॥ ३५ ॥ नारकाणां च ॥ ३६ ॥
द्वितीयादिषु ॥ ३७ ॥ दशवर्षसहस्राणि प्रथमायां ॥ ३८ ॥ भवनेषु च ॥ ३९ ॥ व्यंतराणां
च ॥ ४० ॥ परा पल्योपममधिकं ॥ ४१ ॥ ज्योतिष्काणां च ॥ ४२ ॥ तदष्टभागोऽपरा ॥ ४३ ॥
लौकांतिकानामष्टौ ॥ ४४ ॥ सागरोपमाणि सर्वेषां ॥ ४५ ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे
चतुर्थोऽध्यायः ॥ ४ ॥ सलिलगंधशुभाक्षतपुष्पकैश्चरुसुदीपसुधूपफलामृतैः । शुभदमंगलगीयविस-
र्जितैर्जिनपते जिनराज यजाम्यहं ॥ अर्घ्यं ॥ ४ ॥ अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥
द्रव्याणि ॥ २ ॥ जीवाश्च ॥ ३ ॥ नित्यावस्थितान्यरूपाणि ॥ ४ ॥ रूपिणः पुद्गलाः ॥ ५ ॥
आ आकाशादेकद्रव्याणि ॥ ६ ॥ निष्क्रियाणि च ॥ ७ ॥ असंख्येयाः प्रदेशा धर्माधर्मैकजी-
वानां ॥ ८ ॥ आकाशस्यानंताः ॥ ९ ॥ संख्येयासंख्येयाश्च पुद्गलानां ॥ १० ॥ नाणोः ॥ ११ ॥
लोकाकाशेऽवगाहः ॥ १२ ॥ धर्माधर्मयोः कृत्स्ने ॥ १३ ॥ एकप्रदेशादिषु भाज्यः पुद्गलानां ॥ १४ ॥
असंख्येयभागादिषु जीवानां ॥ १५ ॥ प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ॥ १६ ॥ गतिस्थित्युपग्रहौ

धर्माधर्मयोरुपकारः ॥ १७ ॥ आकाशस्यावगाहः ॥ १८ ॥ शरीरवाङ्मनःप्राणापानाः पुद्गलानां ॥ १९ ॥ सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥ परस्परोपग्रहो जीवानां ॥ २१ ॥ वर्तनापरिणामक्रियाः परत्वापरत्वे च कालस्य ॥ २२ ॥ स्पर्शरसगंधवर्णवंतः पुद्गलाः ॥ २३ ॥ शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च ॥ २४ ॥ अणवः स्कंधाश्च ॥ २५ ॥ भेदसंघातेभ्य उत्पद्यंते ॥ २६ ॥ भेदादणुः ॥ २७ ॥ भेदसंघाताभ्यां चाक्षुषः ॥ २८ ॥ सद्द्रव्यलक्षणं ॥ २९ ॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥ ३० ॥ तद्भावाव्ययं नित्यं ॥ ३१ ॥ अर्पितानर्पितसिद्धेः ॥ ३२ ॥ स्निग्धरूक्षत्वाद्बंधः ॥ ३३ ॥ न जघन्यगुणानां ॥ ३४ ॥ गुणसाम्ये सदृशानां ॥ ३५ ॥ द्व्यधिकादिगुणानां तु ॥ ३६ ॥ बंधेऽधिकौ पारिणामिकौ च ॥ ३७ ॥ गुणपर्ययवद्द्रव्यं ॥ ३८ ॥ कालश्च ॥ ३९ ॥ सोऽनंतसमयः ॥ ४० ॥ द्रव्याश्रया निर्गुणा गुणाः ॥ ४१ ॥ तद्भावः परिणामः ॥ ४२ ॥ इति तत्त्वार्थाधिगमे मोक्षशास्त्रे पंचमोऽध्यायः ॥ ५ ॥ तोयगंधसारपारसूज्वलैः सुतंडुलैः । पुष्पबाणवारणाय सच्चरुसमन्वितैः ॥ दीपधूपनालिकेरपूगमादिभिः फलैः । रौप्यपात्रसंस्थितं यजामि सूत्रपंचमं ॥ अर्घ्यं ॥ ५ ॥ कायवाङ्मनःकर्म योगः ॥ १ ॥ स आस्रवः ॥ २ ॥ शुभः पुण्यस्याशुभः पापस्य ॥ ३ ॥ सकषायाकषाययोः सांपरायिकेर्यापथयोः ॥ ४ ॥ इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपंचविंशतिसंख्याः पूर्वस्य भेदाः ॥ ५ ॥ तीव्रमंदज्ञाताज्ञातभावाधिकरणवीर्यविशेषे-

भ्यस्तद्विशेषः ॥ ६ ॥ अधिकरणं जीवाजीवाः ॥ ७ ॥ आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ८ ॥ निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परं ॥ ९ ॥ तत्प्रदोषनिन्हवमात्सर्यांतरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ १० ॥ दुःखशोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ ११ ॥ भूतव्रत्यनुकंपादानसरागसंयमादियोगः क्षांतिः शौचमिति सद्वेद्यस्य ॥ १२ ॥ केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १३ ॥ कषायोदयात्तीव्रपरिणामश्चारित्रमोहस्य ॥ १४ ॥ बह्वारंभपरिग्रहत्वं नारकस्यायुषः ॥ १५ ॥ माया तैर्यग्योनस्य ॥ १६ ॥ अल्पारंभपरिग्रहत्वं मानुषस्य ॥ १७ ॥ स्वभावमार्दवं च ॥ १८ ॥ निःशीलव्रतत्वं च सर्वेषां ॥ १९ ॥ सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य ॥ २० ॥ सम्यक्त्वं च ॥ २१ ॥ योगवक्रताविसंवादनं चाशुभस्य नाम्नः ॥ २२ ॥ तद्विपरीतं शुभस्य ॥ २३ ॥ दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधिर्वैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य ॥ २४ ॥ परात्मनिंदाप्रशंसे सदसद्गुणोच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २५ ॥ तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २६ ॥ विघ्नकरणमंतरायस्य ॥ २७ ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥ वारिचंदनाक्षतैः प्रफुल्लदिव्यभोजनैर्दीपधूपसारसाम्रचोचमोचसंयुतैः ।

शुभगीतनाद्यवाद्यमंगलैर्विराजितं पूजयाम्यहर्निशं जिनेंद्रसूत्रषष्ठमं ॥ अर्घ्यं ॥ ६ ॥ हिंसानृतस्ते-
याब्रह्मपरिग्रहेभ्यो विरतिर्व्रतं ॥ १ ॥ देशसर्वतोऽणुमहती ॥ २ ॥ तत्स्थैर्यार्थं भावनाः पंच
पंच ॥ ३ ॥ वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानि पंच ॥ ४ ॥ क्रोधलोभ-
भीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं च पंच ॥ ५ ॥ शून्यागारविमोचितावासपरोपरोधाकरण-
भैक्ष्यशुद्धिसद्धर्माविसंवादाः पंच ॥ ६ ॥ स्त्रीरागकथाश्रवणतन्मनोहरांगनिरीक्षणपूर्वरतानुस्मरणवृष्ये-
ष्टरसस्वशरीरसंस्कारत्यागाः पंच ॥ ७ ॥ मनोज्ञामनोज्ञेंद्रियविषयरागद्वेषवर्जनानि पंच ॥ ८ ॥
हिंसादिष्विहामुत्रापायावद्यदर्शनं ॥ ९ ॥ दुःखमेव वा ॥ १० ॥ मैत्रीप्रमोदकारुण्यमाध्यस्थानि च
सत्वगुणाधिकक्लिश्यमानाविनयेषु ॥ ११ ॥ जगत्कायस्वभावौ वा संवेगवैराग्यार्थं ॥ १२ ॥ प्रम-
त्तयोगात् प्राणव्यपरोपणं हिंसा ॥ १३ ॥ असदभिधानमनृतं ॥ १४ ॥ अदत्तादानं स्तेयं ॥ १५ ॥
मैथुनमब्रह्म ॥ १६ ॥ मूर्च्छा परिग्रहः ॥ १७ ॥ निःशल्यो व्रती ॥ १८ ॥ अगार्यनगारश्च ॥ १९ ॥
अणुव्रतोऽगारी ॥ २० ॥ दिग्देशानर्थदंडविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथि-
संविभागव्रतसंपन्नश्च ॥ २१ ॥ मारणांतिकीं सल्लेखनां जोषिता ॥ २२ ॥ शंकाकांक्षाविचिकित्सान्य-
दृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः ॥ २३ ॥ व्रतशीलेषु पंच पंच यथाक्रमं ॥ २४ ॥ बंधवध-
च्छेदातिभारारोपणान्नपाननिरोधाः ॥ २५ ॥ मिथ्योपदेशरहोभ्याख्यानकूटलेखक्रियान्यासापहारसा-

कारमंत्रभेदाः ॥ २६ ॥ स्तेनप्रयोगस्तदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूप- 
कव्यवहाराः ॥ २७ ॥ परविवाहकरणत्वरिकापरिगृहीतापरिगृहीतागमनानंगक्रीडाकामतीव्राभि-
निवेशाः ॥ २८ ॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यभांडप्रमाणातिक्रमाः ॥ २९ ॥
ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यंतराधानानि ॥ ३० ॥ आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गल-
क्षेपाः ॥ ३१ ॥ कंदर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि ॥ ३२ ॥ योग-
दुःप्रणिधानानादरस्मृत्यनुपस्थानानि ॥ ३३ ॥ अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादानसंस्तरोपक्रमणानाद-
रस्मृत्यनुपस्थानानि ॥ ३४ ॥ सचित्तसंबंधसम्मिश्राभिषवदुःपक्वाहाराः ॥ ३५ ॥ सचित्तनिक्षेपापिधा-
नपरव्यपदेशकरणमात्सर्यकालातिक्रमाः ॥ ३६ ॥ जीवितमरणाशंसामित्रानुरागसुखानुबंधनिदा-
नानि ॥ ३७ ॥ अनुग्रहार्थं स्वस्यातिसर्गो दानं ॥ ३८ ॥ विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३९ ॥
इति तत्वार्थाधिगमे मोक्षशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥ वार्भिश्च चंदनशुभाक्षतचारुपुष्प—नैवेद्यदी-
पवरधूपफलार्घ्ययुक्तैः । गंभीरमंबुनिधिनादसमानसत्सु तूर्ये यजामि जिनसूत्रकसप्तमं वै ॥ अर्घ्यं ॥
मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः ॥ १ ॥ सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्ग-
लानादत्ते स बंधः ॥ २ ॥ प्रकृतिस्थित्यनुभागप्रदेशास्तद्विधयः ॥ ३ ॥ आद्यो ज्ञानदर्शनावरणवे-
दनीयमोहनीयायुर्नामगोत्रांतरायाः ॥ ४ ॥ पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथा-

कर्म ॥ ५ ॥ मतिश्रुतावधिमनःपर्ययकेवलानां ॥ ६ ॥ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्रा-प्रचलाप्रचलाप्रचलास्त्यानगृद्धयश्च ॥ ७ ॥ सदसद्वेद्ये ॥ ८ ॥ दर्शनचारित्रमोहनीयाकषायकषायवेद-नीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोकभयजु-गुप्सास्त्रीपुंनपुंसकवेदाः अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमाया-लोभाः ॥ ९ ॥ नारकतैर्यग्योनमानुषदैवानि ॥ १० ॥ गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसं-स्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यागुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीर-त्रससुभगसुस्वरदुःस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशःकीर्तिसेतराणि तीर्थकरत्वं च ॥ ११ ॥ उच्चैर्नीचैश्च ॥ १२ ॥ दानलाभभोगोपभोगवीर्याणां ॥ १३ ॥ आदितस्तिसृणामंतरायस्य च त्रिंशत्सागरोपमको-टीकोट्यः परा स्थितिः ॥ १४ ॥ सप्ततिर्मोहनीयस्य ॥ १५ ॥ विंशतिर्नामगोत्रयोः ॥ १६ ॥ त्रय-स्त्रिंशत्सागरोपमाण्यायुषः ॥ १७ ॥ अपरा द्वादशमुहूर्ता वेदनीयस्य ॥ १८ ॥ नामगोत्रयो-रष्टौ ॥ १९ ॥ शेषाणामंतर्मुहूर्ता ॥ २० ॥ विपाकोऽनुभवः ॥ २१ ॥ स यथानाम ॥ २२ ॥ ततश्च निर्जरा ॥ २३ ॥ नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाहस्थिताः सर्वात्मप्रदेशेष्वनंतानंत-प्रदेशाः ॥ २४ ॥ सद्वेद्यशुभायुर्नामगोत्राणि पुण्यं ॥ २५ ॥ अतोऽन्यत्पापं ॥ २६ ॥ इति तत्वार्था-धिगमे मोक्षशास्त्रे अष्टमोऽध्यायः ॥ ८ ॥ क्षीरोदधितोयैर्वरवारिपूरैः सचंदनैस्तंदुलपंचपुंजैः । मंदार-

पुष्पैर्वरसत्सुगंधैरर्चामि सूत्रं जिनमष्टमं च ॥ अर्घ्यं ॥ ८ ॥ आस्रवनिरोधः संवरः ॥ १ ॥ स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥ तपसा निर्जरा च ॥ ३ ॥ सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥ ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥ उत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥ अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्वानुचिंतनमनुप्रेक्षाः ॥ ७ ॥ मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥ सूक्ष्मसांपरायछद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥ एकादश जिने ॥ ११ ॥ बादरसांपराये सर्वे ॥ १२ ॥ ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥ दर्शनमोहांतराययोरदर्शनालाभौ ॥ १४ ॥ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचासत्कारपुरस्काराः ॥ १५ ॥ वेदनीये शेषाः ॥ १६ ॥ एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतिः ॥ १७ ॥ सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसांपराययथाख्यातमिति चारित्रं ॥ १८ ॥ अनशनावमोदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥ प्रायश्चित्तविनयवैयावृत्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरं ॥ २० ॥ नवचतुर्दशपंचद्विभेदा यथाक्रमं ॥ २१ ॥ प्राग्ध्यानात ॥ २२ ॥ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः ॥ २३ ॥

ज्ञानदर्शनचारित्रोपचाराः ॥ २४ ॥ आचार्योपाध्यायतपस्वीशैक्ष्यग्लानगणकुलसंघसाधुमनोज्ञानां ॥ २५ ॥ वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥ २६ ॥ बाह्याभ्यंतरोपध्योः ॥ २७ ॥ उत्तमसंहननस्यैकाग्रचिंतानिरोधो ध्यानमंतर्मुहूर्तात् ॥ २८ ॥ आर्तरौद्रधर्मशुक्लानि ॥ २९ ॥ परे मोक्षहेतू ॥ ३० ॥ आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३१ ॥ तद्विपरीतं मनोज्ञस्य ॥ ३२ ॥ वेदनायाश्च ॥ ३३ ॥ निदानं च ॥ ३४ ॥ तदविरतदेशविरतप्रमत्तसंयतानां ॥ ३५ ॥ हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३६ ॥ आज्ञापायविपाकसंस्थानविचयाय धर्म्यं ॥ ३७ ॥ शुक्ले चाद्ये पूर्वविदः ॥ ३८ ॥ परे केवलिनः ॥ ३९ ॥ पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि ॥ ४० ॥ त्र्येकयोगकाययोगायोगानां ॥ ४१ ॥ एकाश्रये सवितर्कविचारे पूर्वे ॥ ४२ ॥ अवीचारं द्वितीयं ॥ ४३ ॥ वितर्कः श्रुतं ॥ ४४ ॥ वीचारोऽर्थव्यंजनयोगसंक्रांतिः ॥ ४५ ॥ सम्यग्दृष्टिश्रावकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजिनाः ॥ ४६ ॥ क्रमशोऽसंख्येयगुणनिर्जराः ॥ ४७ ॥ पुलाकबकुशकुशीलनिर्ग्रंथस्नातका निर्ग्रंथाः ॥ ४८ ॥ संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपादस्थानविकल्पतः साध्याः ॥ ४९ ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे नवमोऽध्यायः ॥ ९ ॥ कीलालैर्मलयोद्भवैः सुखकरैर्व्रीह्युद्भवैस्तंडुलैः । पुष्पैर्भोज्यसुदीपधूपफलकैरर्घ्यैः सुपात्रस्थितैः ॥ भक्त्याऽहं परयाऽर्चयामि सततं संसारबंधच्छिदं । सद्धर्मप्रति-

पादकं नवमकं सूत्रं जिनं मंगलं ॥ अर्घ्यं ॥ ९ ॥ मोहक्षयात् ज्ञानदर्शनावरणांतरायक्षयाच्च केवलं ॥ १ ॥ बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥ २ ॥ औपशमिकादिभव्यत्वानां च ॥ ३ ॥ अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥ तदनंतरमूर्ध्वं गच्छत्यालोकांतात् ॥ ५ ॥ पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथागतिपरिणामाच्च ॥ ६ ॥ आविद्धकुलालचक्रवद्व्यपगतलेपालाबुवदेरंडबीजवदग्निशिखावच्च ॥ ७ ॥ धर्मास्तिकायाभावात् ॥ ८ ॥ क्षेत्रकालगतिलिंगतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनांतरसंख्याल्पबहुत्वतः साध्याः ॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे दशमोऽध्यायः ॥ १० ॥ पाथैः सुचंदनशुभाक्षतपुष्पव्रातैर्नैवेद्यदीपवरधूपफलार्घ्यकैश्च । वाद्येषु मंदरनिनादवतीषु सत्सु सूत्रं महामि दशमं जिनचंद्र भक्त्या ॥ अर्घ्यं ॥ दशाध्यायपरिच्छिन्ने तत्वार्थे पठिते सति । फलं स्यादुपवासस्य भाषितं मुनिपुंगवैः ॥ १ ॥ अक्षरमात्रपदस्वरहीनं व्यंजनसंधिविवर्जितरेफं । साधुभिरत्र मम क्षमितव्यं को न विमुह्यति शास्त्रसमुद्रे ॥ २ ॥ दशाध्यायेषु सूत्राणां तत्वार्थे गणना स्मृता । शतानि त्रीणि पंचाशदष्टौ च यतिकुंजरैः ॥ ३ ॥ तत्वार्थसूत्रकर्त्तारं गृध्रपिच्छोपलक्षितं । वंदे गणींद्रसंजातमुमास्वामिमुनीश्वरं ॥ ४ ॥ जं सक्कइ तं कीरइ जं च ण सक्कइ तं च सद्दहणं । सद्दहमाणो जीवो पावइ अजरामरं ठाणं ॥ ५ ॥ तवयरणं वयधरणं संयमसरणं च जीवदयाकरणं । अंते समाहिमरणं चउगइदुक्खं णिवारेइ ॥ ६ ॥

पढमचउक्के पढमं पंचम्मे जाण पुग्गलं तच्च। छहसत्तमेसु आस्सव अट्ठम्मे बंधं च णायव्वा ॥ ७ ॥
णवमे संवर णिज्जर दहमे मोक्खं विहाणेई। इह सत्ततच्च भणियं जिणपणितं दहसुत्ते ॥ ८ ॥
इति तत्वार्थपूजा समाप्ता ॥

## ॥ अथ नंदीश्वरपूजा ॥

नंदीश्वराष्टमविशालमनोज्ञरूपे द्वीपे जिनेश्वरगृहाश्च भवंति युग्मं। पंचाशदिंद्रमहितान् प्रयजामि सिद्धं देवेंद्रनागपतिचर्चितचारुबिंबान् ॥ १ ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे द्वापंचाशज्जिनालया अत्रावतरतावतरत संवौषट् स्वाहा। ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा। ॐ ह्रीं अ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ सुहेमादिपात्रार्पितैः कैर्यजेऽहं। सुनंदीश्वरस्थं द्वातार्धाद्रिगेहं ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे द्वापंचाशज्जिनालयेभ्यो जलं निर्वपामि स्वाहा ॥ मलायोद्भवैर्गंधसारैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ सुशाल्युद्भवैर्मौक्तिगर्गैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ अक्षतान् ॥ ३ ॥ हतानंगबाणं सुपुष्पैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ सुसंत्यक्तकं भक्तमुख्यैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ सुबोधप्रदीपैर्घृताद्यैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ सुकर्पूरकृष्णादिधूपैर्यजेऽहं। सुनंदी० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ ततोद्दामकीर्ति फलैः

सद्यजेऽहं । मुनंदी० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥ जलाद्यैर्युतैरर्घ्यदानैर्यजेऽहं । मुनंदी० ॥ ॐ ह्रीं अ० ॥ अर्घ्यं ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ अथ प्रत्येकपूजा ॥

पश्यंतीव वदंतीव दृश्यमानान् यजे जिनान् । पुरंदरसभागस्थान परिपूर्वनगाश्रितान् ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे पूर्वदिशात्रयोदशाकृत्रिमजिनचैत्यचैत्यालया अत्रावतरतावतरत संवौषट् स्वाहा । ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं अ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ सिद्धैर्द्रवीभूतमिताश्वकल्कैर्जलैः सितांभोजदलाभिरामैः नंदीश्वरद्वीपजिनेंद्रबिंबान् नतामरेंद्रानभिनंदयामि ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे पूर्वदिशात्रयोदशाकृत्रिमजिनचैत्यचैत्यालयेभ्यो जलं निर्वपामि स्वाहा ॥ श्रीखंडकल्कैः सितकुंकुमाद्यैः शीतांशुमिश्रैरपि सिद्धिलब्ध्यै । नंदी० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ शाल्यक्षतैरक्षतमूर्त्तिलक्ष्यैश्चंद्रामृतांशुद्युतिलेशकल्कैः । नंदी० ॥ ॐ ह्रीं अ० ॥ अक्षतान् ॥ ३ ॥ पुष्पैः प्रपुष्पीकृतभव्यलोकान् पूताखिलार्थान् द्रुतपुष्पकेतून् । नंदी० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ क्षुधादिदुःखोपशमाय भक्त्या कोट्यर्कशीतांशुरुचो निवेद्यैः । नंदी० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ मणिप्रदीपैर्महितैर्मनोज्ञैर्मंदीकृताशेषजगत्तमोभिः । नंदी० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ आहूतदिग्दंतिकटस्थभृंगैरामोदभारादधिकाम्रधूपैः । नंदीश्वरद्वीपजिनेंद्रबिंबान् नतामरेंद्रानभिनंदयामि ॥ ॐ ह्रीं

अष्टमनंदीश्वरद्वीपे पूर्वदिशात्रयोदशाकृत्रिमजिनचैत्यचैत्यालयेभ्यो धूपं निर्वपामि स्वाहा ॥ ७ ॥
सौगंधिसंतोषितसर्वलोकैः सुजातपाकैर्मधुरैः फलौघैः । नंदी० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥
अर्घ्येण सर्वाभ्युदयप्रमोक्षपण्यर्घ्यभावं जलतादरेण । नंदी० ॥ ॐ ह्रीं अ० ॥ अर्घ्यं ॥ ९ ॥
शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

देवेंद्रसत्कीर्तितचारुमूर्तिः सदा पवित्रो गुणरत्नभूषः । कलानिधिः कल्पितकामपाशो नंदीश्वरो भवतु जिनो गरिष्ठः ॥ १ ॥ जिननाथगृहं हतमोहधरं । गतकामकलंकविमुक्तशरं ॥ हतकर्मवनं सकलं शरणं । सुयजे वसुद्वीपसुदेवगणं ॥ २ ॥ वररत्नसुसंयुतदेहवरं । शतपंचकमुन्नतमानशरं ॥ सकलामरपूजिनपादपणं । सुय० ॥ ३ ॥ वसुकर्द्धकदेवनुतं विमलं । मदमोहगजेंद्रविनाशपरं ॥ परमं परमेश्वरवीतरणं । सुय० ॥ ४ ॥ कमलाकरशंकरविष्णुनतं । गतदंभदयापरकस्रमतं ॥ सुमनोभवबाणहरं त्रिगणं । सुय० ॥ घत्ता ॥ देवेंद्रकीर्त्तितां पूजां करोति निजभक्तितः । लभते मोक्षसौख्यं च इंद्रचक्रिपदं तथा ॥ अर्घ्यं ॥ इतिप्रथमपूजा ॥

## ॥ अथ द्वितीयपूजा ॥

दक्षिणान् सहजानंदांश्चंदनाचलरंजितान् । जिनाधीशगृहानंचे शक्रसंदोहपूजितान् ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे दक्षिणदिशात्रयोदशाकृत्रिमजिनचैत्यचैत्यालया अत्र अवतरतावतरत संवौषट्

स्वाहा । ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं अ० अत्र मम सन्निहिता 
भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ नीरभरैर्यायज्मि जिनेशं । अंजनकादौ बिंबम्यजेऽहं ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे दक्षिणदिशात्रयोदशाकृत्रिमजिनचैत्यचैत्यालयेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ सारसुगंधैर्मलयजलेशैः । अंज० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ अक्षतपुंजैश्चर्चयेफेनैः । अंज० ॥ ॐ ह्रीं अ० ॥ अक्षतान् ॥ ३ ॥ चंपकपुष्पैस्तं प्रयजेऽहं । अंज० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ खाद्यशुभैश्चाये जिनमेनं ॥ अंज० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ दीपभरैश्चाये जिननाथं । अंज० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ धूपभरैर्यायज्मि जिनेशं । अंज० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ श्रीफलकैश्च यजे सुरवंद्यं । अंज० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥ नीरमुखैश्च यजेऽर्घ्यसुदानैः । अंज० ॥ ॐ ह्रीं अ० ॥ अर्घ्यं ॥ ९ ॥ शांतिधारां । पुष्पाजलिः ॥

## ॥ अथ जयमाला ॥

पायात् सदा जिनो देवो जगदानंददायकः । जगज्जंतुकृपासिंधुः कमलापतिपूजितः ॥ १ ॥ भवनत्रयमंडनबोधधरं । कलिलापहकंपितकामनरं । निजवक्त्रविकासितकंजलयं । प्रयजे दधिवक्त्रजिननिलयं ॥ २ ॥ सुरकिन्नरनागपतिमहितं । परमात्मपरं जनतासहितं ॥ निजकांतितिरस्कृ-

तभावलयं । प्रय० ॥ ३ ॥ मुनिमानमहंमरसं सुभगं । वरमंसृतिसाधिननतवभगं ॥ अकलं कत-
काद्रिममानिलयं । प्रय० ॥ ४ ॥ मदनांघ्रिपनागगणंद्रहितं । कलिलापहमप्रदमानमितं ॥ कनकां
किनकालकलाविलयं । प्रय० ॥ घत्ता ॥ इति नंदीश्वरं देवो दमितारिर्दयानिधिः । पायाद्भव्यस-
मूहानां देवेंद्रादिसुकीर्तितः ॥ अर्घ्यं ॥ इति द्वितीयपूजा ॥

## ॥ अथ तृतीयपूजा ॥

चापपंचशतान् नित्यं चैत्यार्बिंबानहं यजे । पंचपंचशतोदारसंख्यान् पश्चिमदिग्गतान् ॥ ॐ ह्रीं
अष्टमनंदीश्वरद्वीपे पश्चिमदिशावरत्रयोदशाकृत्रिमजिनचैत्यालया अत्र अवतरतावतरत संवौषट्
स्वाहा । ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं अ० अत्र मम सन्निहिता भवत २
वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ विधुश्रितैः सुतीर्थजैः कुशैः शुभैर्मनोहरैः । सुनंदना-
थसंभवं जिनाधिपं यजे परं ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे पश्चिमदिशावरत्रयोदशाकृत्रिमजिनचै-
त्यचैत्यालयेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ सुचंदनै रसैर्वरैः सुकुंकुमादिमिश्रितैः । सुनं० ॥
ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ सुगंधशालितंदुलैः सुमंभवैर्मुदाहृतैः । सुनं० ॥ ॐ ह्रीं अ० ॥
अक्षतान् ॥ ३ ॥ सरोजपुष्पचंपकैः कदंबकेतकादिभिः । सुनं० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥
सुहव्यपाकपक्वभक्तभर्मभाजनस्थितैः । सुनं० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ विधूद्भवैः प्रदी-

पवैर्हतांधकारकैः पगैः । सुनं० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ दशांगधूपधूम्रकैरलिश्रितैर्घ-नाभकैः । सुनं० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ सुमोचचोचबीजपूरद्राक्षकैः सदाफलैः । सुनं० ॥ ॐ ह्रीं अ० ॥ फलं ॥ जलादिकार्घ्यदानकैः सुभर्मभाजनाश्रितैः । सुनं० ॥ ॐ ह्रीं अ० ॥ अर्घ्यं ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

श्रीमन्नंदीश्वरे देवो दीप्तभानुतिरस्कृतः । जयतु जगदानंदो लब्धकीर्तिः कृपाकरः ॥ १ ॥ नंदीश्वरजिनपं गणराजं । सज्जनसंचितपुण्यसमाजं ॥ अंजनदधिमुखरतिकररामं । वंदे विमला-कृत्रिमकामं ॥ २ ॥ कनकाभाकृतिमंगिश्रितगेहं । रत्नमयं रंजितसुरधेयं ॥ कल्पवृक्षपुष्पादिसु-दामं । वंदे० ॥ ३ ॥ मंदरमौक्तिकमालाशोभं । रत्नखचितबिंबादिसुगर्भं ॥ सिंहासनवरछत्रल-लामं । वंदे० ॥ ४ ॥ आषाढकार्तिकफाल्गुनमासे । शुक्लाष्टमिपूजा गुणराशेः ॥ पौर्णमिपर्यंत-रशुभकामं । वंदे० ॥ ५ ॥ घत्ता ॥ सत्पुण्योपार्जनं कृत्वा यांति ते निजमंदिरं । देवेंद्रकीर्त्ति-तद्वीपं वंदे श्रीभवनोत्तमं ॥ अर्घ्यं ॥ इति तृतीयपूजा ॥

## ॥ अथ चतुर्थपूजा ॥

उत्तरदिश्यप्यंजनदधिमुखरतिकराभिधेया गिरयः । ये सर्वरत्ननिकरशोभितास्तान् भजे महे ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे उत्तरदिशावरत्रयोदशाकृत्रिमाजिनचैत्यचैत्यालया अत्र अवतरतावतरत

संवौषट् स्वाहा । ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं अ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ कुमुदसंश्रितस्वच्छशीतनीरसुधारया । नंदीश्वरस्थबिंबानां क्रमात् संपूजयाम्यहं ॥ ॐ ह्रीं अष्टमनंदीश्वरद्वीपे उत्तरदिशावरत्रयोदशाकृत्रिमजिनचैत्यचैत्यालयेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ कर्पूरकुंकुमान्मिश्रचंदनेन सुगंधिना । नंदी० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ तंदुलैर्मौक्तिकाभासैः सर्वसंपद्विधायकैः । नंदी० ॥ ॐ ह्रीं अ० ॥ अक्षतान् ॥ ३ ॥ कामबाणसमैः सारैः कुसुमैः सुरसंभवैः । नंदी० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ पक्वान्नशर्करामिश्रैर्घ्राणचक्षुःसुखप्रदैः । नंदी० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ रत्नादिसंभवैर्धूपैर्जगध्वांतविनाशकैः । नंदी० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ कृष्णागरुसमुद्भूतैर्धूपैर्धूमसनोहरैः । नंदी० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ श्रीफलाम्रसुकाम्रादिकपित्थफलसंभवैः । नंदी० ॥ ॐ ह्रीं अ० ॥ फलं ॥ जलादिपूर्णकैरर्घ्यैं रत्नपात्रसमान्वितैः । नंदी० ॥ ॐ ह्रीं अ० ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

श्रीमदष्टनको द्वीपो नागेंद्रादिसमर्चितः । भाति भूमंडले नित्यं प्रासादपंक्तिभूषितः ॥ १ ॥ सकलामरवंदित निर्मलहंस । सदामलकांतिकलाधरवंश ॥ कलंकविवर्जित केलिविराम । प्रसीद

मनोज्ञनंदीश्वरधाम ॥ २ ॥ सदोदय मानवदीप्तिधरंत । मदोद्धतकाममृगेंद्रसुशांत ॥ पवित्रगुणालय शंकर राम । प्रसी० ॥ ३ ॥ मुनीश्वरभावितगेहविशाल । परापरपूजित भावगुणाल ॥ कवींद्रगुणाश्रित मुक्तिविकाम । प्रसी० ॥ ४ ॥ निरंतरमारविकारविदार । यतीश महेश गणेश वितार ॥ परापरमेश्वर कीर्तिविराम । प्रसीद मनोज्ञनंदीश्वरधाम ॥ घत्ता ॥ इति नंदीश्वरगे देवो चर्चितांघ्रिसुराधिपः । देयाच्छं भव्यलोकानां देवेंद्रपददायकः ॥ अर्घ्यं ॥ इति नंदीश्वरपूजा समाप्ता ॥

## ॥ अथ षोडशभावनापूजा ॥

श्रीमत्षोडशभावनापरिलसत्पूजाविधानं महद्भूतानागतवर्तमानजिनपान् द्वासप्ततिं भक्तितः । मुक्तिश्रीपरिरंभनिर्भरपरीरंभाब्जमरकृत्य च वक्ष्येऽहं मुनिहृत्सरोजनिवहं तेषां पदप्राप्तये ॥ १ ॥ भूतानागतवर्त्तमानजिनपान् मध्ये महासद्भूतान् अष्टांभोजदलेषु गुप्तिसुकृतानेकादशोपासकान् । प्रोद्यच्छ्रीप्रतिमासयोर्दशविधान् धर्मान् बहिः षोडशप्रख्यातोज्वलभावनापदगणानालिख्य चाह्वानये ॥ २ ॥ ॐ ह्रीं श्रीं क्ष्रीं भूः स्वाहा प्रस्तावनाय पुष्पांजलिं क्षिपेत् ॥ अथ षोडशभावनाकर्णिकामध्ये दर्शनविशुध्यादिभावनापूजाविधानं ॥ यदा यथोपवासस्थैरगकर्ण्यं च तदा तथा । मोक्षसौख्यस्य कर्तॄणि कारणान्यपि षोडश ॥ इति पठित्वा कर्णिकामध्ये पुष्पांजलिं क्षिपेत् । ऐंद्रं पदं प्राप्य परं प्रमोदं धन्यात्मतामात्मनि मन्यमानः । दृक्शुद्धिमुख्यादिजिनेंद्रलक्ष्म्या महाम्यहं

षोडशकारणानि ॥ ॐ ह्रीं असिआउसा नमः दर्शनविशुद्ध्यादिषोडशकारणानि अत्र एत २ संवौषट् स्वाहा । ॐ ह्रीं अ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं अ० अत्र मम सन्निहितानि भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ गंगादितीर्थोद्भववारिपूरैस्तापापहारैर्घनसारमिश्रैः । तीर्थंकरश्रीसुखसाधकानि यजे मुदा षोडशकारणानि ॥ ॐ ह्रीं दर्शनविशुद्ध्यादिषोडशकारणेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ रसेन सच्चंद्रमयेन सारकर्पूरगौरेण मनोहरेण । तीर्थं० ॥ ॐ ह्रीं द० ॥ गंधं ॥ २ ॥ प्रोत्फुल्लकुंदेंदुकरावदातैः शाल्यक्षतैरक्षतसिद्धिलब्ध्यै । तीर्थं० ॥ अक्षतान् ॥ ३ ॥ कुंदैरमंदैः शुचिसिंधुवारैः सत्पारिजातैः सरसीरुहैश्च । तीर्थं० ॥ पुष्पं ॥ ४ ॥ पक्वान्नशाल्योदनपायसाद्यैर्नैवेद्यकैः कांचनभाजनस्थैः । तीर्थं० ॥ चरुं ॥ ५ ॥ प्रसृत्वरध्वांतहरैरुदारैर्दीपैर्लसत्केवललब्धिहेतोः । तीर्थंकरश्रीसुखसाधकानि यजे मुदा षोडशकारणानि ॥ ॐ ह्रीं दर्शनविशुद्ध्यादिषोडशकारणेभ्यो दीपं निर्वपामि स्वाहा ॥ ६ ॥ धूमोद्गमावामितदिग्विभागैर्धूपैर्भवभ्रांतिविनाशनाय । तीर्थं० ॥ ॐ ह्रीं द० ॥ धूपं ॥ ७ ॥ नारंगपूगादिसुमातुलुंगैः श्रीमच्चिरम्रैः कदळीफलैश्च । तीर्थं० ॥ ॐ ह्रीं द० फलं ॥ ८ ॥ भक्तिब्रह्मसुरेंद्रसंस्तुतमिदं तीर्थंकराणां पदं । लब्धुं वांछितया विचारचतुरः संसारभीताश्रयः ॥ श्रीमद्दर्शनभूरिशुद्धिनिवहैर्ज्ञानवताद्यं फलं । भक्त्या षोडशकारणानि स नरः संपूज्य चाराधयेत् ॥ ९ ॥ ॐ ह्रीं दर्शनविशुद्ध्यादिषोडशकारणेभ्योऽर्घ्यं निर्वपामि स्वाहा ॥ शांतिधारा । पुष्पांजलिः ॥

## ॥ अथ भूतकालतीर्थंकरपूजा ॥

भूतादिकालोदितभव्यपुण्यादाराधिता येऽत्र सुरेंद्रवृंदैः । तान् पंचकल्याणविभूतिभाजस्तीर्थंकरान् सांप्रतमर्चयामि ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं निर्वाणाद्यतीतचतुर्विंशतितीर्थंकरा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ ॐ ह्रीं निर्वाणाद्यतीतचतुर्विंशतितीर्थंकरेभ्यो जलं । गंधं । अक्षतान् । पुष्पं । चरुं । दीपं । धूपं । फलं । अर्घ्यं निर्वपामि स्वाहा । शांतिधारां । पुष्पांजलिः ॥ १ ॥

## ॥ अथ वर्तमानकालतीर्थंकरपूजा ॥

येऽमी संप्रतिकालभव्यजनताधिष्ठामरेंद्रैर्मुदा । कल्याणैर्वृषभादयो जिनवराः संपूजितास्तानिह ॥ त्रैलोक्याधिपतीन् यजाम्यतिशयोपेतांश्चतुर्विंशतीन् । शांत्यर्थं जगतां चराचरगुरून् तीर्थंकरान् संप्रति ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं वृषभादिवर्धमानांत्यवर्तमानचतुर्विंशतितीर्थंकरा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ ॐ ह्रीं वृषभादिवर्धमानांत्यवर्तमानचतुर्विंशतितीर्थंकरेभ्यो जलमित्यादि ॥ २ ॥

## ॥ अथ अनागतकालतीर्थंकरपूजा ॥

ये भाविभव्यजनतासुकृतोदयेन कल्याणपंचकविभूतिमिहाश्रयंतः । तेभ्योऽर्घ्यपाद्यविधिनाऽखिल-तीर्थकृद्भ्यः शांत्यै समस्तजगतां यजनं करोमि ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं महापद्माद्यना-गतचतुर्विंशतितीर्थंकरा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ ह्रीं० अत्र तिष्ठत २ ठठ स्वाहा । ॐ ह्रीं० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधी-करणं ॥ ॐ ह्रीं महापद्माद्यनागतचतुर्विंशतितीर्थंकरेभ्यो जलमित्यादि ॥ १ ॥ इति कर्णिका-मध्ये दर्शनविशुध्यादिभावनापरिवृतद्वासप्ततिजिनदेवार्चनं ॥

## ॥ अथ अष्टपत्रस्थापिताहिंसादिसद्धर्मानभ्यर्चयेत् ॥

हिंसारहितमहाव्रतमंचे संसारजलधिपोतमहं । जातिजरामरणातुरशोकभयनिकररहितममलार्घ्यैः ॥ ॐ ह्रीं भवभ्रमणदुस्तरसंसारतरणतरंडाय अहिंसामहाव्रताय जलं निर्वपामि स्वाहा इत्यादि ॥ १ ॥ ताल्वोष्ठपुटविरहितप्रविमलदिव्यध्वनेर्निदानं च । अनृतमहाव्रतमंचे त्रिलोकमहितं विशुद्धसि-द्धार्घ्यैः ॥ ॐ ह्रीं ताल्वोष्ठपुटव्यापारवर्जितदिव्यध्वनिकारणस्वरूपाय त्रैलोक्यपूज्याय अनृतवि-रतिमहाव्रताय ॥ जलं ॥ २ ॥ अस्तेयमहाव्रतमुरुदुस्तरदारिद्र्यदस्युनिस्त्रिंशं । विस्तृतपरमानंतचतु-ष्टयस्य प्रशस्तकारणमंचे ॥ ॐ ह्रीं अनंतचतुष्टयकारणस्वरूपाय अचौर्यमहाव्रताय ॥ जलं ॥ ३ ॥

मुक्त्यंगनावक्त्रसरोजमित्रं सद्ब्रह्मचर्यं व्रतसार्वभौमं । शुद्धात्मनि ध्याननिदानमर्घ्यैस्त्रिलोकविश्वासकरं यजामि ॥ ॐ ह्रीं शुद्धबुद्धोन्मुखावलोकनकारणस्वरूपाय ब्रह्मचर्यमहाव्रताय ॥ जलं ॥ ४ ॥ अष्टगुणपुष्टिकरणोत्कृष्टं निर्ग्रंथनाम सुव्रतमंचे । शिष्टजनमनोहितमनघं दुष्टाष्टकर्मनष्टविशिष्टं ॥ ॐ ह्रीं अष्टगुणपुष्टिकारणस्वरूपाय आकिंचन्यमहाव्रताय ॥ जलं ॥ ५ ॥ सर्वास्रवनिरोधकारणत्रिगुप्तिसंयमं यजे भक्त्या । मुक्तिवधूकुचकलशे मौक्तिकहारं विमुक्तकलिलं चार्ये ॥ ॐ ह्रीं सर्वास्रवनिरोधकारणस्वरूपाय त्रिगुप्तिमहसंयमाय ॥ जलं ॥ ६ ॥ श्रीमन्नेकादशोपासकवरप्रतिमायोगमानंदतोऽहं नित्यं वै निश्चयं साधनवरकरणं कारणं भव्यसेव्यं । लोकानंदैकहेतुं भवभयहरणं नाकलोकादिमुक्तिप्रासादारोहणायोद्धृतशुभकरणश्रेणिमाराधयामि ॥ ॐ ह्रीं निश्चयसाधनकारणस्वरूपाय एकादशोपासकवरप्रतिमाय ॥ जलं ॥ ७ ॥ केवलिना कथितमहाविनेयहस्तावलंबनं चार्ये । दशलक्षणसंपन्नं धर्मं कर्मापहं शर्मकरं ॥ ॐ ह्रीं केवलिप्रणितभव्यजनहस्तावलंबनकारणस्वरूपाय दशलक्षणसंपन्नमहाधर्माय ॥ जलं ॥ ८ ॥

## ॥ अथ जपः ॥

ॐ ह्रीं भवभ्रमणदुस्तरसंसारतारणतरंडाय अहिंसामहाव्रताय नमः । ॐ ह्रीं दिव्यध्वनिकारणस्वरूपाय सत्यवचनमहाव्रताय नमः । ॐ ह्रीं अनंतचतुष्टयकारणस्वरूपाय अचौर्यमहाव्रताय

नमः । ॐ ह्रीं शुद्धबुद्धोन्मुखावलोकनकारणस्वरूपाय ब्रह्मचर्यमहाव्रताय नमः । ॐ ह्रीं मुक्तिपथकारणस्वरूपाय निर्ग्रंथमहाव्रताय नमः । ॐ ह्रीं सर्वास्रवनिरोधकारणस्वरूपाय त्रिगुप्तिमहासंयमाय नमः । ॐ ह्रीं निश्चयसाधनकारणस्वरूपाय एकादशोपासकवरप्रतिमाय नमः । ॐ ह्रीं केवलिप्रणितभव्यजनहस्तावलंबनकारणरूपाय दशलक्षणसंपन्नमहाधर्माय नमः इति जपः ॥ आहिंसासत्यमस्तेयब्रह्माकिंचन्यगुप्तिकाः । उपासकांश्च सद्धर्मानर्घ्यं चात्रावतारये ॥ ॐ ह्रीं अहिंसानृतास्तेयब्रह्माकिंचन्यगुप्त्युपासकसद्धर्माय अर्घ्यं निर्वपामि स्वाहा ॥ पूर्णार्घ्यम् ॥

## ॥ अथ षोडशपत्रस्थापितभावनापूजा ॥

असत्यसहिताहिंसा मिथ्यात्वं च न दृश्यते । अष्टांगं यत्र सम्यक्त्वं दर्शनं तद्विशुद्धिदं ॥ ॐ ह्रीं दर्शनविशुद्धये ॥ जलं निर्वपामि स्वाहा ॥ १ ॥ दर्शनं ज्ञानचारित्रतपसां यत्र गौरवं ! मनोवाक्कायसंशुध्या साऽख्याता विनयस्थितिः ॥ ॐ ह्रीं विनयसंपन्नतायै ॥ जलं ॥ २ ॥ अनेकशीलसंपूर्णा व्रतपंचकसंयुता । पंचविंशत्क्रिया यत्र तच्छीलव्रतमुच्यते ॥ ॐ ह्रीं शीलव्रतेष्वनतिचाराय ॥ जलं ॥ ३ ॥ काले पाठे समे ध्यानं शास्त्रचिंता गुरोर्नतिः । यत्रोपदेशना लोके शास्त्रज्ञानोपयोगिता ॥ ॐ ह्रीं अभीक्ष्णज्ञानोपयोगाय ॥ जलं ॥ ४ ॥ पुत्रमित्रकलत्रेभ्यः संसारविषयात्ततः । विरक्तिर्जायते यत्र स संवेगो बुधैः स्मृतः ॥ ॐ ह्रीं संवेगाय ॥ जलं ॥ ५ ॥

जघन्यमध्यमोत्कृष्टपात्रेभ्यो दीयते भृशं । शक्त्या चतुर्विधं दानं साऽख्याता दानसंस्थितिः ॥ ॐ ह्रीं शक्तितस्त्यागाय ॥ जलं ॥ ६ ॥ तपो द्वादशभेदेन क्रियते मोक्षलिप्सया । शक्तितो भक्तितो यत्र भवेत् सा तपसः स्थितिः ॥ ॐ ह्रीं शक्तितस्तपसे ॥ जलं ॥ ७ ॥ मरणोपसर्गरोगादिष्टवियोगादनिष्टसंयोगात् । विनयो यत्र प्रविशन्ति साधुसमाधिः स विज्ञेयः ॥ ॐ ह्रीं साधुसमाधये ॥ जलं ॥ ८ ॥ कुष्टोदरव्यथाशूलवातपित्तशिरोर्तिभिः । कासश्वासज्वरारोगैः पीडिता ये मुनीश्वराः ॥ तेषां भैषज्यमाहारं शुश्रूषा पथ्यमादरात् । यत्रैतानि प्रवर्तंते वैयावृत्यं तदुच्यते ॥ ॐ ह्रीं वैय्यावृत्यकरणाय ॥ जलं ॥ ९ ॥ मनसा कर्मणा वाचा जिननामाक्षरद्वयं । सदैव स्मर्यते यत्र सार्वभक्तिः प्रकीर्तिता ॥ ॐ ह्रीं अर्हद्भक्तये ॥ जलं ॥ १० ॥ निर्ग्रंथभक्तितो मुक्तिस्तस्य द्वारावलोकनं । तद्भोज्यं लभते वस्तु रमत्यागोपवासता ॥ तत्कालवंदना पूजा प्रणामो विनयो नतिः । एतानि यत्र जायंते गुरुभक्तिर्मता च सा ॥ ॐ ह्रीं आचार्यभक्तये ॥ जलं ॥ ११ ॥ भवस्मृतिरनेकांता लोकालोकप्रकाशिता । प्रोक्ता यत्रार्हतो वाणी वर्ण्यतेऽसौ बहुश्रुतः ॥ ॐ ह्रीं बहुश्रुतभक्तये ॥ जलं ॥ १२ ॥ षड्द्रव्यपंचकायत्वसमतत्त्वनवार्थतः । कर्मप्रकृतिविच्छेदो यत्र प्रोक्तः स आगमः ॥ ॐ ह्रीं प्रवचनभक्तये ॥ जलं ॥ १३ ॥ प्रतिक्रमतनूत्सर्गौ समता वंदना स्तुतिः । स्वाध्यायः पठ्यते यत्र तदावश्यकमुच्यते ॥ ॐ ह्रीं आवश्यकपरिहाणये ॥ जलं ॥ १४ ॥

जिनस्नानं श्रुताख्यानं गीतं वाद्यं च नर्तनं । यत्र प्रवर्तते पूजा सा सन्मार्गप्रभावनाय ॥ ॐ ह्रीं मार्गप्रभावनायै ॥ जलं ॥ १५ ॥ चारित्रगुणयुक्तानां मुनीनां शीलधारिणां । गौरवं क्रियते यत्र तद्वात्सल्यं च कथ्यते ॥ ॐ ह्रीं प्रवचनवत्सलत्वाय ॥ जलं ॥ १६ ॥

## ॥ अथ जपः ॥

ॐ ह्रीं दर्शनविशुद्धये नमः । ॐ ह्रीं विनयसंपन्नतायै नमः । ॐ ह्रीं शीलव्रतेष्वनतिचाराय नमः । ॐ ह्रीं अभीक्ष्णज्ञानोपयोगाय नमः । ॐ ह्रीं संवेगाय नमः । ॐ ह्रीं शक्तितस्त्यागाय नमः । ॐ ह्रीं शक्तितस्तपसे नमः । ॐ ह्रीं साधुसमाधये नमः । ॐ ह्रीं वैयावृत्यकरणाय नमः । ॐ ह्रीं अर्हद्भक्तये नमः । ॐ ह्रीं आचार्यभक्तये नमः । ॐ ह्रीं बहुश्रुतभक्तये नमः । ॐ ह्रीं प्रवचनभक्तये नमः । ॐ ह्रीं आवश्यकपरिहाणये नमः । ॐ ह्रीं सन्मार्गप्रभावनायै नमः । ॐ ह्रीं प्रवचनवत्सलत्वाय नमः ॥ इति जपः ॥ इत्थं षोडशभावनां यतिवराः कुर्वंति ये निर्मलाः ते वै तीर्थकरस्य नाम पदवीमायुर्लभंते कुलं ॥ चित्तं कांचनपर्वतेषु विधिना स्नानार्चनं दैवतं । राज्यं सौख्यमनेकधा वरतपो मोक्षं च सौख्यास्पदं ॥ ॐ ह्रीं अर्हं असिआउसा दर्शनविशुद्ध्यादिषोडशकारणेभ्यो महार्घ्यं निर्वपामि स्वाहा ॥ पूर्णार्घ्यम् ॥

## ॥ अथ जयमाला ॥

भवभयणिवारण सोळहकारण । पयडमि गुणगणसायरा ॥ पणविवितित्थंकर असुहखयंकर । केवळणाणदिवायरा ॥ १ ॥ दिढं धरहु पढम दंसणसुद्धि मणवयणकायविरयतिसुद्धि ॥ माछंडहु विणयउ चउप्पयारु । जो मुत्तिवरंगणि होइ विहारु ॥ २ ॥ अणुदिण परिपाळहु सीळभेउ । जो झति हरइ संसारहेउ ॥ णाणुपयोगी जो कालु गमइ । तसु तणियकित्ति रतिभवणयालि भवइ ॥ ३ ॥ संवेउ चाउ जे अणुमरंति । वेयणभवणउ ते तरंति ॥ जे ततिउ तवंति बारह पयारु । ते सग्गि सुरिंद हवंति वमारु ॥ ४ ॥ जो माहुममाहि धरतु थक्कु । सो ण वहि कालु मुहिग्गवक्कु ॥ जो जाणइ वैयावचुकरणु । सो होइ सव्वदोसावहरणु ॥ ५ ॥ जो चिंतइ मणि अहरंतदेवु । नसु विमयहणं तह कवणखेवु ॥ पवयणहात्तिसु गुरु जे ण वंति । चउगइससारे भयमंति ॥ ६ ॥ बहुसुदभत्ति जे णर करंति । अप्पावु रयणत्तवु ते धरंति ॥ जे पवयणे कज्जे व समथा होंति । तह कामु जिणे तह कवण भंति ॥ ७ ॥ जो छह आवस्सयं चित्तु देइ । सो सिद्धिपंथुसुहासत्ति वेइ ॥ जे मग्गपहावण आयरंति । ते अहमिंदतणु संभवंति ॥ ८ ॥ जे वत्मलस्स करणु वहंति । ते तित्थंयरतवुपवु लहंति ॥ घत्ता ॥ इह सोळह कारण कम्मणिवारण । जे धरंति वयसीळधरा ॥ ते दिव्वअमरेसर पुहुगम्मर । सिद्धिवरंगणिहोयहरा । अर्घ्यं ॥ इति षोडशभावनापूजा समाप्ता ॥

## ॥ अथ पंचमेरुपूजा ॥

श्रीजंबूद्वीपमध्ये पश्चिमनिमहाधानकीखंडप्राची। पश्चाद्भागे च पूर्वापरपरिगिथिलसत्पुष्करार्द्धेतृतीये॥ प्रभ्राजत्पंचमेरुष्वकृतिमभवने भामुगन् जैनबिंबान्। यायज्म्याव्हानमुख्यैः सुविधिभिरधुना रत्नरूपान्विचित्रान्॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं पंचमंदरस्थिताऽकृत्रिमचैत्यालयस्थितजिनबिंबसमूहा अत्र अवतरतावतरत संवौषट् स्वाहा। ॐ ह्रीं॰ अत्र तिष्ठत २ ठठ स्वाहा। ॐ ह्रीं॰ अत्र मम सन्निहिता भवत २ वषट् स्वाहा॥ आह्वानस्थापनसान्निधीकरणं॥ निर्मलानवपूतकारसुनालनिर्गतधारया। पंकजोद्भवपरागपिंजरजान्हवीजलधारया॥ मारवीरजयात्कटाक्षिबोधसन्मणिभूषितं। पंचमंदरसंस्थितं जिनबिंबवृंदमहं यजे॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं पंचमंदरसंस्थितजिनबिंबसमूहाय जलं निर्वपामि स्वाहा॥ १॥ चंद्रचंदनकुंकुमाश्रितचित्तरंजकलेपनैः। सांद्रसौरभलोभगुंजितभृंगनादमनोहरैः॥ घोरसंसृतितापपावकतापनोदनपावनैः। पंचमं॰॥ ॐ ह्रीं॰ पंच॰॥ गंधं॥ २॥ पुण्यपुंजवलक्षितैः सुवराक्षतैः कलमाक्षतैः। मोक्षलक्ष्मीवरणसाक्षीपक्षपातकटाक्षकैः॥ ध्यानखड्गविखंडिताद्भुतकर्मचक्रभवाऽशुभं। पंचमं॰॥ ॐ ह्रीं॰ पंच॰॥ अक्षतं॥ ३॥ सारसौरभसांद्रहल्लकमुख्यदिव्यनवोद्गमैः। सौरभाहृतनादपदावलिसारसंकुलमंजुलैः॥ वार्धिघोरगभीरदिव्यनिनादघोषितसत्सखं। पंचमं॰॥ ॐ ह्रीं॰ पंच॰॥ पुष्पं॥ ४॥ सारसेन सुधारसोचितपा-

यसेन महीयसा । भव्यरंजननव्यव्यंजनपावनैर्बहुभक्ष्यकैः ॥ भव्यसंततिवांछितप्रदकल्पपादपसन्निभं । पंचमं० ॥ ॐ ह्रीं० पंच० ॥ चरुं ॥ ५ ॥ नूतनरत्नसमप्रभैर्घनसारवृंदसमुद्भवै । दीप्रदीपचयैरघेंधनजालदाहसमुज्ज्वलैः ॥ विश्वलोकविलोकनैकविशालकेवललोचकं । पंचमं० ॥ ॐ ह्रीं० पंचमं ॥ दीपं ॥ ६ ॥ सूचयद्भिरिवापवर्गसुमार्गमाशु जनांतिके । धूपधूमचयै रमोघसितागरुप्रमुखोद्भवैः ॥ सारसौरभतोषिताखिललोकलोलसुनासिकैः । पंचमं० ॥ ॐ ह्रीं० पंच० ॥ धूपं ॥ ७ ॥ पुण्यपापसमुद्भवाखिलदिव्यसत्फलसन्निभै । श्रीचमोचसुदाडिमादिफलोत्करैः सुरसोज्वलैः ॥ धर्मकर्मसमुद्भवाखिलदुःखरूपफलापहैः । पंचमं० ॥ ॐ ह्रीं० पंच० ॥ फलं ॥ ८ ॥ तोयगंधसुशालिसदकलतांतसच्चरुदीपकै । धूपधूममहाफलव्रजमंगलार्थकदंबकैः ॥ स्वर्णभाजननिर्मितेन महार्घ्यकेण महीयसा । पंचमं० ॥ ॐ ह्रीं० पंच० ॥ अर्घ्यं ॥ ९ ॥ पापतापविरोपणोद्धसुरापगाजलधारया । चारुकांचननिर्मितामलकरकनालविमुक्तया ॥ आजवंजवसंभवाखिलदुःखसंततिशांतये । पंचमं० ॥ शांतिधारां ॥ १० ॥ सुदर्शनाद्रिसंस्थितं प्रत्नरत्ननिर्मितं । प्रवरपद्मकैर्यजे सिद्धबिंबवृंदकं ॥ पुष्पांजलिः ॥ धातकिखंडद्वीपके पश्चिममेरुसंस्थितं । प्रवरहल्लकैर्यजे सिद्धबिंबवृंदकं ॥ पुष्पांजलिः ॥ पुष्करार्धद्वीपके पूर्वमंदरसंगतं । प्रवरचंपकैर्यजे सिद्धबिंबवृंदकं ॥ पुष्पांजलिः ॥ ११ ॥ इति मेरुपूजा समाप्ता ॥

## ॥ अथ दशलक्षणपूजा ॥

ॐ स्वर्गमुक्तिकरं धर्मं जिनोक्तं दशधावहम् । स्थापयामि जगत्पूज्यं विधिनाऽहं सुखार्णवं ॥ ॐ ह्रीं अर्हं असिआउसा नमः उत्तमक्षमादिदशलक्षणधर्म अत्र अवतरावतर संवौषट् स्वाहा । ॐ ह्रीं० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ह्रीं० अत्र मम सन्निहितो भव २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अथ अष्टकम् ॥

गंगादिजातैर्विमलैः सुगंधैः सुवर्णभृंगारभृतैर्जलौधैः । धर्मं यजेऽहं दशधा जिनोक्तं धर्माय स्वर्मोक्षसुखावहाय ॥ ॐ ह्रीं उत्तमक्षमादिदशधर्मेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ कर्पूरसत्कुंकुममिश्रजातैर्हेमादिवर्णेन विलेपनेन । धर्मं० ॥ ॐ ह्रीं उ० ॥ गंधं ॥ २ ॥ शाल्यक्षतैर्दीर्घतरैरखंडैः समुज्वलैः सन्मुनिचित्ततुल्यैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ अक्षतं ॥ ३ ॥ सुचंपकैः केतकिपद्मजातैः कुंदादिसारैः प्रवरैः प्रसूनैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ पुष्पं ॥ ४ ॥ पक्वान्नशाल्योदनपायसाद्यैर्नैवद्यकैः कांचनभाजनस्थैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ चरुं ॥ ५ ॥ घृतादिकर्पूरभवैः प्रदीपैः स्तमोविनाशैर्वररत्नजातैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ दीपं ॥ ६ ॥ कर्पूरकृष्णागरुचंदनाद्यैर्द्रव्यैरखंडैर्गंधवरैश्च धूपैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ धूपं ॥ ७ ॥ सुना-

लिकेराम्रकपित्थपूगैः फलादिसारैः सुफलैर्मनोज्ञैः । धर्मं० ॥ ॐ ह्रीं उ० ॥ फलं ॥ ८ ॥ सुनीरगंधाक्षतचारुपुष्पैर्नैवेद्यसद्दीपसुधूपवर्गैः । फलैर्महार्घ्यैरवतारयामि धर्मं मुदाऽहं दशधा जिनोक्तं ॥ अर्घ्यं ॥ शांतिधारां पुष्पांजलिः ॥ ९ ॥

## ॥ अथ प्रत्येकपूजा ॥

कोपादिरहितां सारां सर्वसौख्यकरां क्षमां । पूजया परया भक्त्या पूजयामि तदाप्तये ॥ ॐ ह्रीं उत्तमक्षमाधर्मांगाय ॥ जलं निर्वपामि स्वाहा ॥ त्यक्तमानं सुखागारं मार्दवं कृपयान्वितं पूज० ॥ ॐ ह्रीं उत्तममार्दवधर्मांगाय ॥ जलं ॥ २ ॥ आर्जवं स्वर्गसोपानं कौटिल्यादिविवर्जितं ॥ पूज० ॥ ॐ ह्रीं उत्तमार्जवधर्मांगाय ॥ जलं ॥ ३ ॥ असत्यदूरगं सत्यं वचः सर्वसुखावहं । पूज० ॥ ॐ ह्रीं उत्तमसत्यधर्मांगाय ॥ जलं ॥ ४ ॥ शौचं लोभविनिर्मुक्तं मुक्तिश्रीचित्तरंजितं । पूज० । ॐ ह्रीं उत्तमशौचधर्मांगाय ॥ जलं ॥ ५ ॥ दयाढ्यं संयमं मुक्तिभर्तारंसेंद्रियातिगम् । पूज० ॥ ॐ ह्रीं उत्तमसंयमधर्मांगाय ॥ जलं ॥ ६ ॥ कर्मेंद्रियदमं सारं तपः कर्माग्निनाशनं । पूज० ॥ ॐ ह्रीं उत्तमतपोधर्मांगाय ॥ जलं ॥ ७ ॥ त्यक्तसंगं सदानंदं त्यागं सर्वसुखाकरं । पूज० ॥ ॐ ह्रीं उत्तमत्यागधर्मांगाय ॥ जलं ॥ ८ ॥ आकिंचन्यं ममत्वादिदूरं कृत्स्नसुखार्णवं । पूज० ॥ ॐ ह्रीं उत्तमाकिंचन्यधर्मांगाय ॥ जलं ॥ ९ ॥ शीलयुक्तं त्रिजगत्पूज्यं ब्रह्मचर्यं गुणार्णवं । पूज० ॥ ॐ ह्रीं उत्तमब्रह्मचर्यधर्मांगाय ॥ जलं ॥ १० ॥

## ॥ अथ जाप: ॥

ॐ ह्रीं अर्हं उत्तमक्षमायै नमः । ॐ ह्रीं अर्हं उत्तममार्दवाय नमः । ॐ ह्रीं अर्हं उत्तमार्जवाय नमः । ॐ ह्रीं अर्हं उत्तमसत्याय नमः । ॐ ह्रीं अर्हं उत्तमशौचाय नमः ॐ ह्रीं अर्हं उत्तमसंयमाय नमः । ॐ ह्रीं अर्हं उत्तमतपसे नमः । ॐ ह्रीं अर्हं उत्तमत्यागाय नमः । ॐ ह्रीं अर्हं उत्तमाकिंचन्याय नमः । ॐ ह्रीं अर्हं उत्तमब्रह्मचर्याय नमः ॥ प्रत्येकपूजया भक्त्या सुधर्मान् योऽर्चयेत् सुधीः । इंद्रभूति सुराज्यं च प्राप्य मुक्त्यंगनां भजेत् ॥ ॐ ह्रीं अर्हं उत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याख्यदशधर्मेभ्योऽर्घ्यं निर्वपामि स्वाहा ॥ पूर्णार्घ्यः ॥

## ॥ अथ जयमाला ॥

स्वर्मोक्षैकनिबंधनं हितकरं शक्रादिभिः पूजितं । अंतातीतगुणार्णवं बुधजनैः सेव्यं जिनेंद्रोदितं ॥ धर्मं मार्दवादिलक्षणभवं पंचद्विभेदैर्युतं । स्तोष्ये तद्गुणहेतवे प्रतिदिनं हिंसादिदोषोज्झितं ॥ १ ॥ क्षमां ये धरंत्येव संत्यक्तकोपां । लभंतेऽत्र ते मुक्तिरामां सुभक्त्या ॥ वरं मार्दवं येऽत्र पूज्यं वृणन्ति । प्रयांत्येव सौख्याब्धिपारं ध्रुवं ते ॥ २ ॥ त्रिधा आर्जवं येऽपि कुर्वंति सारं । स्वयं मुक्तिनार्या वशं यांति सत्यं ॥ वचो येऽत्र नित्यं वदंत्येव सत्यं । शुभं प्राप्नुवंत्येव शास्त्रं च नित्यं ॥ ३ ॥

येऽपि कुर्वन्ति सदा शौचमेकं मुदा । तान् प्रयांत्येव लोकत्रये संपदः ॥ पालयंत्येव ये संयमं मोक्षदं । कर्मनाशान प्रयांत्येव नित्यं पदं ॥ ४ ॥ ये तपः कुर्युरेवात्र शर्माकरं । तेऽपि गच्छंति निर्वाण-सौख्यं वरं ॥ सदा कुर्वते त्यागमेकं गरिष्ठं । भजंत्येव ते विश्वराज्यं सुज्येष्ठं ॥ ५ ॥ चरंत्येव येऽकिंचनं संगहीनं । रमंतेऽत्र ते मुक्तिकांतानिकाये ॥ पालयंत्येव ब्रह्मव्रतं ये त्रिधा । ते भजंत्येव लोकत्रये शं बुधाः ॥ घत्ता ॥ ६ ॥ सकलगुणसमृद्धं तीर्थनाथैः प्रणीतं । विविधविबुधपूज्यैः पूज्य धर्मं गुणाब्धिं ॥ अयकरमपि भक्त्याऽर्च्यं समुत्तार्ग्येर्घो । भजति शिवपदं संप्राप्य राज्यं नृपूज्यम् ॥ अर्घ्यं ॥ ७ ॥ इत्थं सुधर्ममसलं दशधा भजंति । ये वै मनोवचनकायविशुद्धिभाजः ॥ ते प्राप्य शर्म नृसुरादिभवं प्रयांति । मोक्षं क्रमाद्धनमलाश्च निरस्तदोषं इत्याशीर्वादः ॥ ८ ॥

## ॥ अथ स्वयंभूः ॥

येन स्वयंबोधमयेन लोका आश्वासिताः केचन वित्तकार्ये । प्रबोधिताः केचन मोक्ष मार्गे तमादि-नाथं प्रणमामि नित्यं ॥ १ ॥ इंद्रादिभिः क्षीरसमुद्रतोयैः संस्नापितो मेरुगिरौ जिनेंद्रः । यः काम-जेता जनसौख्यकारी तं शुद्धभावादजितं नमामि ॥ २ ॥ ध्यानप्रबंधप्रभवेन येन निहत्य कर्मप्र-कृतीः समस्ताः ॥ मुक्तेः स्वरूपां पदवीं प्रपेदे तं संभवं नौमि महानुरागात् ॥ ३ ॥ स्वप्ने यदीया जननी क्षपायां गजादिवन्ह्यंतमिदं ददर्श । यत्तात इत्याह गुरुः परोऽयं नौमि प्रमोदादभिनंदनं

तं ॥ ४ ॥ कुत्वादिवादान् जयनं महांतं नयप्रमाणैर्वचनैर्जगत्सु । जैनं मतं विस्तरितं च येन त मेव देवं सुमतिं नमामि ॥ ५ ॥ यस्यावतारे सति पितृधिष्ण्ये ववर्ष रत्नानि हरेर्निदेशात् । धनाधिपः षण्णवमासपूर्वं पद्मप्रभं तं प्रणमामि नित्यं ॥ ६ ॥ नरेंद्रसर्पेश्वरनाकनाथैर्वाणी महार्घ्या जगृहे स्वचित्ते । यस्याऽऽत्मबोधः प्रथितः सभायामहं सुपार्श्वं सततं नमामि ॥ ७ ॥ सप्रातिहार्यातिशयप्रपन्नो गुणप्रवीणो हतदोषसंगः । भूलोकमोहांधतमःप्रदीपश्चंद्रप्रभं तं प्रणमामि नित्यं ॥ ८ ॥ गुप्तित्रयं पंचमहाव्रतानि पंचप्रकाराः समितिश्च येन । बभाण यो द्वादशधा तपांसि तं पुष्पदंतं प्रणमामि नित्यं ॥ ९ ॥ ब्रह्मव्रतांतो जिननायकेनोत्तमक्षमादिर्दशधापि धर्मः । येन प्रयुक्तोऽथ सुबंधुबुद्ध्या । तं शीतलं तीर्थकरं नमामि ॥ १० ॥ गणे जनानंदकरे वरं ते विध्वस्तकोपे प्रशमैकचित्ते । यो द्वादशांगं श्रुतमादधेऽहं सच्छ्रेयसं तं प्रणमामि नित्यं ॥ ११ ॥ मुक्त्यंगनायै रचितं विशालं रत्नत्रयं शेखरताय येन । यः कंठमासाद्य बभूव सेष्टस्तं वासुपूज्यं प्रणमामि नित्यं ॥ १२ ॥ ज्ञानी विवेकी परमस्वरूपी ध्यानी व्रती प्राणिहितोपदेशी । मिथ्यात्वघाती शिवसौख्यभोजी बभूव यस्तं विमलं नमामि ॥ १३ ॥ अभ्यंतरं बाह्यमनेकधाम परिग्रहं सर्वमयांचकार । यो मार्गमुद्दिश्य हितं जनानां वृवे जिनं तं प्रणमाम्यनंतं ॥ १४ ॥ सार्धं पदार्था नव सप्ततत्त्वैः पंचास्तिकायाश्च न कालकायः । षड्द्रव्यनिर्णीतिरलोकयुक्ता येनोदिता तं प्रणमामि धर्मं ॥ १५ ॥ यश्चक्रवर्ती भुवि पंच-

मोऽभूच्छ्रीनंदनो द्वादशमो गुणानां । निधिः प्रभुः षोडशमो जिनेंद्रस्तं शांतिनाथं प्रणमामि नित्यं ॥ १६ ॥ प्रशंसिनो यो न बिभर्ति हर्षं विरोधिनो यो न करोति रोषं । शीलव्रतब्रह्मपदंगतो यस्तं कुंथुनाथं सततं नमामि ॥ १७ ॥ न संस्तुतो न प्रणुतः सभायां यः सेवितोऽतर्गणपूरणायाः । पदच्युते केवलिभिर्जिनस्य देवाधिदेवं प्रणमाम्यरं तं ॥ १८ ॥ रत्नत्रयं पूर्वभवांतरे यो व्रतं पवित्रं कृतवानशेषं । कायेन वाचा मनसाऽपि शुद्धं तं मल्लिनाथं प्रणमामि नित्यं ॥ १९ ॥ ब्रुवन्नयं सिद्धपदाय वाक्यमित्यग्रहीद्यः स्वयमेव नित्यं । लौकांतिकेभ्यः स्तवनं निशम्य वंदे जिनेंद्रं मुनिसुव्रतं तं ॥ २० ॥ विद्यावते तीर्थकराय यस्मादाहारदानं लभते विशेषात । गृहे नृतस्याऽजनि रत्नवृष्टि स्तं नौमिनाथं शरणं व्रजामि । २१ ॥ राजीमतीं यः प्रविहाय मोक्षान् स्थितीचकाराऽपुनरागमाय । जीवेषु सर्वेषु दयां दधान स्तं नेमिनाथं प्रणमामि नित्यं ॥ २२ ॥ सर्पाधिराजः कमठारितो यो ध्यानस्थितस्यैव फणावितानैः । यस्योपसर्गं निरवर्तयत तं । नमामि पार्श्वं महतादरेण ॥ २३ ॥ भवार्णवे जंतुसमूहमेनमाकर्षयामास हि धर्मपोतात । मज्जंतमुद्दशमयेन सोऽपि तं वीरनाथं प्रणमामि भक्त्या ॥ यो धर्मं दशधा करोति पुरुषः स्त्री वा कृतोपस्कृतं । सर्वज्ञध्वनिसंभवं त्रिकरणव्यापारशुध्यानिशं ॥ भव्यानां जयमालया विमलया पुष्पांजलिं दापया । नित्यं स श्रियमातनोति सकलस्वर्गापवर्गस्थितेः ॥ पुष्पांजलिः ॥ इति स्वयंभूः ॥ इति दशलक्षणपूजा समाप्ता ॥

## ॥ अथ अनंतद्वारप्राणप्रतिष्ठाक्रमः ॥

अपवित्रः पवित्रो वा सुस्थितो दुस्थितोऽपि वा । ध्यायेत् पंचनमस्कारं सर्वपापैः प्रमुच्यते ॥ १ ॥ अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा । यः स्मरेत् परमात्मानं स बाह्याभ्यंतरे शुचिः ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः असिआउसा मम सर्वांगशुद्धिं करोमि स्वाहा । सर्वांगशोधनं ॥ देवेंद्रवंद्यमभिवंद्य विशोध्य हस्तावीर्यापथस्य परिशुद्धिविधिं विधाय । सद्वज्रपंजरगतकृतसिद्धभक्त्या देवं समर्च्य सकलीकरणं करोमि ॥ ॐ ह्रीं असुजर सुजर भव २ हस्तशुद्धिं करोमि स्वाहा ॥ हस्तप्रक्षालनं ॥ ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः नमोऽर्हते भगवते श्रीमते समस्तगंगासिंध्वादिनदीनद-तीर्थजलं भवतु स्वाहा ॥ ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं श्रावय २ सं २ क्लीं २ ब्लूं २ द्रां २ द्रीं २ द्रावय २ हंझंझ्वींक्ष्वीं हं सः स्वाहा ॥ इत्यमृतस्नानमंत्रः ॥ अद्याऽभवत् सफ-लता नयनद्वयस्य । देव त्वदीयचरणांबुजवीक्षणेन ॥ अद्य त्रिलोकतिलक प्रतिभासते मे । संसार-वारिधिरयं चुलकप्रमाणं ॥ अद्य मे क्षालितं गात्रं नेत्रे च विमलीकृते । स्नातोऽहं धर्मतीर्थेषु जिनेंद्र तव दर्शनात् ॥ अपराजितमंत्रोऽयं सर्वविघ्नविनाशनः । मंगलेषु च सर्वेषु प्रथमं भवति मंगलं ॥ ५ ॥ एस पंच णमोकारो सव्वपापपणासणो । मंगळाणं तु सव्वेसं पढमं होइ मंगळं ॥ ॐ चत्तारि मंगळं । अरहंता मंगळं । सिद्धा मंगळं । साहू मंगळं । केवळिपण्णंतो धम्मो मंगळं ॥

चत्तारि लोगुत्तमा। अरहंता लोगुत्तमा। सिद्धा लोगुत्तमा। साहू लोगुत्तमा। केवलिपण्णत्तो धम्मोलोगुत्तमा॥ चत्तारि सरणं पव्वज्झामि। अरहंते सरणं पव्वज्झामि। सिद्धे सरणं पव्वज्झामि। साहू सरणं पव्वज्झामि। केवलिपण्णत्तो धम्मो सरणं पव्वज्झामि॥ ॐ नमोऽर्हते स्वाहा॥ पडिक्कमामि भन्ते। ईरियावहियाए। वीराहणाए। अणागुत्ते। आइगमणे। णिग्गमणे। ठाणे गमणे। चक्कमणे। पाणुग्गमणे बीजुग्गमणे हरिदुग्गमणे। उच्चारपस्सवणखेळसिंहाणाए। वियडिपइट्ठावणियाए। जे जीवा। एइंदिया वा बीइंदिया वा तीइंदिया वा। चउरिंदिया वा। पंचेंदिया वा। णोल्लिदा वा। किल्लिदा वा॥ संघट्टिदा वा। संघादिदा वा। ओद्धाविदा वा। परिधाविदा वा। किरिंछिदा वा लेस्सिदा वा। छिंदिदा वा। भिंदिदा वा। ठाणदो वा। ठाणचक्कमणदो वा। तस्स उत्तरगुणं। तस्स पायछित्तकरणं। तस्स विसोहीकरणं। णमोकारं करेमि। तावकायं। पावकम्मं। दुच्चरीयं वोसरामि॥ ॐ णमो अरहंताणं। णमो सिद्धाणं। णमो आइरियाणं। णमो उवज्झायाणं। णमो लोए सव्वसाहूणं॥ ॐ नमः परमात्मने नमोऽनेकान्ताय शांतये॥ ईर्यापथे प्रचलताद्य मया प्रमादादेकेंद्रियप्रमुखजीवनिकायबाधाः॥ निर्वर्त्तिता यदि भवेदयुगांतरीक्षा मिथ्या तदस्तु दुरितं गुरुभक्तितो मे॥ १॥ इच्छामि भन्ते ईरियावहमालोचेउं। पुव्वुत्तरदक्खिणपच्छिमचउदिसु विदिसासु। विहरमाणेण। जुगुन्तरदिट्ठिणा दट्ठव्वा। डवडव

चरियाए । पश्चाद्दर्शनेण पाणभूदजीवसंताणं । एदेसिं उवघादो कदो वा । कारिदो वा । किरंतो वा । समणुमणिय । तस्समिच्छामि दुक्कडं ॥ पापिष्टेन दुरात्मना जडधिया मायाविना लोभिना । रागद्वेषमलीमसेन मनसा दुष्कर्म यन्निर्मितं ॥ त्रैलोक्याधिपते जिनेंद्र भवतः श्रीपादमूलेऽधुना । निंदापूर्वमहं जहामि सततं निर्वृत्तये कर्मणां ॥ ८ ॥ ईर्यापथशोधनं ॥ अतिनिर्मलमुक्ताफलल-लितं यज्ञोपवीतमतिपूतं । रत्नत्रयमिति मत्वा करोमि कलुषापहरणमाभरणं ॥ ॐ ह्रीं सम्यग्द-र्शनज्ञानचारित्राय नमः स्वाहा । यज्ञोपवीतसंधारणं ॥ ९ ॥ (या मंत्रानें यज्ञोपवीत धारण करणें.) रत्नत्रयांगमुपवीतमुरस्यथांगे देशव्रतस्य वसुकंकणमत्र हस्ते । ब्रह्मव्रतांगमधुना स्वकटौ च मौंजीं धृत्वाऽऽरभे जिनमखं मम दीक्षितोऽर्हन् ॥ दीक्ष्यचिन्होद्वाहनाय कंकणबंधनं ॥ १० ॥ (या मंत्रानें कंकण बांधणें.) अणुव्रतं पंच गुणव्रतं त्रयं शिक्षाव्रतं चेति चतुर्विधं मतं । गुरूपदिष्टं विमलं मदाऽहं दृढं दधे पंचगुरून् प्रणम्य ॥ अणुव्रतपंचकं गुणव्रतत्रयं शिक्षाव्रतचतुष्टयं अर्हत्सिद्धाचार्योपा-ध्यायसर्वसाधून साक्षीकृत्य सम्यक्त्वपूर्वकं सुव्रतं दृढव्रतं समारूढं मे भवतु मे भवतु स्वाहा ॥ यज्ञोचितं व्रतविशेषमपोह्य निश्चन् यद्दा प्रतोद्भमहितः स्वयमेव रावात् । एतानि तानि भगवन् जिनयज्ञदीक्षाचिन्हान्यथेश विसृजामि गुरोः पदाग्रे ॥ एतत्पठित्वा यज्ञोपवीतादियज्ञदीक्षाचि-न्हानि गुरुपादमूले विन्यस्य नमस्येत ॥ इति यज्ञदीक्षाविसर्जनं (या मंत्रानें गुरुपदीं यज्ञदीक्षा

विसर्जन करणें.) ॐ ऱ्हीं नमः सर्वदोषविनिर्मुक्तेभ्यः स्वाहा । कौतुकसूत्रं यजमानादिर्निक्षिपेत् ॥ (या मंत्रानें कंकण सोडणें.) ततो गुरोरनुज्ञया शांतिभक्तिं निष्ठापयेत् ॥ (कंकण सोडल्यानंतर गुरूच्या आज्ञेनें शांतिभक्ति करणें.) ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं श्रावय २ अर्हं झं झ्वीं क्ष्वीं हं सः स्वाहा। असिआउसा इदमनंतद्वारग्रंथिर्जलेन समस्तदोषपरिहारार्थं कुरु २ स्वाहा । द्वारप्रक्षालनं ॥ (या मंत्रानें पाण्यानें द्वार धुणें.) ॐ ऱ्हीं श्रीं क्लीं ऐं अर्हं नमोऽर्हते भगवते त्रैलोक्यनाथाय सर्वनृसुरासुरपूजिताय अनंतदर्शनाय अनंतवीर्याय अनंतसुखाय अनंततीर्थकराय नमः स्वाहा ॥ (या मंत्रानें दुधानें द्वार धुणें व त्यास सुगंध गंधाचा लेप करणें.) ॐ ऱ्हीं अनंतचतुष्टयात्मकाय अनंततीर्थंकराय नमः स्वाहा ॥ (या मंत्रानें देवापुढें ठेवलेल्या यंत्रावर तें द्वार ठेवणें.) ॐ वृषभ अजित शंभव अभिनंदन सुमति पद्मप्रभ सुपार्श्व चंद्रप्रभ पुष्पदंत शीतल श्रेयांस वासुपूज्य विमल अनंता इति ॥ (याप्रमाणें १४ तीर्थंकरांचीं नावें घेऊन त्या द्वाराच्या गांठीस हात लावणें.) या रीतीनें अनंतद्वाराची स्थापना करणें.

## ॥ अथ प्राणप्रतिष्ठामंत्रः ॥

ॐ आँ क्रों ऱ्हीं असिआउसा यरलवशषसह हं सः त्वगस्रमांसमेदोऽस्थिमज्जाशुक्रादिधातवः देवदत्तानां प्राणा देवदत्तानां जीवा इह स्थितसर्वेंद्रियाणि कायावाग्मनचक्षुःश्रोत्रमुखजिव्हाः । स्थापय २

इदमनंतद्वारग्रंथि वारिपूर्णघटं शब्दस्पर्शरूपरसगंधवर्णप्राणापानव्यानोदानसमाननागकूर्माकृतय. कालसंप्राणाः सर्वप्राण इहैव प्राण आशु आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठः स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ ॐ नमोऽनंतनाथाय सर्वसुखसौ-ख्याय चिरकालं नंदंतु वर्धंतु वज्रमयं करोमि कुर्वंतु स्वाहा ॥ ( येथें या मंत्रानें २७ पांढरीं फुलें घालून २७ वेळां जप करणें. ) ॐ नमोऽर्हते भगवते अणंतो अणंतसिज्झदु मे भगवतो महाविज्जा महाविज्जा अणंते अणंतकेवळिए अणंतकेवळिणाणे अणंतकेवळिदंसणे अणुपुज्जवासणे अणंते अणंतागमकेवळि स्वाहा ॥ ( येथें या मंत्रानें १०८ पांढरीं फुलें घालून तितक्याच वेळां जप करणें. ) ॐ नमोऽर्हते भगवते अनंततीर्थंकराय ॐ ह्रीं श्रीं क्लीं ऐं अर्हं नमः सर्वशांतिं कुरु २ तुष्टिं पुष्टिं सौभाग्यमायुरारोग्यमिष्टिं कुरु २ वषट् स्वाहा ॥ ( या मंत्रानें नवें द्वार बांधणें. ) ॐ ह्रीं श्रीं क्लीं ऐं अर्हं नमः सर्वबंधनविनिर्मुक्ताय अनंतसुखप्रदाय नमः स्वाहा ॥ ( या मंत्रानें जुनें द्वार सोडणें. ) ॐ निःश्रेयसेऽस्मै दत्तादानं फलं भवेदायुष्मान् भवेन्नित्यं ( या मंत्रानें दान देणें. ) याप्रमाणें अनंतद्वाराची प्राणप्रतिष्ठा करणें.

## ॥ अथ अनंतत्रयोदशीपूजा ॥

अनंततीर्थकराष्टकम् ॥ अनंततीर्थकर्तारं हरिषेणमुनेःसमम् । स्थापये विधिना भक्त्या जंतूनां सुखदायकं ॥ १ ॥ ॐ ऱ्हीं अनंततीर्थकर अत्र एहि २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ गंगादितीर्थभवनिर्मलवारिपूरैर्भृंगारनालगलितैः शिशिरैर्मनोज्ञैः । संसारघोरपरितापनिवारणार्थं प्राचाम्यनंतजिनराजमहं त्रिशुद्ध्या ॥ ॐ ऱ्हीं नमोऽर्हते भगवते श्रीमते श्रीमदनंततीर्थकराय अनंतज्ञानाय अनंतदर्शनाय अनंतवीर्याय अनंतसुखात्मकाय नमः जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीखंडकुंकुमहिमादिसुगंधवर्गैरंधीकृतालिनिकरैः सुरभीकृताशैः । संसा० ॥ ॐ ऱ्हीं न० ॥ गंधं ॥ २ ॥ शुभ्रैरिवेंदुकिरणैरिवपुण्यपुंजैः कांतैरखंडकलमाक्षतपुण्यपुंजैः । संसा० ॥ ॐ ऱ्हीं न० ॥ अक्षतान् ॥ ३ ॥ जातीजपाबकुलकेतकिमल्लिकाद्यैः पुष्पैर्भ्रमद्भ्रमरसंकुलशोभमानैः । संसा० ॥ ॐ ऱ्हीं न० ॥ पुष्पं ॥ ४ ॥ क्षीराज्यचारुसितसंयुतपायिकाद्यैः सौवर्णपात्ररचितैश्चरुकैः समग्रैः । संसा० ॥ ॐ ऱ्हीं न० चरुं ॥ ५ ॥ कर्पूरतैलपरिकल्पितदीपदीपैर्ध्वस्तांधकारनिकरैरिव भानुपादैः । संसा० ॥ ॐ ऱ्हीं

१ सकलीकरण, यज्ञदीक्षा, पंचकुमार, क्षेत्रपाल, पुण्याहवाचन, दशदर्भ, भूम्यर्चन, पचचूर्ण, द्वारपाल, दशदिक्पालक, महस्नान, पंचपूजा व नंदेवता या सर्वपूजा प्रथम करून नंतर अनंततीर्थकरपूजा करणें.

न० दीपं ॥ ६ ॥ कृष्णागरुप्रभृतिसंभवधूपवृंदैर्व्याप्ताखिलप्रविदिशावलयैर्विशुद्धैः । संसा० ॥ ॐ ह्रीं न० ॥ धूपं ॥ ७ ॥ द्राक्षाकपित्थपनसादिफलैः प्रशस्तैरिष्टप्रदैर्जनमनोनयनाभिरामैः । संसा० ॥ ॐ ह्रीं न० ॥ फलं ॥ वार्गधाक्षतसुपुष्पवस्तुभिरलं सिद्धार्थदूर्वादिभिर्द्रव्यैश्चोद्धसुवर्णपात्ररचितं कांतं महार्घ्यं मुदा । गीर्वाणाधिपपूजितप्रतिमहाबोधप्रभाभासुरं मुक्तिश्रीमदनंतनाथममलं प्रोच्चारयामि स्तुतं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं श्रीमदनंततीर्थकराय ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः असिआउसा मम सर्वशांतिं कांतिं तुष्टिं पुष्टिं सौभाग्यमायुरारोग्यमिष्टसिद्धिं कुरु २ सर्वविघ्नविनाशनं कुरु २ समस्तरोगापमृत्युपरिहारं कुरु २ स्वाहा ॥ अर्घ्यं ॥ ९ ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ जयमाला ॥

जीवस्थानचतुर्दशप्रकृतयः पूर्वाणि रत्नानि वै प्रत्येकं च चतुर्दशप्रगुणिता ग्रंथौ शुभेऽनंतके । भूता मार्गणका अजीवसहिता ग्रंथा गुणस्थानके नद्यो रज्जुगुणप्रकीर्णकशुभाः कुर्वंतु मे मंगलं ॥ १ ॥ विराग विरंग विभोग विरोह । विचोध विदेह विगेह विमोह ॥ विमान वियान विगाय विदंत । प्रसीद भदंत सदात्मननंत ॥ २ ॥ विमाय विकाय विजाय विदोष । विलेप विशेष विरोष विवोष ॥ निराश विपाश विनाश विकांत प्रसी० ॥ ३ ॥ विखंडितकाम कलंकविदूर । कषायचतुष्टयभंजनशूर ॥ भवांबुधितारणपोत निरंत प्रसी० ॥ ४ ॥ विबोध विरोध विशोक

विलोक । विशुद्ध सुसिद्ध विबोधितलोक ॥ विदार विहार विपाटितचिंत । प्रसी० ॥ ५ ॥ 
विशल्य विपात्र वितंत्र वियंत्र । निराकृतदुर्मतदुष्टकुतंत्र ॥ विकोप विरूप विताप विदंत । प्रसी० ॥ ६ ॥ असंख्यगुणार्णववर्तितनाद । विदाटितदुःखदकुत्सितवाद ॥ विदारितसेवकपाश सुशांत । प्रसी० ॥ ७ ॥ चतुर्दशलोकितजीवसमास । नदीमलरत्नविचारधराश ॥ हृषीकमृगप्रति-दंडकृतांत । प्रसी० ॥ ८ ॥ जलाग्निविशाल्यकुविघ्नविनाश । नरामरनागसुपूजितवास ॥ अनंतभवो-द्भवदुःखजरांत । प्रसी० ॥ ९ ॥ गजेंद्रमृगेंद्रफणेंद्रनिकार—विकारनिवारणपुष्टविचार ॥ प्रकासि-तजीवनिकायवितांत । प्रसी० ॥ १० ॥ घत्ता ॥ यस्माद्राज्यसुखं धनं सुरपदं पुत्रः सुकीर्तिर्गुणः । शत्रूणां विजयः सुकांचनचयो मुक्ताफलं रत्नकं ॥ मित्राणां वनितागणस्य सुखदः स्यात्संगमस्तत्र सद्भव्यानां भवहानये प्रभवतात्वानंनसंज्ञाव्रतं ॥ अर्घ्यं ॥ ११ ॥ विप्रोऽभूदिह सोमशर्मसुभगः श्रीसिंहनादंदश्रुते । मार्गे तेन विलोकितो गुणनिधिः श्रीसिंहसेनोद्वहः । तस्मात्प्राप्तविधिश्च तेन तु दिनं तुर्यगतः सौख्यभाक् । योऽसौ श्रीविजयो मलेन रहितः कुर्यात्स वो मंगलं ॥ इत्याशीर्वादः ॥ इति अनंतत्रयोदशीपूजा समाप्ता ॥

## ॥ अथ अनंतचतुर्दशीपूजा ॥

वंदित्वा विदुषां वरं जिनवरं शेषं तमर्हत्परं । प्राप्त्यै दिव्यधियोऽस्य सिद्धमहिमां श्रीशारदां सारदां ॥ कार्यस्यार्यवरस्य धैर्यजितभूपेशः पदाब्जद्वयं । कृत्वा तीर्थकृतामसाववितथः पूजा-

क्रमः कथ्यते ॥ १ ॥ कृत्वा पुण्यपयोभिरंगममलं धृत्वा वरोत्रासमा । मग्रोमाधिकृतां सुभूषणयुतैः संपूज्यवस्यामला ॥ मर्त्यैरर्थपरैः सुभाजनमतां मांगल्यमुख्यामसौ । वाक्कायाशयशुद्धितो हितकरः संपूज्यतां श्रीजिनः ॥ २ ॥ प्रकृतक्रमविधिविधानार्थमर्चनापीठाग्रतः पुष्पांजलिं क्षिपेत् ॥ ( येथें अर्चनापीठापुढें पुष्पांजलि करणें. ) श्रीमद्ध्यानविधानमानसकलस्याद्वासना संन्यधात् । पाशान्मुक्तसदात्मकान् भवभवसंतोषसंपोषितान् ॥ चर्चितोज्ज्वलजान् समंत्रदरसास्वादानभिस्थाप्य तान् । श्रेयोर्हस्यधिपान् यजेऽत्र जिनराड्ंसानर्हिमानहं ॥ ३ ॥ श्रीवृषभादितीर्थंकरसमुदायपूजाप्रतिज्ञापनाय श्रीजिनप्रतिमोपरि पुष्पांजलिमावर्षेत ॥ ( येथें श्रीजिनप्रतिमेवर पुष्पांजलि करणें. ) मलयरुहलुलिततंडुलपुष्पैरधिवासनं जिनेंद्रस्य । संवौषट् ठठ वषडिति पल्लवमंत्रैः स्थितिकरणं कुर्वे ॥ ४ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं वृषभादिचतुर्विंशतितीर्थंकरा अत्र एतैत संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सान्निहिता भवत २ वषट् स्वाहा आह्वानस्थापससन्निधीकरणं ॥

## ॥ अथाष्टकम् ॥

श्रीमज्जिनेंद्रामलकीर्तिगौरैर्मंदाकिनीनिर्झरवारिपूरैः अंभोजाकिंजल्करजःपिशंगैर्यजे चतुर्विंशतितीर्थनाथान् ॥ ॐ ह्रीं वृषभादिचतुर्विंशतितीर्थंकरेभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ तुषारशीतांशुमरीचिशुभ्रश्रीचंदनैः कुंकुमयुक्तमिश्रैः । संतोषपीयूषशरीरभाजो यजे० ॥ ॐ ह्रीं वृ० ॥

गंधं ॥ २ ॥ अक्षुण्णसौख्यामलबीजरूपैः शाल्यक्षतैरिंदुकलावलक्षैः । अनन्यसाधारणकीर्तिकांतान् यजे० ॥ ॐ ह्रीं वृ० ॥ अक्षतान् ॥ ३ ॥ जातीजपापाटलिभिर्विराजीमंदारमालाबकुलादि-पुष्पैः । श्रेयःश्रियो मंगलहारभूतान् यजे० ॥ ॐ ह्रीं वृ० ॥ पुष्पं ॥ ४ ॥ प्राज्याज्यसिध्दा-मृतपिंडभक्ष्यैः शाकैरनेकैः सुरभिप्रपूतैः । अनंतसौख्यामृतपानतृप्तान् यजे० ॥ ॐ ह्रीं वृ० ॥ चरुं ॥ ५ ॥ दृष्टिप्रियैरुज्वलरत्नदीपैः सुरत्नसिद्धैर्मणिभाजनस्थैः । स्वकीयदिव्यांगमरीचिमग्नान् यजे० ॥ ॐ ह्रीं वृ० ॥ दीपं ॥ ६ ॥ कालाहिदेहाकृनिखांतराले व्यापत्सुधूपैः सुरभीकृताशैः । इष्टार्थसिद्धयै शिवतातिभक्त्या यजे० ॥ ॐ ह्रीं वृ० ॥ धूपं ॥ ७ ॥ जंबीरजंबूवरबीजपूरद्राक्षाम्र-पूगीफलनालिकेरैः । सुरेंद्रचूडांशुविलग्नपादान् यजे चतुर्विंशतितीर्थनाथान् ॥ ॐ ह्रीं वृषभादिचतु-र्विंशतितीर्थंकरेभ्यः फलं निर्वपामि स्वाहा ॥ ८ ॥ जलादिसद्द्रव्यकृतैरनर्घ्यैर्बलाहकैर्मंगलमंगलार्घ्यैः । रजो रहस्यं रहसः सुधान्यैः ॥ यजे० ॥ अर्घ्यं ॥ ९ ॥ जंबूद्वीपे भारतक्षेत्रमुख्यश्रीतीर्थेशामांघ्रिपीठो-पकंठे ॥ देवेंद्रार्च्यश्रीपदां संतनोमि संसारार्तेः शांतये शांतिधारां ॥ शांतिधारां ॥ आदिनाथोऽस्तु नः स्वस्तिः स्वस्तिः स्यादजितेश्वरः । शंभवो भवतु स्वस्ति भूयात् स्वस्त्यभिनंदनः ॥ १ ॥ अस्तु वः सुमतिः स्वस्ति पद्माभः स्वस्ति जायतां ॥ सुपार्श्वः स्वस्ति भवतां स्वस्ति स्याच्चंद्रलां-छनः ॥ २ ॥ सतां स्वस्त्यस्तु सुविधिर्भवतु स्वस्ति शीतलः । श्रेयान् संपद्यतां स्वस्ति स्वस्त्यस्तु

वसुपूज्यजः ॥ ३ ॥ राज्ञोऽस्तु विमलः स्वस्ति स्वस्ति भूयादनंतजित् ॥ भूयाद्धर्मजिनः स्वस्ति शांतेशः स्वस्ति जायतां ॥ ४ ॥ संघस्य कुंथुः स्वस्त्यस्तु भवतु स्वस्त्यरप्रभुः । स्वस्ति मल्लिजिनेंद्रोऽस्तु स्वस्त्यस्तु मुनिसुव्रतः ॥ ५ ॥ जगत्यस्तु नमिः स्वस्ति स्वस्ति स्यान्नेमिनायकः । स्वस्ति पार्श्वजिनो भूयात् स्वस्ति सन्मति रस्तु मे ॥ ६ ॥ अस्मिन्निमं स्वस्त्ययनमेकभक्तिभराद्दधे । स्वस्तिमंतः स्वयं शश्वत् संतु स्वस्त्ययनं जिनाः ॥ पुष्पांजलिः ॥ ७ ॥

## ॥ अथ जयमाला ॥

वंदे तानमरेश्वराः परिणमन्मौलीद्धमौलिस्थिताः । स्रव्यास्तन्मकरंदरेणुभिरतो गौरं गरिष्ठं सदा ॥ रेखां तत्र ध्वजांकुशप्रविलसच्चीर्नं वरं चक्रिरे । येषां भक्तिभरेण पादविमलं लोकत्रयाधीशिनां ॥ १ ॥ वृषभं वृषभासुरवृषपूज्यं । त्रिवृजिनमजितं जिनवरराजं ॥ शंभवमभिनवघनभाद्दार्ष्टिं । नंदितजनमभिनंदनमिष्टिं ॥ १ ॥ सुमतिं सुमतिदयापरकांतं । पद्मप्रभमभयं विगतांतं ॥ श्रीसुपार्श्वमपपाशमहेशं । चंद्रप्रभमभिहतभवपाशं ॥ २ ॥ सुविधिं विधुविभुमभिवंदेऽहं । शीतलमपमलगुणगणगेहं ॥ श्रेयोजिनमनुदिनमपदोषं । वसुपूज्यजमजमजरारोषं ॥ ३ ॥ विमलं विमलकमलदलनेत्रं । श्रीमदनंतजिनं सुचरित्रं ॥ धर्मं धर्मोन्नतिशर्माणं । शांतं शांतिजिनेश्वरमाणं ॥ ४ ॥ कुंथुं कुंथुदयाप्रतिपालं । अरजिनवरमजरं शशिभालं ॥ मल्लिं शल्यहरं जिनराजं ।

सुव्रतपं मुनिमुव्रतराजं ॥ ६ ॥ नमिजिनमामिताबलकलगात्रं । नेमिं नौमि सुकरुणापात्रं ॥ पण धरनुतमिह पार्श्वजिनेशं । वीरं मारकरींद्रमृगेंद्रं ॥ ७ ॥ संसारोद्भवदुःखविनाशं । संसारार्तिभिदं विविनाशं ॥ वसुगुणमपमलबोधनिदानं । लोकत्रयशिरसि कृतवासं ॥ घत्ता ॥ अमितगुणगरिष्ठं धारयेत् सज्जनेष्टं । विगतकलिमलौघं वर्णमुक्ताफलौघं ॥ सुहृदविबुधदेवेंद्रार्च्यतीर्थेशिनां यो । विरचितनुतिमालो मुक्तिकांताप्रियः स्यात ॥ अर्घ्यं ॥ ९ ॥ इत्थं तीर्थाधिनाथा ये वृषभाद्या यदाऽऽदरात् । पुष्पांजलिप्रदानेन पूजिताः संतु शांतये ॥ इष्टप्रार्थनायै पुष्पांजलिः ॥ इति समुदायपूजा ॥

## ॥ अथ प्रत्येकपूजा ॥

साकेताधिपनाभिराजमरुदेव्योः पुत्रकः कांचनच्छायः पंचशतप्रमाणधनुरुच्छेदो जिनेंद्राग्रजः । उक्षास्यप्रियकामिनीपरिलसच्चक्रेश्वरीशोभितः ॥ शक्राधीश्वरचक्रचक्रिविनुतः संप्रार्च्यते प्राग्जिनः ॥ १ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं वृषभजिनदेव अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

विमलगंधसुवासितसारया परिमलोदधिनीरसुधारया । सकलदोषहरं वृषभेश्वरं प्रवियजे नतनाकिनरेश्वरं ॥ ॐ ह्रीं वृषभतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ सकलतापहरैः सुखदायकैर्मसृणकुं-

कुमामिश्रितचंदनैः । सकल० ॥ ॐ ह्रीं० ॥ गंधं ॥ कमलवासमुमिश्रिततंडुलैर्धवलमौक्तिकराशि-समानकैः । सकल० ॥ ॐ ह्रीं० ॥ अक्षतं ॥ ३ ॥ स्फुरितमालतिजातिसुचंपकैर्बकुलपाटलिपुष्प-सरोरुहैः । सकल० ॥ ॐ ह्रीं० ॥ पुष्पं ॥ ४ ॥ घृतसुमितपायसभक्ष्यकैः सकललोकसुखैकानि-केतनैः । सकल० ॥ ॐ ह्रीं० ॥ चरुं ॥ ५ ॥ कनककांतिसुभासितदीपकैर्मणिमयैरिव विश्वसुदी-पकैः । सकल० ॥ ॐ ह्रीं० ॥ दीपं ॥ ६ ॥ अगरुचंदनमिश्रितधूपकैः सकलकर्मविदाहकदक्षकैः । सकल० । ॐ ह्रीं० ॥ धूपं ॥ ७ ॥ रुचिरदाडिमसत्फलमोचकैः क्रमुकचोचकानिंबुकसत्फलैः । सकल० ॥ ॐ ह्रीं० ॥ फलं ॥ ८ ॥ सुगंधपुष्पाक्षततोयधूपैर्नैवेद्यदीपैर्वरसत्फलौघैः । श्रीशांतिदा-सेन सुशर्मवृद्ध्यै संपूज्यते श्रीजिनपादपद्मं ॥ ॐ ह्रीं० ॥ अर्घ्यं ॥ शांतिधारां ॥ ९ ॥ त्रिदश-राजपूजितं वृषभनाथमूर्जितं । कनककेतकैर्यजे भवविनाशकं जिनं ॥ पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

नताखंडलमौलीनां यत्पादनखमंडलं । खंडेंदुशेखरीभूतं नमस्तस्मै स्वयंभुवे ॥ १ ॥ स्वयंभुवा भूतहितेन भूतले समंजसज्ञानविभूतिचक्षुषा । विराजितं येन विधुन्वता तमः क्षपाकरेणेव गुणो-त्करैः करैः ॥ २ ॥ प्रजापतिर्यः प्रथमं जिजीविषुः शशास कृष्यादिषु कर्मसु प्रजाः । प्रबुद्धतत्वः पुनरद्भुतोदयो ममत्वतो निर्विविदे विदांवरः ॥ ३ ॥ विहाय यः सागरवारिवाससं वधूमिवेमां वसु-

धावधूं सतीं । मुमुक्षुरिक्ष्वाकुकुलादिरात्मवान् प्रभुः प्रवव्राज सहिष्णुरच्युतः ॥ ४ ॥ स्वदोषमूलं स्वसमाधितेजसा निनाय यो निर्दयभस्मसात्क्रियां । जगाद तत्वं जगतेऽर्थिनेऽजसा बभूव च ब्रह्मपदामृतेश्वरः ॥ ५ ॥ स विश्वचक्षुर्वृषभोऽर्चितः सतां समग्रविद्यात्मवपुर्निरंजनः । पुनातु चेतो मम नाभिनंदनो जिनो जितक्षुल्लकवादिशासनः ॥ ६ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ अथ जयमाला ॥

जय प्रथमजिनेश्वर महिपरमेश्वर । ईश्वर गुणगणमयसदन । जय नमितसुरासुर सकलसुखाकर जय जनतामयहरण ॥ १ ॥ जय आदिजिनेंद्र विशालरूप । जय पूजितचंद्रसुरेंद्रभूप ॥ जय नाभिनरेश्वरपुत्र सार । जय मरुदेवीसुत धर्मकार ॥ २ ॥ जय प्रथमधर्मप्रकाश वीर । जय प्रथमयोगीश्वर प्रथमवीर ॥ जय सेवितव्यंतरनाथराय। जय नमितसुधाकरभानुराय ॥ ३ ॥ जय ज्ञानरूप जय शर्मरूप। जय चंद्रवदन अकलंकरूप ॥ जय भव्यदयाकर भव्यहंस । जय प्रकटितशुभकरचारुवंश ॥ ४ ॥ जय प्रथमप्रजापते प्रथम ईश । प्रथमयतीश्वर प्रथमधीश ॥ जय गणधरयतिपतिसेव्यपाद । जय जलदसजलधरदिव्यनाद ॥ ५ ॥ जय पापतिमिरहरपूर्णचंद्र । जय दोषनिवारण आदिजिनेंद्र ॥ जय प्रथम तीर्थंकर प्रथमदेव । जय परमपुरुष कृतविबुधसेव ॥ घत्ता ॥ जय जिनसारं दर्शनसारं सारं केवलबोधमयं । वंदे भवतारं रहितविमारं शांतिदासब्रह्मकृतसुदयं ॥ अर्घ्यं ॥ सम्यग्धीरगुणै

रनंतगुणितैर्युक्ताः सुमाया धवाः । ये सिद्धा मलनाशका वसुगुणाः काव्योद्भवैः सप्तभिः ॥ सार्धं श्रीविजयादिभिः सुखकरैः सव्यैस्तरां निर्मला । जाताः श्रीगजपंथके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ साकेतापुरे नाभिराजमरुदेव्योर्जाताय कनकवर्णाय पंचशतधनुरुच्छेदाय वृषभलांछनाय गोमुखचक्रेश्वरीयक्षयक्षीसमेताय चतुरशीतिलक्षपूर्वायुष्काय कैलासपर्वते कर्मक्षयंगताय श्रीवृषभतीर्थंकराय नमस्कारं कुर्वे ॥ उदकचंदनतंदुलपुष्पकैश्चरुसुदीपसुधूपफलार्घ्यकैः । धवलमंगलगानरवांकुलैर्जिनगृहे जिननाथमहं यजे ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ अजिततीर्थंकरपूजा ॥

गजध्वजः कांचनकांतिकायो जितारिकांताविजयातनूजः । इक्ष्वाकुवंशांबुधिशीतभानुः संप्रार्च्यतेऽस्मिन्नजितो जिनेशः ॥ १ ॥ ॐ ऱ्हीं श्रीं क्लीं ऐं अर्हं अजिततीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

त्रिदशलोकनदीजलधारया सरसकेसरपिंजरसारया । अजितदेवपतिं जिननायकं प्रवियजे जिनपं सुखदायकं ॥ ॐ ऱ्हीं अजिततीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयभूधरसंभवचंदनै-

बंहुलकेशरपंकविमिश्रितैः । अजित० ॥ ॐ० ॥ गंधं ॥ २ ॥ कुमुदबांधवहारवदुज्ज्वलैः कलमजैर्वरको-टिसमाश्रितैः । अजित० ॥ ॐ० ॥ अक्षतं ॥ ३ ॥ सरसिजोत्पलचंपकमल्लिकाबकुलकुंदसुकेतकि-पुष्पकैः । अजित० ॥ ॐ० ॥ पुष्पं ॥ ४ ॥ प्रचुरगव्यसमन्वितशर्करामिलितपायसहव्यवरौदनैः । अजित० ॥ ॐ० ॥ चरुं ॥ ५ ॥ तरणिधामसमानमयूखकैः परिसुसंस्कृतरत्नसुदीपकैः । अजित० ॥ ॐ० ॥ दीपं ॥ ६ ॥ अनलसादसितागरुधूमकैः सजलनीरदसंहतिसन्निभैः । अजित० ॥ ॐ० ॥ धूपं ॥ नयनतोषकराम्रसुमोचकप्रमुखयोग्यसुपक्वफलोत्करैः । अजित० ॥ ॐ० ॥ फलं ॥ नीरा-मोदसुधामयाक्षतलसन्मंदारपुष्पोत्करैः । प्रोद्यच्चारुचरुप्रदीपविलसद्धूपैः फलैश्चार्चये ॥ श्रीमद्भतिमयं जनेंद्रमहितं श्रीचंद्रकीर्तिस्तुतं । कैवल्यात्मककामिनीकुचलनाशय्याधिरूढं श्रिये ॥ अर्घ्यं ॥ ९ ॥ एवं जिनेंद्रमभ्यर्च्य सुरसंदोहपूजितं । वार्धारां तु जगच्छांत्यै श्रीपीठाग्रे करोम्यहं ॥ शांतिधारां ॥ पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

यस्य प्रभावात्त्रिदिवच्युतस्य क्रीडास्वपि क्षीवमुखारविंदः । अजेयशक्तिर्भुवि बंधुवर्गश्चकार नामाऽजित इत्यवंध्यं ॥ १ ॥ अद्यापि यस्याजितशासनस्य सतां प्रणेतुः प्रतिमंगलार्थं । प्रगृह्यते नाम परं पवित्रं स्वसिद्धिकामेन जनेन लोके ॥ २ ॥ यः प्रादुरासीत् प्रभुशक्तिभूम्ना भव्याशयालीनक-

लंकशांत्यै । महामुनिर्मुक्तघनोपदेहो यथाऽरविंदाभ्युदयाय भास्वान् ॥ ३ ॥ येन प्रणीतं पृथु धर्मतीर्थं ज्येष्ठं जनाः प्राप्य जयंति दुःखं । गांगं हृदं चंदनपंकशीतं गजप्रवेका इव घर्मतप्ताः ॥ ४ ॥ स ब्रह्मनिष्ठः सममित्रशत्रुर्विद्याविनिर्वांतकषायदोषः ॥ लब्धात्मलक्ष्मीरजितो जितात्मा जिनः श्रियं मे भगवान् विधत्तां ॥ इति स्तोत्रार्घ्यम् ॥

## ॥ अथ जयमाला ॥

जय अजितजिनेश्वर सकलदुरितहर प्रतिबोधितत्रिभुवननिलय । जय ज्ञानदिवाकर सकलसुखाकर धर्ममयीकृतभूवलय ॥ १ ॥ जय अजितजिनेश्वर अजितनाथ । प्रतिबोधितबहुजन भव्यसार ॥ जय जितशत्रुसुत धीरधीर । जय विजयसेनासुत वीरवीर ॥ २ ॥ जय हेमवर्ण वरसारकाय । जय साडेचारशे धनुष काय ॥ जय बाहत्तरिलक्षसुपूर्व आयु । जय सेवत सुरनरइंद्रराय ॥ ३ ॥ तुह सेवे पातक सकल जाय । तुह सेवे व्यंतरनाथ राय ॥ तुह नामे विघ्नविनाश थाय । तुह नामे जीव सुमोक्ष जाय ॥ ४ ॥ सकल त्रिदशपतिवंद्यपाद । जय जलधरसमगंभीरनाद ॥ तुह नामे पामे सकलसिद्धि । तुह नामे पामे राजऋद्धि ॥ ५ ॥ तुह नामे पामे फणिहृदयहार । तुह नामे रयण सुऋद्धिपार ॥ तुह नामे नवनिधि होय सार । तुह नामे सागरतरणतार ॥ ६ ॥ तुह नामे शिवसुखरूपवाणि । तुह नामे रंभा मत्यवाणि ॥ तुह नामे घोडा हस्ति सार । तुह नामे

सुंदर गेह सार ॥ ७ ॥ तुह नामे शाकिनी भूत जाय । तुह नामे निर्मल काय थाय ॥ तुह नामे सेवे सकलभूप । तुह नामे पामे इच्छरूप ॥ ८ ॥ वत्ता ॥ जय अजितजिनेंद्रो नयनानंदो वंद्यो सकलभुवनमयः । जय द्वितीयजिनेंद्रो अदनविकंदो वंद्यो जगदानंदकरः ॥ अर्घ्य ॥ ९ ॥ ज्ञानाद्यै रघवातकैर्गुणगणैः संख्यातिगैर्भूषिता । रागद्वेषविमोहदोषनिचयैर्मुक्ताः पवित्रोद्यताः ॥ संयुक्तास्त्व-भयेन निश्चलगता मारस्य संमारिता । जाताः श्रीगजसंस्थके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ साकेतापट्टणे जितारिनृपविजयादेव्योर्जाताय सुवर्णवर्णाय गजलांछनाय पंचाश-दधिकशतचतुष्टयधनुरुच्छेदाय महायक्षरोहिणीयक्षयक्षीसमेताय द्वासप्ततिलक्षपूर्वायुष्काय संमेदगिरौ कर्मक्षयंगताय श्रीमदजिततीर्थंकराय नमस्कारं कुर्वे ॥ उदकचंदन इ० ॥ अर्घ्य ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ शंभवतीर्थंकरपूजा ॥

श्रावस्तिनाथो दृढराजसूनुः प्रज्ञप्तियक्षीत्रिमुखाधिनाथः । वाजिध्वजश्चारुसुवर्णवर्णः संप्रार्च्यते शंभ-वतीर्थनाथः ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं शंभवतीर्थंकर अत्र अवतर अवतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधी-करणं ॥

## ॥ अष्टकम् ॥

रत्नकुंभसुशास्त्रिपूरितगंधमिश्रितनारकै । जन्ममृत्युजरामरणभयवारणाय त्रिधामुदा । पापतापहरं परं वरदोषकर्दमशोषणं । शंभवस्य सुपूज्यकं वरपादपद्मयुगं यजे ॥ ॐ ह्रीं शंभवतीर्थकराय जलं निर्वपामि स्वाहा ॥ १ ॥ कुंकुमागरुचंदनैर्वरमलयजोद्भतशीतलैः । सुगंधद्रव्यविमिश्रितोदितनंदनैर्गुण-निर्मलैः । पाप० ॥ ॐ ह्रीं शं० ॥ गंधं ॥ २ ॥ तुषारपिंडसमानशुभ्रसुशालितंदुलपुंजकैः सूर्य-कांतिविखंडिदीर्घवराक्षतौघगुणाकरैः । पाप० ॥ ॐ ह्रीं शं० ॥ अक्षतं ॥ ३ ॥ सुमल्लिकोद्भसरो-जकुंदलवंगमालतिचंपकैः पारिजातकदंबकेतकिपुष्पवृष्टिसुमोहिनैः पाप० ॥ ॐ ह्रीं शं० ॥ पुष्पं ॥ ४ ॥ सद्यजातसुहेमभाजनसंस्थितैश्चरुमुत्तमैः पड्साग्वितमोदकश्रितदुग्धपायससेवकैः ॥ पाप० ॥ ॐ ह्रीं शं० ॥ चरुं ॥ ५ ॥ सुरेन्द्रनिर्मितदिव्यरत्नप्रदीपकैश्च मनोहरैर्भव्यकेवलबोधनोपमसू-र्यदीप्त्यधिकैर्वरैः । पाप० ॥ ॐ ह्रीं शं० ॥ दीपं ॥ ६ ॥ अगरुमागरुसमन्वितैरितदिग्मुखैर्वरधूपकैः कर्मकर्दमभेदनाय महाग्र्यहं दशाधोद्भवैः । पापतापहरं परं वरदोषकर्दमशोषणं । शंभवस्य सुपूज्यकं वरपादपद्मयुगं यजे ॥ ॐ ह्रीं शंभवतीर्थंकराय ॥ धूपं ॥ ७ ॥ दिव्यपक्वफलै रसान्वितकटकी-फलदाडिमैश्चोचमोचकपित्थजंबुसुनागवासिमधूकैः । पाप० ॥ ॐ ह्रीं शं० ॥ फलं ॥ ८ ॥ वना-दिमद्वस्तुचयैर्मनोज्ञैः सत्तूर्यनादैकलगीतनृत्यैः । शांतिजा शंभव जिननाथपदाब्जमूलेऽर्घ्यवरैर्मुदाऽहं ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ अथ स्तोत्रम् ॥

त्वं शंभवः संभवतर्षरोगैः संतप्यमानस्य जनस्य लोके । आसीरिहाकस्मिक एव वैद्यो वैद्यो यथा नाथ रुजां प्रशांत्यै ॥ १ ॥ अनित्यमत्राणमहंक्रियाभिः प्रसक्तमिथ्याध्यवसायदोषं । इदं जगज्जन्मजरांतकार्तं निरंजनां शांतिमजीगमस्त्वं ॥ २ ॥ शतह्रदोन्मेषचलं हि सौख्यं तृष्णामयाप्यायनमात्रहेतुः । तृष्णाभिवृद्धिश्च तपत्यजस्रं तापस्तदायासयतीत्यवादि ॥ ३ ॥ बंधश्च मोक्षश्च तयोश्च हेतुर्बंधश्च मुक्तश्च फलं च मुक्तेः । स्याद्वादिनो नाथ तवैव युक्तं नैकांतदृष्टेस्त्वमतोऽसि शास्ता ॥ ४ ॥ शक्रोऽप्यशक्तस्तव पुण्यकीर्तेः स्तुत्यां प्रवृत्तः किमु मादृशोऽज्ञः । तथापि भक्त्या स्तुतपादपद्म ममार्य देयः शिवसौख्यमुच्चैः ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

शंभवजिनेश्वर नमितसुरासुर ईश्वर यतिसेवितचरण । जय तृतियजिनंदो परमानंद छंद त्रिभुवनसुखकरण ॥ १ ॥ जय धर्मप्रकाशन देवदेव । जय अमरपतिकृतचरणसेव ॥ जय कामविभंजनपरमशूर । जय मोहविनाशनसबलशूर ॥ २ ॥ जय जिताग्दिढरथपुत्र शांत । जय सुषेणावरदेविमात ॥ जय चारशे धनुप उत्तुंग देह । जय वज्रवृषभनाराच देह ॥ ३ ॥ जय हेमवरण जगदीश काय । जय साठि सुपरवलक्ष आयु ॥ जय केवलबोधस्वरूप रूप । जय सेवत इंद्र

नरेंद्र भूप ॥ ४ ॥ जय परमपुरुष तूं परमज्योति । जय जगदानंद तूं विज्योति ॥ जय सकलतत्वविचार सार । जय सकलद्रव्यविचारधार ॥ ५ ॥ जय कर्मरहित विशुद्ध शुद्ध । जय ज्ञानपयोनिधि बुद्धबुद्ध ॥ जय शाकिनिभूतविनाशदक्ष । जय निर्मलबोध हतारिपक्ष ॥ घत्ता ॥ जय बोधनिदानं सुरकृतगानं ध्यानं सकलकुमतिहरणं । जय गतबहुमानं मुनिजनस्थानं शांतिदासब्रह्मनुतचरणं ॥ अर्घ्यं ॥ श्रीमद्दर्शनराजिता वृषकराः संसारविच्छेदका । मुक्तिश्रीवनिताविलाससुभगा दुर्दोषनिर्णाशकाः । भक्तानां सुखदायका हरिनुताः संगैः प्रमुक्ताश्च ये । जाताः श्रीगजपंथके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ सावंतीपत्तने दृढरथभूपतिसुषेणादेव्योर्जाताय सुवर्णवर्णाय चतुःशतधनुरुच्छेदाय श्रीमुखप्रज्ञमीयक्षयक्षीसमेताय अश्वलांच्छनाय षष्टिलक्षपूर्वायुष्काय संमेदगिरौ कर्मक्षयंगताय श्रीशंभवतीर्थंकराय नमस्कारं कुर्वे ॥ उदकचं० ॥ अर्घ्यं ॥

## ॥ अथ अभिनंदनतीर्थंकरपूजा ॥

संवरसिद्धार्थाभ्यां जातः कांचनसन्निभः । साकेतपुरपः पूज्यो वानरांकोऽभिनंदनः ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अभिनंदनतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

परमसिद्धसमीश्वरमुत्तमं परमहोदयमुख्यनिकेतनं । प्रवियजे जिनपं त्वभिनंदनं सकलपंकहरं क्षिति-वंदितं ॥ ॐ ह्रीं अभिनंदनतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ सुरभिवस्तुसमृद्धशरीरकं सुरभिदुग्धसमुज्वलशोणितं । प्रविय० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ कमलया परिमंडितविग्रहं कमलतुल्यसुदीर्घकरांबुजं । प्रविय० ॥ ॐ ह्रीं अ० ॥ अक्षतं ॥ ३ ॥ कुसुमबाणकरींद्रमृगाधिपं सकलभव्यचकोरसुधाकरं । प्रविय० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ धरणिपूज्यसुधारसनिःस्वनं विशदनिर्मलनूतनवधूज्वलं । प्रविय० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ विमलकेवलबोधसुभास्करं विकसदर्कविधूज्वलदेहकं । प्रविय० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ निखिलकर्मकुकाननपावकं सुभगभव्यमनोजविकासिनं । प्रविय० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ भजकसाधुजनेष्टफलप्रदं विदितसमस्ततत्वपदार्थकं । प्रविय० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥ परं सलिलधारया प्रबलगंध-पुष्पाक्षतैर्हविर्भिरथ दीपकैः सुरभिधूपकैः सत्फलैः । सुकामितसुखप्रदं सदाभिनंदनं तं जिनं महामि महिमान्वितं सकललोकवंद्यं मुदा ॥ अर्घ्यं ॥ शांतिधारां ॥ पुष्पांजलिः

## ॥ स्तोत्रम् ॥

गुणाभिनंदादभिनंदनो भवान् दयावधूं क्षांतिसखीमशिश्रियत । समाधितंत्रस्तदुपोपपत्तये द्वयेन नैर्ग्रंथ्यगुणेन चायुजत् ॥ १ ॥ अचेतने तत्कृतबंधजेऽपि च ममेदमित्याभिनिवेशकग्रहात । प्रभंगुरे

स्थावरानिश्चयेन क्षतं जगत्तत्वमर्जाग्रहत्त्वान् ॥ २ ॥ क्षुधादिदुःखप्रतिकारतः स्थितिर्न चेंद्रिया- र्थप्रभवाल्पसौख्यतः । ततो गुणो नास्ति च देहदेहिनो रितीदमित्थं भगवानजिज्ञपत् ॥ ३ ॥ जनोऽतिलोलोऽप्यनुबंधदोषतो भयादकार्येष्विह न प्रवर्त्तते । इहाऽप्यमुत्राऽप्यनुबंधदोषवित् कथं सुखे संसजतीति चाऽब्रवीत् ॥ ४ ॥ स चाऽनुबंधोऽस्य जनस्य तापिका तृष्णाभिवृद्धिः सुखतो न च स्थितिः । इति प्रभो लोकहितं यतो मतं ततो भवानेव गतिः सतां मता ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ अथ जयमाला ॥

जय अभिनंदनस्वामी तू मोक्षगामी नामी शिरसा चरण नमो । तू त्रिभुवनछंदो नयनानंदो जयमाल करी बहुदुःखगमो ॥ १ ॥ जय नगर आयोध्याधीश ईश सोमचंद्रवरराय ईश ॥ जय राणि सिद्धार्थादेविसार । जय सेवकरे बहु देवनार ॥ २ ॥ जय मास वैशाख शुभ शुक्लपक्ष । जिनगर्भमहोत्सव षष्टि दीन ॥ जय माघमास शुद्ध बारसजाणि । जय जन्मकल्याणिक सुखसु- खाणि ॥ ३ ॥ जय हेमवरण वर देह सार । जय साडतीनशे धनुष पार ॥ जय पंचाशत्पूरव लक्ष आयु ॥ जय सेवे नरपति मकुटराय ॥ ४ ॥ जय माघमास शुद्ध शर्मकार । जय बारस दिन ग्राह्यो तपसार ॥ जय पौष्यमास शुद्धपक्ष चंग । जय चउदशि केवलज्ञानरंग ॥ ५ ॥

जय समवसरण बहु भव्यतार । जय गणधर एकशो तीनि सार ॥ जय तीनि लाख यति सेव पाय । जय दिव्यध्वनि बहु भव्यसुखदाय ॥ ६ ॥ जय केवलि सोलसहस्र सार । अट्ठाणुंसत अवधिधार ॥ जय तीनि सहस्र सुर्तानि लाख । जय षट्शत गणनी सत्यभास ॥ ७ ॥ जय तीनि लाख श्रावक अतिचंग । जय पांच लाख श्रावीक मनरंग ॥ जय वैशाख शुद्ध सुषष्टि नद । जय मोक्ष गयो अभिनंद जिनिंद ॥ घत्ता ॥ जय अभिनंदनदेवह सुरकृतसेवह नासे जन्मजरामरण । जय धमसुदाता त्रिभुवनत्राता शांतिदासयतिसेवितचरण ॥ अर्घ्य ॥ सूक्ष्मेणा-निमनोहरेण महिताः स्वस्थादघच्छेदका । भक्तानां सुखदायका हरिनुताः संगैः प्रमुक्ताश्च ये । श्रीरामेण सुदर्शनेन कलिता मुक्त्यंगनावल्लभा । जाताः श्रीगजपंथके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ कोशलदेशे आयोध्यापट्टने प्रियसंवरनृपसिद्धार्थादेव्योर्जाताय सुवर्णवर्णाय पंचा-शदाधिकत्रिशतधनुरुच्छेदाय पंचाशल्लक्षपूर्वायुष्काय कापिलांछनाय यक्षेश्वरवज्रशृंखलायक्षयक्षीसमे-ताय संमेदागिरौ कर्मक्षयंगताय श्रीमदभिनंदनतीर्थेश्वराय नमस्कारं कुर्वे ॥ उदकचं० ॥ अर्घ्य ॥

## ॥ अथ सुमतितीर्थंकरपूजा ॥

सुमंगलामेघरथात्मजातो नाभेयवंशांबुधिपूर्णचंद्रः । कोकध्वजोऽष्टापदकांतिकायः संप्रार्थ्यतेऽस्मिन् सुमतिर्जिनेंद्रः ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं सुमतितीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा ।

ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापन-सन्निधीकरणं ॥

## ॥ अष्टकम् ॥

रत्नरंजितहेमकुंभभृदुद्घतीर्थजलैर्वरैर्विश्वजीवसुशीतलप्रददुःखशोकविनाशकैः । श्रीसुरोरगपूजितातुलसौख्यसंततिकारणं सुमतिनाथमहं यजे वरचक्रवाकसुलांच्छनं ॥ ॐ ह्रीं सुमतिजिनाय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयपर्वतवासवासितमिश्रिताष्टसुगंधकैः प्रथममंगलभाग्यकारणादिव्यपूज्यसुचंदनैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ गंधं ॥ २ ॥ अतिसुगंधसुशुभ्रसंयुततंदुलै रतिसुंदरै श्चंद्रकांतितुषारमौक्तिकसन्निभैर्वरपुंजकैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ अक्षतं ॥ ३ ॥ हेमचंपकजातिपंकजमालतीवरपुष्पकैर्मदवुर्गतगंधशीतलक्लेशतापविनाशकैः । श्रीसुरोरगपूजितातुलसौख्यसंततिकारणं सुमतिनाथमहं यजे वरचक्रवाकसुलांच्छनं ॥ ॐ ह्रीं सुमतिजिनाय ॥ पुष्पं ॥ ४ ॥ शर्करावृतमिश्रलड्डुकगारिकेड्डलिकाहवी-सद्रसान्वितपूरिकादिसुभक्ष्यकैश्च मनोहरैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ चरुं ॥ ५ ॥ पंचरत्नसुदीपकै रविकांतिसन्निभभान्वितै श्चंद्रिकादिसकाशसद्दशादिग्मुखाभिसमुज्वलैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ दीपं ॥ ६ ॥ अगरुचंदनसिल्हकादिकदशाविधोद्भवधूपकैः परिमलागतभृंगसंकुलशोभितैर्वृतदिग्मुखैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ धूपं ॥ ७ ॥ पनसदाडिमचारुकर्कटिसत्फलाम्रसुमोचकैर्नालिकेरसुनागवल्लिफलैर्वरैरतिपक्वकैः । श्रीसु० ॥ ॐ ह्रीं सु० ॥ फलं ॥ ८ ॥ नीरगंध-

विशालतंडुलकुलैः पुष्पोत्करैः श्रीजिनो। नैवेद्यैर्विविधैः सुदीपनिचयैर्धूपैः फलैर्दूर्वकैः॥ सिद्धार्थैर्वरमंगलै रभिमतैः श्रीहेमपात्रार्पितै। देवेंद्रैरभिपूजितः सुमतिरप्यर्घ्येण संपूज्यते॥ शांतिधारां। पुष्पांजलिः॥

## ॥ स्तोत्रम् ॥

अन्वर्थसंज्ञः सुमतिर्मुनिस्त्वं स्वयं मतं येन सुयुक्तिनीतं। यतश्च शेषेषु मतेषु नास्ति सर्वक्रियाकारकतत्वसिद्धिः॥ १॥ अनेकमेकं च तदेव तत्वं भेदान्वयज्ञानमिदं हि सत्यं। मृषोपचारोऽन्यतरस्य लोपी तच्छेषलोपोऽपि ततोऽनुपाख्यं॥ २॥ सतः कथंचित्तदसत्वशक्तिः खे नास्ति पुष्पं तरुषु प्रसिद्धं। सर्वस्वभावच्युतमप्रमाणं स्ववाग्विरुद्धं तव दृष्टितोऽन्यत॥ ३॥ न सर्वथा नित्यमुदेत्युपैति न च क्रियाकारकमत्र युक्तं। नैवाऽसतो जन्म सतो न नाशो दीपस्तमःपुद्गलभावतोऽस्ति॥ ४॥ विधिर्निषेधश्च कथंचिदिष्टौ विवक्षया मुख्यगुणव्यवस्था। इति प्रणीतिः सुमतेस्तवेयं मतिः प्रवेका स्तुवतोऽस्तु नाथ॥ ५॥ इति स्तोत्रार्घ्यं॥

## ॥ अथ जयमाला ॥

जय सुमतिजिनेंद्रं परमपवित्रं वंदे त्रिभुवनशांतिकरं। जय उच्चैर्गोत्रं तारणपोतं स्थिरचित्तमुनिदुःखहरं॥ १॥ त्रिधालोकवेत्ता महाकर्मभेत्ता बली कामजेत्ता कषायप्रछेत्ता। अनंताणुभेत्ता सदा ज्ञानवेत्ता महाक्रोधहर्त्ता महाभव्यनेता॥ २॥ मुनिं नाथमेव्यं जगद्वंद्यपादं विशोकं विमोहं

महादिव्यनादं । महावज्रनाराचबंधं शरीरं यजे देवदेवं महाधीरवीरं ॥ ३ ॥ महामेरुशीर्षंगतं सारसारं परं देवदेवैः कृतं मानगानं । वरं नाथचक्रीवरैः सेव्यमानं परं जातवैराग्यजं शुक्ल-लेश्यं ॥ ४ ॥ परं कर्मनाशोद्भवं दिव्यबोधं परं बोधरूपं सदा बोधशुद्धं । सदा बुद्धिदाता सदा सिद्धिनेता सदा लोकपाता सदा सिद्धिभर्त्ता ॥ ५ ॥ परं हेमवर्णं शरीरं सुरूपं नमद्देवदेवेंद्रनागेंद्र-भूपं । ज्वलज्ज्योतिरूपं महानिर्विकल्पं हरं मल्लमल्लेशकंदर्पदर्पं ॥ घत्ता ॥ जय वंदे देवं सुरकृतसेवं सुमतिजिनं यतिपतिमहितं । नुतगणधरदेवं चरणसुसेवं शांतिदासयतिपतिमहितं ॥ अर्घ्यं ॥ इंद्रैश्चंद्रवरैः फणींद्रनरपैः सारावगाहेन ये । सूर्यैः खेचरनाथभव्यनिवहैर्मान्या मुनींद्रैरजाः ॥ दुःखक्लेशजरारुजादिविगता स्तेऽनादिनामान्विता । जाताः श्रीगजपंथके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ आयोध्यापुरे मेघरथनृपसुमंगलादेव्योर्जाताय सुवर्णवर्णाय त्रिशतधनु-रुच्छेदाय चक्रवाकलांछनाय चत्वारिंशल्लक्षपूर्वायुष्काय तुंबुरपुरुषदत्तायक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीसुमतितीर्थंश्वराय नमस्कारं कुर्वे ॥ उदकचं० ॥ अर्घ्यं ॥

## ॥ अथ पद्मप्रभतीर्थंकरपूजा ॥

धरणिसुषीमादेवीपुत्रं पद्मप्रभं यजे । पद्मांकं च मनोवेगाकुसुमेशं जगत्प्रभुं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं पद्मप्रभतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

व्योमापगाविमलतीर्थजवारिधारां सौरभ्यवर्यवरवस्तुचयेन युक्तां । श्रीपद्मनाभचरणाब्जयुगं यजामि भक्त्या प्रणम्य सरसीरुहचिन्हशोभं ॥ ॐ ह्रीं पद्मप्रभजिनाय जलं निर्वपामि स्वाहा ॥ १ ॥ श्रीमन्महामलयचंदनसद्रसेन काश्मीरजागरुसुचंद्ररसाश्रितेन । श्रीप० ॥ ॐ ह्रीं प० ॥ गंधं ॥ २ ॥ क्षीरोदवारिगतफेनसमुज्वलेन शालीयतंदुलभरेण सदुज्वलेन । श्रीप० ॥ ॐ ह्रीं प० ॥ अक्षतं ॥ ३ ॥ मंदारकैरवनवांबुजहेमपुष्पैः संतानजातिसुरवृक्षकदंबपुष्पैः । श्रीप० ॥ ॐ ह्रीं प० ॥ पुष्पं ॥ ४ ॥ क्षीराज्यमिश्रपरमान्नसुभक्ष्यवृंदैर्नानारसौघपरिमिश्रितशुभ्ररूपैः । श्रीप० ॥ ॐ ह्रीं प० ॥ चरुं ॥ ५ ॥ दीपैर्निरस्ततिमिरैः परिभासमानैः कर्पूरवर्तिसुभगैर्वररत्नभाभिः । श्रीप० ॥ ॐ ह्रीं प० ॥ दीपं ॥ ६ ॥ कृष्णागरुप्रमुखसौरभयुक्तधूपैः संध्यानधूमनिकरैरिव मेघरूपैः । श्रीप० ॥ ॐ ह्रीं प० ॥ धूपं ॥ ७ ॥ राजादनाम्रपनसोत्तमदाडिमौघैर्जबीरजंबुकदलीफलसत्फलौघैः । श्रीप० ॥ ॐ ह्रीं प० ॥ फलं ॥ ८ ॥ सन्नीरगंधवरपुष्पचरूत्करैश्च दीपैः सुधूपवरपक्वफलैश्च भक्त्या । देवेंद्रवृंदपरिपूजितपादपद्मं पद्मप्रभं परियजे जिननाथमर्घैः ॥ अर्घ्यं ॥ शांतिधारा । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

पद्मप्रभः पद्मपलाशलेश्यः पद्मालयालिंगितचारुमूर्तिः बभौ भवान् भव्यपयोरुहाणां पद्माकराणामिव पद्मबंधुः ॥ १ ॥ बभार पद्मां च सरस्वतीं च भवान् पुरस्तात् प्रतिमुक्तिलक्ष्म्याः । सरस्वतीमेव समग्रशोभां सर्वज्ञलक्ष्मीं ज्वलितां विमुक्तः ॥ २ ॥ शरीररश्मिप्रसरः प्रभोस्ते बालार्करश्मिच्छविरालिलेप । नरामराकीर्णसभां प्रभावच्छैलस्य पद्माभमणेः स्वसानुं ॥ ३ ॥ नभस्तलं पल्लवयन्निव त्वं सहस्रपत्रांबुजगर्भचारैः । पादांबुजैः पातितमारदर्पो भूमौ प्रजानां विजहर्थ भूत्यै ॥ ४ ॥ गुणांबुधेर्विप्रुषमप्यजस्रं नाऽखंडलः स्तोतुमलं तवर्षेः । प्रागेव मादृक् किमुताऽतिभक्तिर्मां बालमालापयतीदमित्थं ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जयपरमतहरणं मुनिवरशरणं मुनिमनहरणं मदहरणं । जय भवभयहरणं भवजलतरणं पद्मप्रभजिनसुखकरणं ॥ १ ॥ जय समवसरणसहित नमो । जय कर्मकलंकविरहित नमो ॥ जय कमलवदन जिनदेव नमो । जय कमलसुलोचन देव नमो ॥ २ ॥ जय कमलप्रभ जिननाथ नमो । जय मदनदवानलतोय नमो ॥ जय धरणिमहीपतिपुत्र नमो । जय सुषिमादेविसुजात नमो ॥ ३ ॥ जय कमलवर्णनिभगात्र नमो । जय परमपवित्रसुपात्र नमो ॥ जय हेमकमलसंचार नमो । जय

भवजलनिधिलवुतार नमो ॥ ४ ॥ जय सकलगुणाकर वीर नमो । जय निश्चलध्यानसुधीर नमो ॥ जय यतिनरमवितपाद नमो । जय जलधरध्वनिसमाननाद नमो ॥ ५ ॥ जय ज्ञानपयोनिधिचंद्र नमो । जय महितमुरप्रभृतींद्र नमो ॥ जय भवभयसंततिहरण नमो । जय परमचरित्रसुचरण नमो ॥ ६ ॥ घत्ता ॥ जय जगदानंदन मारविभंजन यतिपतिरंजन कमलजिन । जय परमानिनामन यतिपतिनुत जिन शांतिदामयतिसेवित चरण ॥ अर्घ्य ॥ चैतन्याः प्रकृताः सदाऽमलतपा गुणैर्भूषिताः । साधूनां भुवि ये वरा गतभया दूरीकृताघद्विपः ॥ श्रीधीकीर्तिभिर्रचिता मुनिवराः संसेविताः साधुभि । जाताः श्रीराजपंथके च गुरवः कुर्वतु ते मंगलं ॥ इत्याशीर्वादः ॥ कौशांबीपत्तने धरणितृपसुसिमादेव्योर्जाताय लोहितवर्णाय कमललांच्छनाय त्रिंशल्लक्षपूर्वायुष्काय पंचाशदधिकाद्विशतधनुरुच्छेदाय पुष्पमनोवेगायक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीपद्मप्रभतीर्थेश्वराय नमस्कारं कुर्वे ॥ उदकचंदन० ॥ अर्घ्य ॥

## ॥ अथ सुपार्श्वतीर्थकरपूजा ॥

पृथ्वीषेणासुप्रतिष्ठाग्रसूनुं काशीनाथं पूजयामः सुपार्श्वं । कालीयक्षीनंदियक्षाधिनाथं भक्त्या नित्यमस्मगर्भासदेहं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं सुपार्श्वतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ ह्रीं श्रीं क्लीं ऐं अर्हं सुपार्श्वतीर्थंकर अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

स्वर्धुनीप्रमुखादितीर्थसुनीरमज्जलधारया । चारुचंदनयक्षकर्दममिश्रसौरभसारया ॥ सर्वसौख्यसुकारकं जनपापकर्दमशोषणं । सुपार्श्वनाथमहं यजे वरस्वस्तिलांछनभूषणं ॥ ॐ ह्रीं सुपार्श्वतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयपर्वतसंभवै रतिरुचिरगंधसमुद्भवैः । कुंकुमादिसमन्वितैरसभृ सुचंदनसद्रवैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ गंधं ॥ २ ॥ अतिमनोहरमधुरसौरभकलमतंडुलपुंजकैः । स्फुटखंडनवर्जितैर्जनरंजनै रतिसोज्वलैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ अक्षतं ॥ ३ ॥ कमलकुंदसुकुंदचंपकजातिबकुलसुपुष्पकैः । सकलसुभगजजनमनोहरपरिमलागतभृंगकैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ पुष्पं ॥ शर्करघृतजातमंजुलभक्ष्यकैरतिशुभ्रकैः । पायसैश्च सुपूरिकेंडुलिकादिसद्रसरांयुतैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ चरुं ॥ ५ ॥ रत्ननिर्मितदीपसन्निभसद्घृतोत्थसुदीपकैः । सर्वदिग्विवरेषु दीपितकांतिकैरतिसोज्वलैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ दीपं ॥ ६ ॥ सिल्हिकागरुजोंगकादिसमुद्भवैर्वरधूपकैः । पूरिताखिलदिग्मुखैर्गणवासितैर्घनसन्निभैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ धूपं ॥ ७ ॥ आम्रजंबुकपित्थदाडिमपूगमोचकसत्फलैः । नारिकेरसुजंबिरादिसुपक्वजैरमृतोपमैः ॥ सर्व० ॥ ॐ ह्रीं सु० ॥ फलं ॥ ८ ॥ जलसुगंधसदक्षतपुष्पकैश्चरुसुदीपसुधूपफलैर्वरैः । विविधतूर्यनिनादजयारवैस्सुपार्श्वमथार्घ्यनरैर्यजे ॥ अर्घ्यं ॥ शांतिधारा । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

स्वास्थ्यं यदत्यंतिकमेष पुंसां स्वार्थो न भोगः परिभंगुरात्मा । तृषानुषंगान्न च तापशांति रितीद-माख्याद्भगवान् सुपार्श्वः ॥ १ ॥ अजंगमं जगमनेययंत्रं यथा तथा जीवधृतं शरीरं । बीभित्सु पूति क्षयि तापकं च स्नेहो वृथाऽत्रेति हितं त्वमाख्यः ॥ २ ॥ अलंघ्यशक्तिर्भवितव्यतेयं हेतुद्वयाविष्कृ-तकार्यलिंगा । अनीश्वरो जंतुरहंक्रियार्त्तः संहत्य कार्येष्विति साध्ववादीः ॥ ३ ॥ बिभेति मृत्युं न ततोऽस्ति मोक्षो नित्यं शिवं वांछति नाऽस्य लाभः । तथाऽपि बालो भयकामवश्यो वृथा स्वयं तप्यत इत्यवादीः ॥ ४ ॥ सर्वस्य तत्वस्य भवान् प्रमाता मातेव बालस्य हितानुशास्ता । गुणाव-लोकस्य जनस्य नेता मयाऽपि भक्त्या परिणूयसेऽद्य ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जय पार्श्वजिनेश्वर महिपरमेश्वर परमध्याननिश्चलधरण । जय मदनविखंडन पापविभंजन रंजन शल्यत्रयहरण ॥ १ ॥ जय धर्मप्रकाशन देव नमो । जय गणधरनिर्मितसेव नमो ॥ जय पर-मतखंडनवीर नमो । जय ज्ञानसुधाकरसार नमो ॥ २ ॥ जय धर्मसरोजसुसूर्य नमो । जय निर्मितकर्मविदूर नमो ॥ जय नुतसुरव्यंतरराज नमो । जय नरत्रिभुभास्करसहज नमो ॥ ३ ॥ जय मुनिवरगणपाधीश नमो । जय नरनुतप्रकाश नमो ॥ जय नाशितमोहप्रवीर नमो ।

जय पापतिमिरहरसूर्य नमः ॥ ४ ॥ जय निर्मय निर्मल हंस नमो । जय प्रकटितनिजवरवंश नमो ॥ जय सुप्रतिष्ठपति तात नमो । जय पृथ्वीषेणावरजात नमो ॥ ५ ॥ जय दुरितदोषनिबाध नमो । जय घातिविलसद्बोध नमो ॥ जय केवलचिन्मयपिंड नमो । जय मानविभंजनदंड नमो ॥ ६ ॥ घत्ता ॥ जय केवलबोधं शुद्धविशुद्धं वंदेऽहं श्रीपार्श्वजिनं । जयमुक्तिनिवासं ललितसुभासं शांतिदासयतिपतिमहितं ॥ अर्घ्यं ॥ सश्रीमान् विजयस्ततोऽप्यचलको धर्म स्ततः सुप्रभः । सम्यग्ध्यानिसुदर्शनो गतमलो नंदी च नंदीसुहृत ॥ अव्याबाधयुता इमे तु हलिनः सप्तापबंधच्युता । जाताः श्रीगजपंथके च गुरवः कुर्वंतु ते मंगलं ॥ इत्याशीर्वादः ॥ वाराणसीपट्टने सुप्रतिष्ठनृप पृथ्वीमहादेव्योर्जाताय स्वस्तिकलांछनाय हरितवर्णाय द्विशतधनुरुच्छेदाय चतुर्विंशतिलक्षपूर्वायुष्काय वरनंदिकालीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीसुपार्श्वतीर्थेश्वराय नमस्कारं कुर्वे ॥ उदकचंदन० ॥ अर्घ्यं ॥

## ॥ अथ चंद्रप्रभतीर्थंकरपूजा ॥

चंद्रपुरांबुधिचंद्रं चंद्रांकं चंद्रकांतसंकाशं । चंद्रप्रभजिनमंचे कुंदेंदुस्फारकीर्तिमन्तंतम् ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं चंद्रप्रभजिन अत्र अवतरावतर संवौषट् स्वाहा ॥ ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

स्वर्गसिंधुवारिणा सुगौरनीरधारिणा मुक्तिसौख्यकारिणा जरापमृत्युहारिणा । निर्जराहिमर्त्यनाथ-सेवितांघ्रिमष्टकं चंद्रभासमर्चयामि तीर्थनाथमीश्वरं ॥ ॐ ह्रीं चंद्रप्रभजिनाय जलं निर्वपामि स्वाहा ॥ १ ॥ शीतलेन चंदनादिकेशरादिवासिना गंधलुब्धषट्पदेन पापतापनाशिना ॥ निर्ज० ॥ ॐ ह्रीं चं० ॥ गंधं ॥ २ ॥ पुण्यशालिबीजकैरिवाऽश्रहारपांडुरैर्वन्यशालिसंभवैरखंडकोटितंडुलैः । निर्ज० ॥ ॐ ह्रीं चं० ॥ अक्षतं ॥ ३ ॥ सिंधुवारमालतीसुपुंडरीकमल्लिका—पारिजातकेतकीकदं-बकुंदचंपकैः । निर्ज० ॥ ॐ ह्रीं चं० ॥ पुष्पं ॥ ४ ॥ नव्यगव्यपाकयुक्तभक्तभक्ष्यपायसैर्व्यंज-नाढ्यपूरिकासुमोदकैश्चरूत्तमैः । निर्ज० ॥ ॐ ह्रीं चं० ॥ चरुं ॥ ५ ॥ दीपकैश्चतैलवर्तिसंयुतैः शिखोज्वलैर्वातघातवर्जितै रनर्घ्यपात्रसंस्थितैः । निर्ज० ॥ ॐ ह्रीं चंद्रप्रभजिनाय ॥ दीपं ॥ ६ ॥ व्योममार्गसंगतैरनर्घ्यधूपधूमकैर्नीरदालिसन्निभैः कुकर्ममर्मदाहकैः । निर्जराहिमर्त्यनाथसेवितां-घ्रिमष्टकं । चंद्रभासमर्चयामि तीर्थनाथमीश्वरं ॥ ॐ ह्रीं चं० ॥ धूपं ॥ ७ ॥ आम्रकाम्रनालि-केरबीजपूरकर्कटी—कंटकीकपित्थपूगराजभक्ष्यदाडिमैः । निर्ज० ॥ ॐ ह्रीं चं० ॥ फलं ॥ नीरगं-धतंडुलैर्लतांतहव्यदीपकैर्धूपपक्वसत्फलैर्मुदाऽर्घ्यकैर्मनोहरैः । निर्ज० ॥ ॐ ह्रीं चं० ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

चंद्रप्रभं चंद्रमरीचिगौरं चंद्रं द्वितीयं जगतीव कांतं । वंदेऽभिवंद्यं महतामृषींद्रं जिनं जितस्वांतकषायबंधं ॥ १ ॥ यस्यांगलक्ष्मीपरिवेषभिन्नं तमस्तमोऽरेरिव रश्मिभिन्नं । ननाश बाह्यं बहु मानसं च ध्यानप्रदीपातिशयेन भिन्नं ॥ २ ॥ स्वपक्षसौस्थित्यमदावलिप्ता वाक्सिंहनादैर्विमदा बभूवुः । प्रवादिनो यस्य मदार्द्रगंडा गजा यथा केसरिणो निनादैः ॥ ३ ॥ यः सर्वलोके परमेष्ठितायाः पदं बभूवाद्भुतकर्मतेजाः । अनंतधामाक्षरविश्वचक्षुः समंतदुःखक्षयशासनश्च ॥ ४ ॥ स चंद्रमा भव्यकुमुद्वतीनां विपन्नदोषाभ्रकलंकलेपः । व्याकोशवाग्न्यायमयूखमालः पूयात् पवित्रो भगवान् मनो मे ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

गतकर्मकलंकं रहितविपंकं विद्यानंदं चंद्रांकं । जय चंद्रप्रभेशं नमितनरेशं जगदानंदं शुभ्रांकं ॥ १ ॥ जय सकलसुरासुरनमितपाद । जय सकलभुवनपतिवंद्यपाद ॥ जय सकलयतिपतिसेव्यपाद । जय सकलविद्याधरपूज्यपाद ॥ २ ॥ जय चंद्रसुलांछन चंद्रनाथ । जय चंद्रदिवाकरसेव्यनाथ ॥ जय चंद्रशरीर सुयोगिनाथ । जय चंद्रवदन नतयोगिनाथ ॥ ३ ॥ जय मुनिजनभूषण रहितदोष । जय त्रिभुवनमोहन रहितरोष ॥ जय नरपतिरंजन रहितरोग । जय परमतभंजन

रहितभोग ॥ ४ ॥ जय त्रिभुवनतिलक मुख्यातिरूप । जय परमनिरंजन ज्ञानरूप ॥ जय मानरहित पतिसेव्यमान । जय प्रातिहार्यातिशयशोभमान ॥ ५ ॥ जय चंद्रपुरेश्वर परम ईश । जय त्रिभुवनलोचन सकलधीश ॥ जय परमपुरुषप्रतिष्ठबोध । जय सकलप्रकाशक सकलबोध ॥ घत्ता ॥ जय परमचरित्र त्रिभुवननेत्र सकलत्रिभास्वरज्ञानमय । जय चंद्रजिनेश नमितसुरेश शांतिदामवरमेव्यपद ॥ अर्घ्यं ॥ त्रैलोकेंद्रमवाः समुज्वलगुणाः श्रीसिद्धनाथोपमाः । अंतातीतगुणार्णवाः क्षितितले जाताश्च सर्वेऽपि ते ॥ विद्यानंदगुरुः कृपावशमतिः श्रीमल्लिसेनप्रभु । स्तच्छिष्यो वरसिंहनंदिमुनिपो भव्योदयनत्सन्निभः ॥ इत्याशीर्वादः ॥ चंद्रपुरीपट्टने महासेनमहाराजलक्ष्मीमतीदिव्यांजाताय चंद्रलांछनाय शुभ्रवर्णाय पंचाशदधिकैकशतधनुरुच्छेदाय दशलक्षपूर्वायुष्काय शामज्वालिनीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीचंद्रप्रभतीर्थेश्वराय नमस्कारं कुर्वे ॥ उदकचंदन० ॥ अर्घ्यं ॥

## ॥ अथ पुष्पदंततीर्थंकरपूजा ॥

जयरामारमण्याश्च सुग्रीवस्य च सूनुकं । पुष्पदंतं यजे यज्ञे पुष्पदंतसमप्रभं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं पुष्पदंततीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

क्षीरोदधेः सारसुपूरितांबुभृंगारनालाद्गलितोदधारया । समानया सत्कथया जिनानां श्रीपुष्पदंतं जिनपं यजेऽहं ॥ ॐ ह्रीं पुष्पदंतजिनवराय जलं निर्वपामि स्वाहा ॥ १ ॥ सत्कुंकुमश्रीघृणादिमिश्रितैः सद्गंधदिग्वासितचंदनद्रवैः कर्पूरशुभ्रांशुवदुद्घशीतलैः श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ गंधं ॥ २ ॥ सुलक्षणैश्चंद्रसमानकांतिभिः सुनिर्मलैर्दीर्घतरैर्मनोज्ञैः । शाल्यक्षतैर्वज्रवदुज्ज्वलैश्च श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ अक्षतं ॥ ३ ॥ सुचंपकैः कुंदकदंबजातीसुश्वेतमंदारसुगंधपुष्पैः । स्वर्गेंद्रदेवैः कृतपुष्पवृष्टिं श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ पुष्पं ॥ ४ ॥ सुहेमरत्नोत्थसुभाजनस्थैर्हृद्यैः सुसारैश्चरुभक्ष्यकैश्च । नानाविधव्यंजनसुप्रयुक्तैः श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ चरुं ॥ ५ ॥ सद्धर्निकर्पूरविनिर्मितैश्च दीपोत्करै रत्नवदुज्ज्वलैश्च । मिथ्यांधकारापहसूर्यसन्निभैः श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ दीपं ॥ ६ ॥ सदुत्तमैर्धूपचयैर्घनाभैर्दशप्रकारोद्घसुगंधसंभवैः । दिगंतरिक्षावृतधूपसंकुलैः श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ धूपं ॥ ७ ॥ सुनालिकेराम्रकपित्थचोचजंबीरपूगोद्घफलैः सुपक्वैः । सुमुक्तिलक्ष्मीसुखकृत्फलाभैः श्रीपुष्प० ॥ ॐ ह्रीं पु० ॥ फलं ॥ ८ ॥ सुनीरसंतापहचंदनद्रवैः प्रदीर्घसल्लक्षणिकाक्षतैर्वरैः । सुपुष्पनैवेद्यसुदीपधूपकैः फलान्वितार्घ्यैर्महयामि तं जिनं ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

एकांतदृष्टिप्रतिषेधि तत्त्वं प्रमाणसिद्धं तदतत्स्वभावं । त्वया प्रणीतं सुविधे स्वधाम्ना नैतत्समालीढपदं त्वदन्यैः ॥ १ ॥ तदेव च स्यान्न तदेव च स्यात्तथा प्रतीतेस्तव तत कथंचित् । नात्यंतमन्यत्वमनन्यता च विधेर्निषेधस्य च शून्यदोषात् ॥ २ ॥ नित्यं तदेवेदमिति प्रतीतेर्न नित्यमन्यत्प्रतिपत्तिसिद्धेः । न तद्विरुद्धं बहिरंतरंगं निमित्तनैमित्तकयोगतस्ते ॥ ३ ॥ अनेकमेकं च पदस्य वाच्यं वृक्षा इति प्रत्ययवत्प्रकृत्या । आकांक्षिणः स्यादिति वै निपातो गुणानपेक्षेऽनियमेऽपवादः ॥ ४ ॥ गुणप्रधानार्थमिदं हि वाक्यं जिनस्य ते तद्विषतामपथ्यं । ततोऽभिवंद्यं जगदीश्वराणां ममाऽपि साधो स्तव पादपद्मं ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जयभवभयहरणं शिवसुखकरणं पुष्पदंतजिनपतिचरणं । जयशुभमतिकरणं यतिपतिशरणं सकलजीवतातिशुभतरणं ॥ १ ॥ विकामदं सुशांतदं हतापदं सुखास्पदं । सुभावदं कृतामदं निरासदं हरद्वदं ॥ सुशर्मदं सुस्वर्गदं सुमोक्षदं विदास्पदं । भजामि तं सुखान्वितं सुपुष्पदंतदेवकं ॥ २ ॥ शिवंकरं शुचंहरं निरंतरं शुभंकरं । सुखंकरं निरंबरं जिनेश्वरं रमाकरं ॥ करानन्नं कजाननं शुभाननं रमाननं । भजा० ॥ ३ ॥ मुक्तिदं समुक्तिदं प्ररूपकं सुरूपकं । विगमकं निगमकं विगगकं विभा-

वकं ॥ सुदीपकं सुजापकं सुभूपकं निरूपकं । भजा० ॥ ४ ॥ सुराकिणी सुशाकिनी सुहाकिनी विपाचिनी । पिशाचिनी विकाचिनी मलाविनी वियोगता ॥ विदेशता प्रकोपना विमान्यता क्षयं-गता । भजा० ॥ ५ ॥ निरामयं कलामयं वरालयं हतादयं । स्फुरत्त्रयं गतानयं निराशयं पराशयं ॥ महाबलं सदाकलं चिदामलं निराकुलं । भजा० ॥ ६ ॥ घत्ता ॥ जय शर्मसुसहितं दोषातीतं वीतं नमितं श्रीजिनपम । जय पुण्यप्रदानं सहितसुगोत्रं पुष्पदंतयतिवरगणपं ॥ अर्घ्यं ॥ एवं षोडशलाभ-युक्तमनघं दृष्ट्वाऽऽशु तं विस्मितो । राजा चेतसि कालसंवरवरश्लाघ्यंकृतो भाग्यवान् ॥ प्राग्जन्मांतर पुण्यतोऽपि सकलं संप्राप्त मेतत्फलं । तस्माज्जैनमतस्य दास्यमनिशं कुर्वीत सिध्दाप्तये ॥ इत्या-शीर्वादः ॥ काकंदीपट्टने सुग्रीवमहाराजरामादेव्योर्जाताय शुभ्रवर्णाय शतधनुरुच्छेदाय द्विलक्षपूर्वा-युष्काय कर्कटलांछनाय अजितमहाकालीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीपुष्पदंत-तीर्थेश्वराय नमस्कारं कुर्वे ॥ उदक० ॥ अर्घ्यं ॥

## ॥ अथ शीतलतीर्थंकरपूजा ॥

श्रीराजभद्रपरिवृढदृढराजप्रियासुनंदायाः । सूनुं शीतलनाथं यजामहे शातकुंभसंकाशं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं शीतलतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

क्षीरपूरगौरसारभूरिवारिधारया मंदगंधचंदनादिसौरभातिमारया । प्राणिदीनकारमारदर्पसर्पशांतिदं नाकिनायकैरुपासितं यजामितं सुशीतलं ॥ ॐ ह्रीं शीतलजिनदेवाय जलं निर्वपामि स्वाहा ॥ १ ॥ अर्कतर्कत्रजैनेंदुशीतलैः सुचंदनैः कुंकुमादिमिश्रितैः सुगंधलुब्धषट्पदैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ गंधं ॥ २ ॥ औषधेन सिंधुफेनहारभासपांडुरै रक्षतैः सुलक्षणै रजोभिखंडवर्जितैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ अक्षतं ॥ ३ ॥ पारिजातवारिजोद्‌धकुंदहेमकेतकी–मालतीसुचंपकादिसारपुष्पदामभिः । प्राणिदीनकारमारदर्पसर्पशांतिदं नाकिनायकैरुपासितं यजामितं सुशीतलं ॥ ॐ ह्रीं शीतलजिनदेवाय ॥ पुष्पं ॥ ४ ॥ व्यंजनाज्यपायसादिसद्रमैश्वगेश्वयैर्मोदकौदनादिभिः सुवर्णभाजनस्थितैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ चरुं ॥ ५ ॥ रत्नभासर्पिकत्थदीपकैः समुज्वलैर्वातवाननोपगोपकंपरूपवर्जितैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ दीपं ॥ ६ ॥ सिल्हिकासितागरुप्रधूपकैर्दशोद्धवैर्वर्णमानवेशमानसाक्षिसंभ्रमोद्भवैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ धूपं ॥ ७ श्रीफलाम्रकर्कटीसुदाडिमादिभिः फलैर्वर्णमृष्टसौरभादिसत्स्वरूपसंयुतैः । प्राणि० ॥ ॐ ह्रीं शी० ॥ ८ ॥ जीवनेद्धचंदनाक्षतप्रसूनकैर्वरैश्चारुभक्ष्यदीपधूपपक्वसत्फलैर्मुदा । स्वर्णभाजनस्थितैः सुमंगलांगकार्घ्यकैः शीतलेश्वरं त्वहं महामहे जिनेशिनं ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

न शीतलाश्चंदनचंद्ररश्मयो न गांगमंभो न च हारयष्टयः। यथा मुनेस्तेऽनघवाक्यरश्मयः शमांबुगर्भाः शिशिरा विपश्चितां ॥ १ ॥ सुखाभिलाषानलदाहमूर्छितं मनो निजं ज्ञानमयामृतांबुभिः। विदिध्यपस्त्वं विषदाहमोहितं यथा भिषग्मंत्रगुणैः स्वविग्रहं ॥ २ ॥ स्वजीविते कामसुखे च तृष्णया दिवा श्रमार्ता निशि शेरते प्रजाः। त्वमार्य नक्तं दिवमप्रमत्तवानजागरेवात्मविशुद्धवर्त्मनि ॥ ३ ॥ अपत्यवित्तोत्तरलोकतृष्णया तपस्विनः केचन कर्म कुर्वते। भवान् पुनर्जन्मजराजिहासया त्रयीं प्रवृत्तिं शमधीरवारुणात् ॥ ४ ॥ त्वमुत्तमज्योतिरजः क्व निर्वृतः क्व तेऽपरे बुद्धिलवोद्धतक्षताः। ततः स्वनिश्रेयसभावनापरैर्बुधप्रवेकैर्जिनशीतलेड्यस्से ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जय शीतलदेवं सुरकृतसेवं भव्यमहीपतिनुतचरणं। जय गतपरभावं चिन्मयरूपं केवललोचनसंभजिनं ॥ १ ॥ निरामय निर्भय निर्मल हंस। सदामलकेवलचिन्मयहंस ॥ सुरवर्गजदेव करे बहु सेव। सुपूजो भावियण शीतलदेव ॥ २ ॥ न मान न माय न भूष न दोह। न त्रास न भीरु न चिंत न मोह ॥ न लोभ न क्षोभ न सेवनमोह। सुपू० ॥ ३ ॥ न देश न वेष न राग न खेद। न गंध न मोह न मैथुनसेव ॥ न क्रीड न खेल न कामिनीसेव। सुपू० ॥ ४ ॥ न घात न पट्टनखेड न गाम। न पुत्र न मित्र न माय न ताण ॥ न गेह न दाह न क्षेत्र न क्षाम।

सुपू० ॥ ५ ॥ न दास न खङ्ग न तुंद न रूप । न भोग न भाग सुज्ञानस्वरूप ॥ न जन्मजरामरणप्रविबाध । सुपू० ॥ ६ ॥ घत्ता ॥ जय शीतलदेवं सकलसुबोधं चंद्रार्कादिभिरर्चितचरणं । जय त्रिभुवननाथं योगिसुनाथं शांतिदासब्रह्मार्चितचरणं ॥ अर्घ्यं ॥ श्रीक्षोणीपतिवाटकृध्दृढथोद्भतोऽमरैः पूजितः । कर्मारातिसमाजसुष्टुदलनो धर्मार्थमोक्षप्रदः ॥ संसारोत्तमसाधुधर्मकथकः संसारविच्छेदकः । श्रीमच्छीतलदेवको गुणनिधिः कुर्यात् स मे मंगलं ॥ इत्याशीर्वादः ॥ भद्रपुरे दृढरथमहाराजसुनंदादेव्योर्जाताय श्रीवृक्षलांच्छनाय इक्ष्वाकुवंशाय सुवर्णवर्णाय नवतिधनुरुच्छेदाय एकलक्षपूर्वायुष्काय ब्रह्मकालीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीशीतलतीर्थेश्वराय नमस्कारं कुर्वे ॥ उदक० ॥ अर्घ्यं ॥

## ॥ अथ श्रेयांसतीर्थंकरपूजा ॥

भूपविष्णुद्भवं देवं श्रीश्रेयांसजिनाधिपं । विधिना स्थापयाम्यत्र जितमन्मथशत्रुकं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं श्रेयांसतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

विमलचंद्रविमिश्रितधारया कमलवासितसज्जलसारया । सकललोकविलोकनचंद्रभं प्रथितगंडसुलांछनमीश्वरम ॥ ॐ ह्रीं श्रेयांसतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयजैर्वरकुंकुममि-

श्रितैः परिमलागतषट्पदसंश्रितैः । भवकुतापहरं कमलाकरं भुव० ॥ ॐ ह्रीं श्रे० ॥ गंधं ॥ २ ॥ सकलतंडुलपुण्यसुपुंजकैः सरसमानशशिप्रतिदक्षकैः । प्रबलघातिकुकर्मनिवारकं । भुव० ॥ ॐ ह्रीं श्रे० ॥ अक्षतं ॥ ३ ॥ विकचचंपककेतकिमालतीकमलकुंदवसंतसुपुष्पकैः । मुनिमनोजविकासविरोचनं । भुव० ॥ ॐ ह्रीं श्रे० ॥ पुष्पं ॥ ४ ॥ वटकखज्जकमोदकशर्करैः प्रचुरदुग्धदधीक्षुसुभक्ष्यकैः । नमितनागनरासुरनायकं । भुव० ॥ ॐ ह्रीं श्रे० ॥ चरुं ॥ ५ ॥ तुहिनरत्नघृतादिकसंभवैर्विबुधबोधसुधर्मविभूषणैः । विकटकाममदेभविदारणं भुव० ॥ ॐ ह्रीं श्रे० ॥ दीपं ॥ ६ ॥ अगरुचंदनचंद्रसमुद्भवैः परिमलाकलितामरसंचयैः । प्रबलपंचमबोधप्रदायकं भुव० ॥ ॐ ह्रीं श्रे० ॥ धूपं ॥ ७ ॥ पनसदाडिममोचसुचोचकैः क्रमुककाम्रकपित्थफलोत्तमैः । सुगतिसत्फलदं गतभूषणं भुव० ॥ ॐ ह्रीं श्रे० ॥ फलं ॥ ८ ॥ जलगंधाक्षतपुष्पैर्नैवेद्यदीपधूपफलनिकरैः । यजेऽहं भक्त्या जिनपं सुरासुरनतपदयुगलं ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

श्रेयान् जिनः श्रेयसि वर्त्मनीमाः श्रेयःप्रजाः शासदजेयवाक्यः । भवांश्चकाशे भुवनत्रयेऽस्मिन्नेको यथा वीतघनो विवस्वान् ॥ १ ॥ विधिर्विषक्तः प्रतिषेधरूपः प्रमाणमत्रान्यतरत्प्रधानं । गुणोऽपरो मुख्यनियामहेतुर्नयः सदृष्टांतसमर्थनस्ते ॥ २ ॥ विवक्षितो मुख्य इतीष्यतेऽन्यो गुणो

विवक्षो न निरात्मकस्ते । तथाऽरिमित्रानुभयादिशक्ति द्वयावधेः कार्यकरं हि वस्तु ॥ ३ ॥ दृष्टांतसिद्धावुभयोर्विवादे साध्यं प्रसिद्धयेन्नतु तादृगस्ति । यत् सर्वथैकांतनियाम दृष्टं त्वदीयदृष्टिर्विभवत्यशेषे ॥ ४ ॥ एकांतदृष्टिप्रतिषेधसिद्धिर्न्यायेषुभिर्मोहरिपुं निरस्य । असिस्म कैवल्यविभूतिसम्राट् ततस्त्वमर्हन्नसि मे स्तवार्हः ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

वंदे मुक्तिपतिं जिनेंद्रविपुलं देवेंद्रवृंदस्तुतं । श्रेयांसं जिनदेवबोधसुवरं संसारतारं तरं ॥ मिथ्याकंदविनाशनैकचतुरं नंदाधिदेव्या भवं । वक्ष्ये बोधकरं सुचारुचतुरं श्रेयांसजयमालकं ॥ १ ॥ जयभवभयहरणं भवजलतरणं तरणं यतिवरसुखकरणं । जयदूरविरागं मानविदहनं शमनं शमतामयधरणं ॥ २ ॥ जयपरमपवित्रं त्रिभुवननेत्रं चित्रं चारित्राचरणं । जयत्रिभुवनदासं देवसुभासं भावं धर्ममहीकरणं ॥ ३ ॥ जयत्रिभुवनचंद्रं चर्चितचंद्रं चंद्रं धर्मपयोनिधीनां । जयज्ञानसुभानुं सुरकृतगानं धानं ज्ञानपयोधीनां ॥ ४ ॥ जयजगदीशं त्रयभुवनेशं ईशं योगिसमूहानां । जय शुद्धस्वरूपं ज्ञानस्वरूपं रूपं त्रिभुवनभव्यानां ॥ ५ ॥ जयमदनविदंडं हिमकरतुंडं खंडं मोहप्रचंडानां । गतकर्मकलंकं रहितकलंकं अकलंकं जिनश्रेयांसं ॥ घत्ता ॥ सकलगुणसमुद्रं केवलज्ञानचंद्रं कृतसकलसुभव्यं देवदेवेंद्रसेव्यं । सकलगुणगणेंद्रं मोहकृष्टं जिनेंद्रं नमति

भजंति नित्यं शांतिदामा यतींद्रः ॥ अर्घ्यं ॥ शुक्लध्यानपरायणांगुणनिधिर्ज्ञानैकरत्नाकरः । अष्टाशीतिसहस्रलक्षणयुतः पूर्णेंदुतुल्याननः ॥ कंपर्दद्विपतुंगदर्पशिखरोत्कैकनिर्घातकः । श्रीश्रेयांसजिनो दयामयतनुः कुर्यात स मे मंगलं ॥ इत्याशीर्वादः ॥ सिंहपुरे विष्णुनृपनिवेणुदेव्योर्जाताय सुवर्णवर्णाय इक्ष्वाकुवंशाय गरुडलांछनाय अशीतिधनुरुच्छेदाय चतुरशीतिलक्षवर्षायुष्काय ईश्वरगौरीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीश्रेयांसतीर्थकराय नमस्कारं कुर्वे ॥ उदक० ॥ अर्घ्यं ॥

## ॥ अथ वासुपूज्यतीर्थकरपूजा ॥

वसुपूज्यस्य सत्पुत्रं जिनेंद्रं वासुपूज्यकं । स्थापयाम्येव सद्भक्त्या सुखागारं शिवाप्तये ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं वासुपूज्यतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

श्रीमदोषधीशवासिनैरतीवनिर्मलैः स्वादुभिः सुभाषिनैर्दिवानिशीतलैर्जलैः । श्रीसमागमैकहेतुशारदाकुलास्पदं महेशवासुपूज्यकं विशेषराजकं यजे ॥ ॐ ह्रीं वासुपूज्यजिनाय जलं निर्वपामि स्वाहा ॥ १ ॥ मिश्रितैः सिताभ्रजेन रेणुवासर्पितैर्मैलपर्णिकागरुद्रवैः सुगंधबंधुरैः । पापतापछे-

दकाममूर्तिदितिमद्वहं महेशवासुपूज्यकं विशेषराजकं यजे ॥ ॐ ह्रीं वासुपूज्यजिनाय ॥ गंधं ॥ पांडुरैः सुगंधिभिर्महामदापहारकैर्जैनवाक्चयैर्विवादुषमांडितैरखंडितैः । अक्षतैर्वलक्षकैः स्वरूपमापदुज्झितं महे० ॥ ॐ ह्रीं वा० ॥ अक्षतं ॥ ३ ॥ सौमनैयसनलंयमागश्रयसद्धरैश्चंपकाब्जकुन्दकैरनंगबाणमत्सरैः । पुष्पलिट्प्रमोदनादवन्हिरूक्त्ववांचितं महे० ॥ ॐ ह्रीं वा० ॥ पुष्पं ॥ ४ ॥ मुक्तिकामिनीकटाक्षबाणविद्धवक्षसं नष्टतत्त्वबंधकप्रकारकक्षरक्षकं । आत्मनो मनोगतिं समाप्य तं चकासकं महे० ॥ ॐ ह्रीं वा० ॥ चरुं ॥ ५ ॥ कोटिभास्करप्रतापलोपभुग्गितेजसं विश्वलोकलोचनामृतस्रुतं हतैनमं । स्फारविस्फुरत्प्रकाशकेवलैकचक्षुषं महे० ॥ ॐ ह्रीं वा० ॥ दीपं ॥ ६ ॥ दिग्वधूमुखारविंदवृंदभृंगविभ्रमं धारयंत मक्षगंधलं प्रियं पयःसमं । कर्मघर्मतागणप्रणाशहेतुमुत्तमं महे० ॥ ॐ ह्रीं वा० ॥ धूपं ॥ ७ ॥ श्रीरसालकंदगलतालनालिकेरजैर्बीजपूरजंबुनिंबुदाडिमादिसत्फलैः । पादपीठनिर्लुठत्कठोरकोपकोपिनं महे० ॥ ॐ ह्रीं वा० ॥ फलं ॥ सर्वतोमुखैः सुगंधिभिश्च चंदनद्रवैरक्षतैर्वितानदामभिश्च तैश्चरुवरैः । दीपधूपसत्फलैश्च निर्मितं शिवश्रिये मल्लिभूषणस्तुताय संददेऽर्घ्यमर्हते ॥ अर्घ्य ॥ शांतिधारा । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

शिवासु पूज्योऽभ्युदयक्रियासु त्वं वासुपूज्यस्त्रिदशेंद्रपूज्यः । मयाऽपि पूज्योऽल्पधिया मुनींद्रो दीपार्चिषा किं तपनो न पूज्यः ॥ १ ॥ न पूजयाऽर्थ स्त्वयि वीतरागे न निंदया नाथ विवांतवैरे । तथाऽपि

ते पुण्यगुणस्मृतिर्नः पुनातु चित्तं दुरितांजनेभ्यः ॥ २ ॥ पूज्यं जिनं त्वाऽर्चयतो जनस्य सावद्यलेशो बहुपुण्यराशौ । दोषाय नाऽलं कणिका विषस्य न दूषिका शीतशिवांबुराशौ ॥ ३ ॥ यद्वस्तु बाह्यं गुणदोषसूतेर्निमित्तमभ्यंतरमूलहेतोः । अध्यात्मवृत्तस्य तदंगभूतमभ्यंतरं केवलमप्यलं ते ॥ ४ ॥ बाह्येतरोपाधिसमग्रतेयं कार्येषु ते द्रव्यगतः स्वभावः । नैवाऽन्यथा मोक्षविधिश्च पुंसां तेनाऽभिवंद्यस्त्वमृषिर्बुधानां ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

पंचज्ञानप्रकाशो यः पंचेंद्रियविदारणः । पंचमीगतिनाथो यः पंचकल्याणपूजकः ॥ १ ॥ सुरनरकिन्नरसेवितपादं भवजलनिधिपोतं सुविदांतं । चंपापुरवसुपूज्यसुतं तं वासुपूज्यजिनममलमनंतं ॥ २ ॥ भव्यांभोरुहविकसितवदनं निर्जितकर्मारातिसुमदनं । चंपा० ॥ ३ ॥ चंद्रदिवाकरकोटिसुतेजं दशदिग्मंडलद्योतितनेजं । चंपा० ॥ ४ ॥ अविचलपददायकजगदीशं हरिहरदेवैर्नुतपदमीशं । चंपा० ॥ ५ ॥ ज्ञानाऽलोकाऽऽलोकितकथकं शल्यत्रयमायादिकमथकं । चंपा० ॥ ६ ॥ दुंदुभिदिव्यध्वनिशोभितकं नामगसिंहासनसुजनकं चंपापुरवसुपूज्यसुतं तं वासुपूज्यजिनममलमनंतं ॥ ७ ॥ दोषाष्टादशरहितकायं मुनिगणहंसैःसेवितपादं । चंपा० ॥ ८ ॥ मुक्तिवधूसहकृतवरसंगं जनहृद्रंजनसांगोपांगं । चंपा० ॥ ९ ॥ मातृजयावत्युदरेजातं देहसुवर्णविराजितनाथं ।

चंपा० ॥ १० ॥ सप्ततिपंचोत्तरधनुरुत्तुंगं देहसुदर्शनमंबुजनेत्रम् । चंपा० ॥ ११ ॥ द्वासप्ततिलक्षाब्दायुष्कंतं षट्शतगणनीसेवितपादं । चंपा० ॥ १२ ॥ महिषांकं शोभितकेतुपताकं धर्मामृतवर्षणहारिणांकं । चंपा० ॥ घत्ता ॥ त्रिजगत्पतिनाथं यं त्रिजगन्मंगलोदयं जयमालां पठेद्भक्त्या वासुपूज्यं समर्चयेत् ॥ अर्घ्यं ॥ पंचप्रौढमदक्षवारणसमाजानेकपामित्रको। नित्यानंदकरः सुखामृतमहाकूपाग्मग्नः खलु ॥ संसारांबुधिमग्नजंतुमहसापोतायमानंगनः । श्रीमत्सुंदरवासुपूज्यजिनपः कुर्यात् स मे मंगलं ॥ इत्याशीर्वादः ॥ चंपापुरे वसुपूज्यनृपजयादेव्योर्जाताय कुमारब्रह्मचारिणे रक्तवर्णाय इक्ष्वाकुवंशाय महिषलांछनाय सप्ततिधनुरुच्छेदाय द्वासप्ततिलक्षवर्षायुष्काय सुकुमारगांधारीयक्षयक्षीसमेताय चंपापुरे मोक्षंगताय श्रीवासुपूज्यतीर्थंकराय नमस्कारं कुर्वे ॥ उदकचंदन० ॥ अर्घ्यं ॥

## ॥ अथ विमलतीर्थंकरपूजा ॥

त्रयोदशमतीर्थेशं विमलं मलवर्जितं । स्थापयामि जगत्पूज्यं सत्पुत्रं कृतवर्मणः ॥ ॐ ह्रीं क्लीं ऐं अर्हं विमलतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

क्षीराब्धिनीरनिकरैर्निकरैः सुगणां यः स्नापितो जिनवरो वनकावनीतैः । कर्पूरपूरधरभूरिपरागनीरैर्यर्चे नमत्र विमलं कमलं जिनेंद्र ॥ ॐ ह्रीं विमलतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥

संसारभूरिसरतापविनाशनोत्को यः कर्मघर्मरहितो महितोऽमरेन्द्रैः । सद्गंधनैरिहसुचंदनचंदनौघै अर्चे० ॥ ॐ ह्रीं वि० ॥ गंधं ॥ २ ॥ अक्षीणपुण्यसदृशैः सुदृशामभिष्टै रक्षुण्णशालिजनिभिर्जे-निभिर्विभेदैः । दिव्याक्षतैः क्षतमलोऽक्षयसौख्यलब्धिअर्चे० ॥ ॐ ह्रीं वि० ॥ अक्षतं ॥ ३ ॥ मुक्तींदिरासुहसितैर्हसितैर्जपाब्जजातीकदंबकलबंधुकमुख्यपुष्पैः । फुल्लद्भिरेभिरसमैः सुरपुष्पभेदै-अर्चे० ॥ ॐ ह्रीं वि० ॥ पुष्पं ॥ ४ ॥ सत्कारपूरपरमान्नपयोघृताद्यैः किंवा दुहद्भिरमृतैरमृतां-शुकांतैः । संतापपापतुदितं प्रचुरैर्हविर्भिअर्चे० ॥ ॐ ह्रीं वि० ॥ चरुं ॥ ५ ॥ ज्ञानप्रदीपपरमाधि-कदिव्यतत्वं सद्दीपयद्भिरभितो वलयं दिशायाः । सद्दीपकैः कुमलतांधुतदुःसमूहैअर्चे० ॥ ॐ ह्रीं विमलतीर्थंकराय ॥ दीपं ॥ ६ ॥ धूपैः प्रधूपितककुब्घनैश्च धूमस्तोमैः प्रमोदितविमान-गणैर्गणेंद्रः । वैमानिकेन हृदयात्तसुसौरभायअर्चे० ॥ ॐ ह्रीं वि० ॥ धूपं ॥ ७ ॥ यैस्तालताल-सुरसालरसालमुख्यैः शातोद्भवैरभिनवप्रमदप्रदैस्तैः । अन्यैः फलैः परममोक्षफलाप्तयेऽहं चर्चे० ॥ ॐ ह्रीं वि० ॥ ८ ॥ वाश्चंदनाक्षतलतांतहविप्रदीपैर्धूपैः फलैः रचितमर्घ्यमनर्घ्यकांतेः । देवेंद्रपूज्य-विमलस्य पदाग्रतोऽद्य ह्यातोद्यवाद्यनिनदैरवतारयेऽहं ॥ अर्घ्यं ॥ शांतिधारां । पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

य एव नित्यक्षणिकादयो नया मिथोऽनपेक्षाः स्वपरप्रणाशिनः । त एव तत्वं विमलस्य ते मुनेः परस्परेक्षाः स्वपरोपकारिणः ॥ १ ॥ यथैकशः कारकमर्थसिद्धये समीक्ष्य शेषं स्वसहायकारकं ॥

तथैव सामान्यविशेषमातृका नयास्तवेष्टा गुणमुख्यकल्पतः ॥ २ ॥ परस्परेक्षाऽन्वयभेदालिंगतः प्रसिद्धसामान्यविशेषयोस्तव । समग्रताऽस्ति स्वपरावभासकं यथा प्रमाणं भुवि-बुद्धिलक्षणं ॥ ३ ॥ विशेषवाच्यस्य विशेषणं वचो यतो विशेषं विनियम्यते च यत् । तयोश्च सामान्यमतिप्रसज्यते विवक्षितात् स्यादिति तेऽन्यवर्जनं ॥ ४ ॥ नयास्तव स्याततपदसत्यलांछिता रसोपविद्धा-इव लोहधातवः । भवंत्यभिप्रेतगुणा यत स्ततो भवंतमार्याः प्रणिता हितैषिणः ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जयजिनविमलं वरसुखकमलं विमलं दर्शनज्ञानधरं । जयज्ञानसुचंद्रं नमितनरेंद्रं भद्रं भव्यानंद-करं ॥ १ ॥ जय मुनिवरगणधरशर्मकार । जय समवसरणभवभव्यतार ॥ जय सकलसभाशोभित जिनेंद्र । जय प्रथमकमले सेवितगणेंद्र ॥ २ ॥ जय द्वितीयकमले गणनिसेव । जय तृतीयकमले वरस्वर्गदेव ॥ जय तुरीयकमले ज्योतिष्कनारि । जय पंचमकमले भौमनारि ॥ ३ ॥ जय षष्ठे कमले नागनारि । जय सप्तमकमले स्वर्गनारि ॥ जय अष्टमकमले ज्योतिष्कदेव । जय नवमे कमले भौमदेव ॥ ४ ॥ जन दशमे कमले नागसार । जय एकादशकमले मनुष्यसार ॥ जय द्वादशकमले सिंहभार । जय मध्यमकमले जिन भव्यतार ॥ जय चामरछत्रसुपुष्पवृष्टि । जय

दुंदुभ्यासनधर्मवृष्टि ॥ जय भामंडलवरदिव्यवाणि । जय वृक्षाशोक सुमर्शखाणि ॥ घत्ता ॥ जयविमलजिनेंद्रं पापनिकंदं नयनानंदं भव्यानां । जयमुनिगणसहितं यतिपतिमाहितं शांतिदासब्रह्मयतिशरणं ॥ अर्घ्य ॥ स्पष्टानंतचतुष्टयादिकलितो मार्तंडकोटिप्रभो । दोषाष्टादशभिः प्रमुक्तसुतनुर्दिव्यैर्गुणैः संयुतः ॥ प्रोद्यद्वोषमयोरुचारुवचनैर्जीवौघसंबोधितः । श्रीमत्तीर्थंकरो जिनेंद्रविमलः कुर्यात् स मे मंगलं ॥ इत्याशीर्वादः ॥ कांपिल्यानगरे कुंथुसेननृपशामादेव्योर्जाताय सुवर्णवर्णाय इक्ष्वाकुवंशाय वराहलांछनाय षष्टिधनुरुच्छेदाय पंचाशल्लक्षवर्षायुष्काय षण्मुखवैरोटीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीविमलतीर्थंकराय नमस्कारं कुर्वे ॥ उदकचंदन० ॥ अर्घ्य ॥

## ॥ अथ अनंततीर्थंकरपूजा ॥

अनंततीर्थकर्तारं हरिषेणसुतोत्तमं । स्थापये विधिना भक्त्या जंतूनां सुखदायकं ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं अनंततीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

कनकरत्नमयैः कलशैर्महाजलभृतैः शुचितीर्थधिनायकं । चतुर्दशं जिननाथजिनेश्वरं त्रिभुवनैर्महितं जिनमर्चये ॥ ॐ ह्रीं अनंततीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ मलयपर्वतगंधपरि-

भ्रमैर्विरहबाणजितं जिनराजकं । चतु० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ महामनोहरकांतिसुतंदुलै-र्धमधमायुपलक्षितपुंजकैः ॥ चतु० ॥ ॐ ह्रीं अ० ॥ अक्षतं ॥ ३ ॥ बहुसुगंधसुमेवतिपारिजापरिमलैः शुभकेतकिचंपकैः । चतु० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ घृतसुपायसशर्करमोदकै रमृतक्षीररसैः परिपूरितैः । चतु० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ सुजनमोहनरत्नसुदीपकैर्ज्वलतया मणिपात्रविधिष्ठितैः । चतु० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ अगरुचंदनगुग्गुलमोहकैः सुरभिलोकसुपूरणधूपकैः । चतु० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ पनसगंधरसैः कदलीफलैर्वरसुदाडिमकम्रकजंबुकैः । चतु० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥ कुसुमगंधसुतंदुलपुष्पकैश्चरुसुरत्नसुदीपदशांगकैः । फलभरैश्चरणांबुजयुग्मकं त्रिभुवनैर्महितं जिनमर्चये ॥ अर्घ्यं ॥ शांतिधारां पुष्पांजलिः ॥

## ॥ स्तोत्रम् ॥

अनंतदोषाशयविग्रहो ग्रहो विषंगवान् मोहमयश्चिरं हृदि । यतोजितस्तत्वरुचा प्रसीदता त्वया ततोऽभूर्भगवाननंतजित् ॥ १ ॥ कषायनाम्नां द्विषतां प्रमाथिना मशेषयन्नाम भवानशेषवित् । विशोषणं मन्मथदुर्मदामयं समाधिभैषज्यगुणैर्व्यलीनयत् ॥ २ ॥ परिश्रांबुर्भयवीचिमालिनी त्वया स्वतृष्णा सरिदार्य शोषिता ॥ ३ ॥ सुहृत् त्वयि श्रीसुभगत्वमश्नुते द्विषंस्त्वयि प्रत्ययवत्प्रलीयते । भवानुदासीनतमस्तयोरपि प्रभो परं चित्रमिदं तवेहितं ॥ ४ ॥ त्वमीदृश-

स्तादृश इत्ययं मम प्रलापलेशोऽल्पमतेर्महामने । अशेषमहात्म्य मनीरयन्नपि शिवाय संस्पर्श-इवाऽमृतांबुधेः ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥

## ॥ जयमाला ॥

जय देवजिनेंद्रं पापनिकंदं वंद्यं त्रिभुवनशर्मकरं जय नाथानंतं श्रीभगवंतं वंदे संतं शांतधरं ॥ १ ॥ जय जिनवर भवहर वीरवीर । जय सकलविमलमते धीरधीर ॥ जय ज्ञानप्रपंचप्रचारचार । जय पुण्यपयोनिधिपारपार ॥ २ ॥ जय जिनमतपंकजसूरसूर । जय ज्ञानसुधारसपूरपूर ॥ जय परमतभंजनदंडदंड । जय सकलसुखामलपिंडपिंड ॥ ३ ॥ जय मोक्षवधूवरहारहार । जय सकलभुवनसुखकारकार ॥ जय सकलभुवनपतिवंद्यपाद । जय सबलघनाघनदिव्यनाद ॥ ४ ॥ जय मानविमर्दन देवदेव । जय दिनकरहिमकरसेवसेव ॥ जय पापनिकंदन परमगात्र । जय कमलसुलोचन पद्मपात्र ॥ ५ ॥ जय धर्मपयोनिधिचंद्रचंद्र । जय मोहविमर्दन रहिततंद्र ॥ जय जन्मजरामयमरणहरण । जय परमनिरंजन परमचरण ॥ घत्ता ॥ जय परमजिनेशं सकलगणेशं ईशं त्रिभुवनभव्यकरं । जय भगवंतं देवानंतं शांतिदासब्रह्मशर्मकरं ॥ अर्घ्यं ॥ लोकालोकसमस्त-भावकथकः स्फूर्जत् सुबोधेन यश्चांतातीतगुणांबुधिः शिववधूपाणिप्रियो धर्मदः । जंतूनां करुणाम-यैकहितकृत श्रीमाननंतो जिनो देवैः सततं समर्चितपदः कुर्यात स मे मंगलं ॥ इत्याशीर्वादः ॥

अयोध्यापुरे सिंहसेननृपतिजयश्यामादेव्योर्जाताय सुवर्णवर्णाय इक्ष्वाकुवंशाय पंचाशद्धनुरुच्छेदाय त्रिंशल्लक्षवर्षायुष्काय भल्लुकलांछनाय पाताळअनंतमतीयक्षयक्षीसमेताय संमेदगिरौ कर्मक्षयंगताय श्रीमदनंततीर्थंकराय नमस्कारं कुर्वे ॥ उदकचं० ॥ अर्घ्यं ॥ मदनमदविदारी चारुचारित्रधारी नरकगतिनिवारी मोक्षमार्गावतारी । नृसुरनयनहारी केवलज्ञानधारी जयतु जगति चंद्रोऽनंतनाथो जिनेंद्रः ॥ इत्याशीर्वादः ॥ नीरैः सद्गंधसारैः कुसुमपरिमलैर्भक्ष्यनैवेद्यदीपैर्धूपै रत्नैश्च नानाफलभरितसमर्घादिद्रव्येन दूर्वा । दध्ने क्षीरेण दर्भप्रभृतिक्रमुककर्पूरनारंगवल्लि पूर्णार्घ्यं शांतिदासो जगति महित ते संभ्रमेऽनंतनाथ ॥ पूर्णार्घ्यं ॥ समस्तभव्यो यशदस्तु भूयान्मनोरथोऽप्यूर्जितधर्मभावः ॥ सश्रावका पुत्रकलत्रलक्ष्मीर्जिनेश्वरांघ्रि (?) कमलप्रसादात् ॥ इष्टप्रार्थना ॥ इति ब्रह्माशांति दासविरचिताऽनंतचतुर्दशीपूजा समाप्ता ॥

## ॥ अथ चंद्रषष्टीविधानं ॥

अथ पूर्ववद्वायुकुमारादिप्रयोगेण भूमिसंस्कारः । श्रीमत्त्रैलोक्यसेव्यं प्रबलतरमहामोहमल्लातिमल्लं । कर्मं कल्यणराजं कठिणशठमनोजातमत्तेभसिंहं ॥ नत्वा श्रीचंद्रनाथं कुमुदविधुकृते रम्यकल्याणधाम्नः । षष्ट्याः श्रीचंद्रकस्य विधिवदनुपमं पूजनं कथ्यतेऽत्र ॥ १ ॥ इति पठित्वा प्रतिमोपरि पुष्पाक्षतं क्षिपेत ॥ चंद्रांकबिंदुविमलं जिनमर्चयामि । कारुण्यवारिधितरंगितमानसं तं ॥ चंद्रं

विधूतनिखिलाधिमहेशमंव्यं । सौम्यप्रसूडमहिमांचितचारुरूपं ॥ १ ॥ ॐ ह्रीं श्रीं चंद्रप्रभतीर्थंकर अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

क्षीरसागरनीरसंभृतहेमकुंभसुधारया । भव्यजीवसुतीव्रकल्मषपंकवारणसारया ॥ चंद्रलांछनचंद्रचर्चितचंद्रनाथसुनायकं । पूजयामि सुपूज्यपूजितपादपंकजयुग्मकं ॥ ॐ नमोऽर्हते भगवते चंद्रप्रभनाथाय यक्षयक्षीसहिताय ॐ श्रीं स्वाहा ॥ जलं ॥ १ ॥ देवनंदनरम्यचंदनकुंकुमस्य विलेपनैः । पंचसंसृतिकर्मघर्मकदुःखसंचयनाशनैः ॥ चंद्रलां० ॥ ॐ न० ॥ गंधं ॥ २ ॥ उज्वलैर्वरतंदुलैः शुभपद्मवाससुवासितैः । स्वर्गसत्पदमुक्तिकास्पददायकैर्विशदाक्षतैः ॥ चंद्रलां० ॥ ॐ न० ॥ अक्षतं ॥ ३ ॥ चारुचंपकचित्तरंजकपारिजातकमालया । कुंदजातिसुपुष्पकैः किल कामबाणविनाशया ॥ चंद्रलां० ॥ ॐ न० ॥ पुष्पं ॥ ४ ॥ शुद्धपाकसमृद्धशाकसुशालिकोदनमोदकैः । क्षुन्महारतिभेदनाय सुधामयैरिव तृप्तकैः ॥ चंद्रलां० ॥ ॐ न० ॥ चरुं ॥ ५ ॥ कांतकांतिकलापराजितरत्नसोमसुदीपकैः । पापतामससंतिनाशनदिग्विदिकृतभासकैः ॥ चंद्रलां० ॥ ॐ न० दीपं ॥ ६ ॥ कृष्णगुरुसुधूपिताखिलमार्गणैर्वरधूपकैः । जन्मकोटिजकर्मकोटिघनांधकाननदाहकैः ॥ चंद्रलां० ॥

ॐ न० ॥ धूपं ॥ ७ ॥ चोचमोचकपित्थपूगसुपक्वदाडिमसत्फलैः । नम्रनागरखेचरामरमुक्तकैः शिवसौख्यदैः ॥ चंद्रलां० ॥ ॐ न० ॥ फलं ॥ ८ ॥ उक्ताष्टवस्तुकृतमंत्रवरं ददेऽर्घ्यं । दूर्वादधिप्रमुखस्वस्तिकसुंदरं तत् ॥ तस्मै जिनाय यशसे वरमंगलाय । श्रीधर्मभूषणमहामुनिपूजिताय ॥ ॐ नमोऽर्हते भगवते चंद्रप्रभनाथाय ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः मम सर्वशांतिं कुरु २ स्वाहा ॥ अर्घ्यं ॥ शांतिधारां ॥ ९ ॥ देवेंद्रवृंदमणिमौलिसमर्चितांघ्रेर्देवाधिदेवपरमेश्वरकीर्त्तिभाजः । पुष्पायुधप्रमथनस्य जिनेश्वरस्य पुष्पांजलिं विरचयेऽस्तविनेयशांत्यै ॥ पुष्पांजलिः ॥

## ॥ अथ स्तोत्रम् ॥

चंद्रप्रभं चंद्रमरीचिगौरं । चंद्रं द्वितीयं जगतीव कांतं ॥ वंदेऽभिवंद्यं महता मृगींद्रं । जिनं जितस्वांतकषायबंधं ॥ १ ॥ यस्यांगलक्ष्मीपरिवेषभिन्नं । तमस्तमोऽरेरिव रश्मिभिन्नं ॥ ननाश बाह्यं बहु मानसं च । ध्यानप्रदीपातिशयेन भिन्नं ॥ २ ॥ स्वपक्षसौस्थित्यमदावलिप्ता । वाक्सिंहनादैर्विमदा बभूवुः ॥ प्रवादिनो यस्य मदार्द्रगंडा । गजा यथा केसरिणो निनादैः ॥ ३ ॥ यः सर्वलोके परमेष्ठितायाः । पदं बभूवाद्भुतकर्मतेजाः ॥ अनंतधामाऽक्षरविश्वचक्षुः । समंतदुःखक्षयशासनश्च ॥ स चंद्रमा भव्यकुमुद्वतीनां । विपन्नदोषाभ्रकलंकलेपः ॥ व्याकोशवाङ्न्यायमयूखमालः । पूयात् पवित्रो भगवान् मनो मे ॥ ५ ॥ इति स्तोत्रार्घ्यं ॥ इति समुदायपूजा ॥

## ॥ अथ प्रत्येकपूजा ॥

यो जीवपुद्गलौ धर्माऽधर्मावाकाशकालकौ । षड्द्रव्यं चोपदेशानो यजे तं शशिलांछनं ॥ ॐ ह्रीं षड्द्रव्यप्रकाशकाय ज्वालामालिनीसहिताय श्रीचंद्रप्रभतीर्थंकराय जलं निर्वपामि स्वाहा ॥ १ ॥ पृथ्व्यप्तेजोवायवश्च वनस्पतित्रसाह्वयौ । षड्जीवरक्षकं चर्चे सुरपूज्यं जलादिभिः ॥ ॐ ह्रीं षड्जीवरक्षकाय ज्वा० ॥ जलं ॥ २ ॥ स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रमनिंद्रियः । षडिंद्रियनिरोधश्च चंद्रप्रभजिनेश्वरः ॥ ॐ ह्रीं षडिंद्रियनिरोधकाय ज्वा० ॥ जलं ॥ ३ ॥ कृष्णो नीलः कपोतश्च पीतः पद्मं च शुक्लकः । षड्लेश्यरहितो यत्र जलाद्यष्टविधैः शुभैः ॥ ॐ ह्रीं षड्लेश्यारहिताय ज्वा० ॥ जलं ॥ ४ ॥ सुषमं सुषमंनाम सुषमं च प्रमाणकं । सुषमं दुःषमं कालो दुःषमं सुषमं तथा ॥ दुःषमं नाम कालश्च कथ्यते चातिदुःषमं । षट्कालस्य प्रमाणं च कथितं जिनमर्चये ॥ ॐ ह्रीं षट्कालप्रमाणकथिताय ज्वा० ॥ जलं ॥ ५ ॥ सासादनं च मिथ्यात्वं मिश्रसम्यक्त्वनामकं । उपशमो वेदकश्च विध्वस्ताः कर्मशत्रवः ॥ अंत्यक्षायिकसम्यक्त्वं रक्षितं रत्नवत्कृतं । फणिभिः पूजितं येन यजे भक्त्याऽष्टमं जिनं ॥ ॐ ह्रीं पंच मिथ्यात्वरहिताय क्षायिकसम्यक्त्वयुक्ताय ज्वा० ॥ जलं ॥ ६ ॥ महातपोग्रहं चंद्रनाथं चंदनसाक्षतैः । लतांतचरुदीपौघैश्चाये श्रीचंद्रलांछनं ॥ पूर्णार्घ्यं ॥ देवेंद्रैः सततं समर्चितपदो योगीश्वराणां प्रभुर्विश्वप्राणिदयामयोरुवचनः

सर्वार्थसिद्धिप्रदः । भव्यानां वरमोक्षमार्गकथको नष्टाष्टकर्मोद्भवः श्रीचंद्रप्रभसद्गुणैकनिलयः कुर्यात् स मे मंगलं ॥ इत्याशीर्वादः ॥



## ॥ जयमाला ॥

जय चंद्रप्रभस्वामिन् सुरनरसेवितपदकमल । जय जगत्रयगरिष्ठ जन्मजरामरणभयहरण ॥ १ ॥ दयाऽऽरंभमर्यादवानरिसन् ते । जनानंदकुर्वन् तु वज्रिन् नमस्ते । सदा तोष्टुसो जिनवराऽभीष्ट-सिद्ध्यै । महायोगिषु प्रवर योगांबरद्ध्यै ॥ २ ॥ ग्रहाद् व्यंतराद् डाकिनीचोरसिंहा । ज्वलावर्तसर्पात् महापाशबंहात् ॥ विषात कालकूटा हरिद्राश्च रोगा । जिनश्चंद्रभा रक्षतु दुष्टयोगात् ॥ ३ ॥ जलं चंदनं साक्षतं पुष्पभक्ष्यं । प्रदीपं च धूपं फलं चार्घ्ययुक्तं ॥ प्रपूज्ये जिनं चंद्रनाथं महेशं । भवे दुःखनाशाय साध्यप्रदेशं ॥ ४ ॥ वरं देवदेवं विशोभासमूहं । ध्वजं तोरणं मंगलं सद्गु-णेशम् ॥ जिनं शुद्धपंचामृतैः साभिषेकं । करोम्यष्टकं दुरदुःखं निरीशं ॥ ५ ॥ मुनिश्चार्जिका श्रावकः शुद्धभावः । तथा क्षुल्लकः क्षुल्लिका श्राविका वा ॥ जिनं चंद्रनाथं वरं सिंहद्वारं । प्रवे-? शंति मोक्षाय कर्मारिदूरं ॥ ६ ॥ महाशास्त्रसिद्धं श्रुवंति? सुबोधं । भवज्जन्मकूलकर्म कुर्वंति रोधं ॥ धनं धन्यपात्राय ददत्येव नित्यं । जिनं चंद्रनाथं गृहे रम्यकीर्तिं ॥ ७ ॥ वरं नाटकं गीतशब्दं रसालं । सदा कोमलं वाद्ययंत्रं विशालं ॥ जिनं चंद्रनाथं गणैः पीठशोभं । वनं पुष्टितं वापि-

काजंतुक्षोभं ? ॥ ८ ॥ महामोहक्रोधादिविज्ञानरुद्धं । कृतं संगमं दुर्जनैः सन्निबद्धं ॥ गुणं ब्रह्मचारी च त्रिज्ञमिका या । विपाकीकुरु त्वं महादेवराज ॥ ९ ॥ घत्ता ॥ कलिमलपापकलंकजन्मना कृतदुर्मंत्र । श्रीचंद्रप्रभजिननामि ? विदलयति नागगजगरुडभयं ॥ अर्घ्यं ॥

## ॥ अथ श्यामयक्षपूजा ॥

यजेऽश्वविद्युद्धफलाक्षमालं । वारांकवामान्यकरं त्रिनेत्रं ॥ कपोतपत्रप्रभयाऽऽख्यया च । श्यामं कृतेदुध्वजदेवसेवं ॥ ॐ आँ क्रों ऱ्हीं श्याममहायक्ष अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधिकरणं ॥

## ॥ अष्टकम् ॥

मंगलगंगाद्युपगततोयैर्मंगललोकोत्तमशरणाय । श्यामसुयक्षं जिनपदसेवं अष्टमजिनपं यक्षसुदेवं ॥ ॐ ऱ्हीं श्याममहायक्षाय ॥ जलं समर्पयामि ॥ १ ॥ चंदनसारैरुपगतसारैश्चंद्रिरगौरैर्युतियश-सारैः । श्याम० ॥ ॐ ऱ्हीं श्या० ॥ गंधं ॥ अक्षतपुंजैरधिकबलक्षैरक्षतदिक्षु धृतवरसाक्षैः । श्याम० ॥ ॐ ऱ्हीं श्या० ॥ अक्षतं ॥ जातिजपाचंपककमलाद्यैर्जातिजरामृतहृतशक्ताद्यैः । श्या० ॥ ॐ ऱ्हीं श्या० ॥ पुष्पं ॥ कांचनपात्रेऽमृतहरदन्नैः कांचनलक्ष्मीमुपगतपानैः । श्या० ॥ ॐ ऱ्हीं श्या० ॥ चरुं ॥ चंद्रिरपात्रस्फुरितमदीपैश्चंद्रिरकोटिद्युतिवरदीपैः । श्या० ॥ ॐ ऱ्हीं

इया० ॥ दीपं ॥ धूपसुमोदैरगरसमेतैर्धूपितकाष्ठांबरलतिकांतैः । इया० ॥ ॐ ऱ्हीं इया० ॥ 
धूपं ॥ ७ ॥ गोस्तनिकाम्राद्यमितफलाद्यैः सर्वसुजातामृतरुचिकाद्यैः । इया० ॥ ॐ ऱ्हीं इया० ॥
फलं ॥ अर्घ्यकदंबैर्जलकुसुमाद्यै रष्टसमंगलद्रव्यगुणौघैः । इया० ॥ ॐ ऱ्हीं इया० ॥ अर्घ्यं ॥
यस्यार्थं क्रियते पूजा । तस्य शांतिर्भवेत् सदा ॥ शांतिके पौष्टिके चैव सर्वकार्येषु सिद्धिदा ॥
शांतिधारां ॥

## ॥ अथ ज्वालामालिनीपूजा ॥

चंद्रोज्वलां चक्रफलासिपाशां । वर्मत्रिशूलां झषपाणिहस्तां ॥ श्रीज्वालिनीं सार्धधनुःशतोच्चां । जिनंगतां कोणगतां यजामि ॥ ॐ आं क्रों ऱ्हीं ज्वालामालिनि महायक्षिदेवि अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ कर्पूरचंदनविमिश्रिततीर्थवारि—धारा सुवर्णकनकालुकना-लमुक्ता ॥ श्रीज्वालिनीं रचितवज्रसुपंजराख्यां । सौभाग्यसिद्धिजननीं सुरभीकरोतु ॥ ॐ आं क्रों ऱ्हीं ज्वालामालिनि महादेवि ॥ जलं गृहाण ॥ १ ॥ आलेपनं सुरभिचंदनबंधुरैश्च । काश्मी-रचंदनमयोद्भवदिव्यगंधैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ गंधं ॥ २ ॥ शाल्यक्षतैर्मसृणकुंकमरंजितांगै । दिव्यैर्मयैस्तिलकमौक्तिकजालपद्यैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ अक्षतं ॥ ३ ॥ मंदारकुंदकुव-

लोत्पलपाटलैश्च । पुन्नागचंपकसुगंधिलतांतमाल्यैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ पुष्पं ॥ ४ ॥ कैलासशैलधवलैः कलमाक्षतै । सिद्धैःपरैः कनकपात्रभृतैर्हविर्भिः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ चरुं ॥ ५ ॥ अज्ञानसंतमसहारिनिजप्रकाशै । र्नीरांजनागत्रिहतैर्घनसारदीपैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ दीपं ॥ ६ ॥ आमोदिताऽखिलदिशैर्घननीलवर्णैः । कालागुरु? जितसुगंधिदशांगधूपैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ धूपं ॥ ७ ॥ पुंड्रेक्षुकांडशुभभूरुहसत्फलौघैः ॥ संवासितक्रमुकनागदलैः फलैश्चः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ फलं ॥ ८ ॥ वार्भिस्तुगंधकलमाक्षतपुष्पजाती—नैवेद्यदीपवरधूपफलोत्तमार्घ्यैः ॥ श्रीज्वा० ॥ ॐ० ज्वा० ॥ अर्घ्यं ॥ ९ श्रीतीर्थकृत्परमभक्तिमुपाश्रितायाः । पुष्पांजलिं क्रमसरोरुहयोर्विमुक्तं ॥ श्रीज्वा० ॥ ॐ० ज्वा० शांतिधारां ॥ पुष्पांजलिः ॥

## ॥ जयमाला ॥

विविधगुणाकरि निरुपमसुंदरि सकलभक्तजनकृतप्रवरि । वांछितदायिकि सेनगणनायकि जय ज्वालिनिदेवि कृपाकरि ॥ १ ॥ सदा कुंदगाकारमूर्ते सुबाले । नगाधीशवृंदारकैर्भावलोले ॥ नमः श्रीसदानंदकीर्ते विलोले । मुदाऽहं भजे ज्वालिनीदेवि पाल्ये ॥ २ ॥ अलिकुंतलाहिसमकेशपाशे । श्रीचंद्रार्ककांतानने मंडलस्थे ॥ सदा विश्वविद्यालिवासे सुबाले मुदा० ॥ ३ ॥ हटद्रत्नरत्नाद्यलंकारकंठे । वरानेकमुक्तालिभूषांशुकांगे ॥ सदा शुभ्रवर्णे लसद्धर्वजाले । मुदा० ॥ ४ ॥ कृताने-

कभूतालिविघ्नौघकुक्षे । मुदा नर्तितानेकजान्वि सुजंघे ॥ दयाधर्मसद्धर्मसत्यैर्विशाले । मुदा० ॥ ५ ॥



सदाऽनेकरूपं कृते प्रौढपादे । सदाऽऽनंदरूपे चिदानंदबोधे ॥ महाशास्त्रशास्त्रादिविद्याविशाले । मुदा० ॥ ६ ॥ सदा मंगलाचक्रकीर्ते त्रिशूले । सदा दानमानायुधे चापजाले ॥ गताल्पसर्पायुधे लक्ष्मिजाले । मुदा० ॥ ७ ॥ कलाकौमुदीकौमुदि मच्छत्राणे । नुताखेटनाकीनराधीशशोणे ॥ सदा मंगले हस्तकेलिसुलोले । मुदा० ॥ ८ ॥ त्रिलोकैकधीर धराधारदेवि । कलौ कामदे कालिकाकारदेवि ॥ जयाऽऽरावशब्दं कृते जीवपाले । मुदा० ॥ ९ ॥ घत्ता ॥ इति गुणगणशीले नीतिनिःशेषलोले । विजितरिपुविनाशे शुद्धसम्यक्त्ववासे ॥ जगति जनसुवंद्ये सिद्धबुद्धैकदेवि । भजतु विजयराणी सोमसेनं सुवंद्ये ॥ अर्घ्यं ॥ तुभ्यं मया रचितमर्चनपूजनं च । दत्तं गृहाण कनकालुकवारि मुक्तं ॥ आराधितेऽखिलजनैर्जगतां प्रशांत्यै । धर्मार्थकामफलदे मम ह्रीष्टसिद्ध्यै ॥ इत्याशीर्वादः ॥ इति चंद्रषष्ठीविधानम ॥

# ॥ सर्व वास्तुदेवांचे सामान्यबलिपदार्थ ॥

तांदळाचे वडे, तूप व मोदक.

## ॥ विशेषबलिपदार्थ खालीं कोष्टकांत क्रमानें लिहिलेप्रमाणें. ॥

| | वास्तूचीं नांवें. | बलिपदार्थांचीं नांवें. | बलिपदार्थ भरून ठेवण्याच्या पात्रांची संख्या. | | वास्तूचीं नांवें. | बलिपदार्थांचीं नांवें. | बलिपदार्थ भरून ठेवण्याच्या पात्रांची संख्या. |
|---|---|---|---|---|---|---|---|
| १ | ब्रह्मास | भाताच्या लाह्या, तूप, साखर व क्षीरान्न | ४ | ११ | विवस्वान् यास | उडिदाच्या घुगऱ्या व तीळ | ३ |
| २ | इंद्रास | कोष्ठ? व फुलें | २ | १२ | मित्रास | दहि, हाराळी व कानवलें | ३ |
| ३ | अग्नीस | दूध, तूप व तगर | १ | १३ | भूधरास | दूध | ३ |
| ४ | यमास | तिळाचें चूर्ण व वरणाच्या घुगऱ्या | २ | १४ | सविंद्रास | धणें व भाताच्या लाह्या | १ |
| ५ | नैर्ऋत्यास | तिळाचें तेल तिळाचें पेंड | १ | १५ | साविंद्रास | कापूर, काश्मीर, लवंग या सुगंध द्रव्यांनीं मिश्र केलेलें पाणी | १ |
| ६ | वरुणास | धणें व क्षीरान्न | २ | १६ | इंद्रास | मुगाचें चूर्ण व फुलें | १ |
| ७ | पवनास | हळदीचें पीठ | १ | १७ | इंद्रराजास | तांदळाचे वडे व मुगाचें चूर्ण | १ |
| ८ | कुबेरास | तांदळाचें पायस | २ | १८ | रुद्रास | गूळ व कानवले | १ |
| ९ | ईशानास | तूप व क्षीरान्न | १ | | | | |
| १० | आर्यास | कानवलें व फळ | ३ | | | | |

| | वास्तूचीं नांवें | बलिपदार्थांचीं नांवें. | बलिपदार्थ भरून ठेवण्याच्या पात्रांची संख्या. |
|---|---|---|---|
| १९ | रुद्रराजास | गूळ, तांदळाचें पीठ व अंबोळी | १ |
| २० | आप यास | गूळ, तांदळाचें पीठ, पांढरें कमळ, शंख व अंबोळी | १ |
| २१ | आपवत्सास | ,, | १ |
| २२ | पर्जन्यास | तूप | १ |
| २३ | जयंतास | ताजें लोणी | १ |
| २४ | भास्करास | गूळ व कुंदपुष्प | २ |
| २५ | सत्यकास | ताजें लोणी | २ |
| २६ | भृष यास | ताजा लोण्याचा गोळा | २ |
| २७ | अंतरिक्षास | हळदीचें व उडिदाचें चूर्ण | १ |
| २८ | पूष यास | वरणाच्या घुगऱ्या व दूध | १ |
| २९ | वितथास | कुळ, मिरे व पिंपळ | १ |
| ३० | राक्षसास | गूळ | २ |
| ३१ | गंधर्वास | कर्पूर व चंदन यांचा गंध | २ |
| ३२ | भृंगराजास | क्षारान्न | २ |

| | वास्तूचीं नांवें. | बलिपदार्थांचीं नांवें. | बलिपदार्थ भरून ठेवण्याच्या पात्रांची संख्या. |
|---|---|---|---|
| ३३ | मृषदेवास | उडिदाच्या घुगऱ्या | १ |
| ३४ | दौवारिकास | तांदळाचें पीठ | १ |
| ३५ | सुग्रीवास | मोदक | १ |
| ३६ | पुष्पदंतास | पुष्प व पाणी | २ |
| ३७ | असुरास | तांबडा भात | २ |
| ३८ | शोषास | तीळ व अक्षता | २ |
| ३९ | रोगास | घारग्या | १ |
| ४० | नागास | साखर, दूध, भा. लाह्या | १ |
| ४१ | मुख्यास | श्रीखंड | १ |
| ४२ | भल्लाटास | गूळभात | २ |
| ४३ | मृगदेवास | गुळाचें कानवलें | २ |
| ४४ | अदितीस | मोदक | २ |
| ४५ | उदितीस | तिळाचें कानवलें | १ |
| ४६ | विचारीस | मीठ घालून केलेला भात | १ |
| ४७ | पूतनेस | तीळ व तांदळाचें पीठ | १ |
| ४८ | पापराक्षसी | मुगाच्या घुगऱ्या | १ |
| ४९ | चरकीस | तूप व गूळ | १ |

## ॥ अथ वास्तुविधानं ॥

ॐ परमब्रह्मणे नमो नमः । स्वस्ति २ । जीव २ । नंद २ । वर्धस्व २ । विजयस्व २ । अनुशाधि २ । पुनीहि २ । पुण्याहं २ । मांगल्यं २ । पुष्पांजलिः ॥ घंटाटंकारवीणाक्वणितमुरजधांधांक्रियाकाहलाचिझ्झीकारोदारभेरीपटहदलदलंकारसंभूतघोषैः । आक्रम्याऽशेषकाष्ठातटमवघटितं-प्रोद्घटं दश्नाटिभ्र मिष्ठाधिष्ठाहंदिष्टिप्रमुख इह लतांतांजलिं प्रोतक्षिपामि ॥ ॐ ह्रीं वाद्यमुद्घोषयामि स्वाहा । वाद्यमुद्घोषणं ॥ १ ॥

## ॥ गद्यम् ॥

ॐ जलस्थलशिलावालुकापर्यंतरभूमिशोधनपुरःसरपरिपूरितशुद्धवालुकेष्टकोमलमृत्स्नाधिष्ठिताधिष्ठाने। पंचविधरत्नरमणीयपंचालंकारोपिनशातकुंभमयस्तंभसंभृते । सततशैत्यमांद्यसौरभसंसक्तमंदानिलांदोलितपताकापंक्तिविलसिते । सुवर्णशिखरविन्यस्तमाणिक्यमयूखमालांबरविरचितश्रीविमानविराजमाने । चतुर्दिक्षु गोपुरद्वारतोरणोभयपार्श्वप्रदेशाविनिहितमणिमयमंगलकलशे । विविधविमलांबरविरचितवितानविलंबितमुक्तादामाद्यलंकृते । मुक्तिवधूस्वयंवरश्रीविवाहविभवनिवासभासुरे । समुचितसमस्तसपर्यायद्रव्यसंदोहसमन्वितविपुलतरलालितचैत्यायतने । जिनेंद्रकल्याणाभ्युदयमहामहोत्सवाभिरामेषु । वास्तुमंडपाभ्यंतरेषु पुष्पांजलिः ॥

## ॥ अथ पूजाक्रमः ॥

पूर्ववद्वायुकुमारादिप्रयोगेण भूमिसंस्कारः ॥ श्रीमोक्षलक्ष्मीशजिनेंद्रबिंबं श्रीमोक्षलक्ष्मीशवचोविलासं। श्रीमोक्षलक्ष्मीशगणेंद्रपादौ श्रीमोक्षलक्ष्मीशपुरः समर्चे ॥ १ ॥ वातांब्वग्निसुधाशनैश्च भुजगान् श्रीक्षेत्रपालं कृतं । संतर्प्याऽऽशु कुशान् दिशासु नवसु ब्रह्मादिकासु क्रमात् ॥ गंधार्द्रांहरितालितालिकलितान् रत्निप्रमाणान्विता । विन्यस्याऽक्षयसंपदं बहुफलैः श्रीवास्तुभूमिं यजे ॥ २ ॥

## ॥ गद्यम् ॥

ॐ सर्वाभ्युदयनिश्रेयसदुस्तरनिस्थितसुखमाधकतया रत्नत्रयमद्धर्मप्रतिपादकसर्वज्ञवीतरागपरमार्हत्परमेश्वरस्थापनान्यासनिबंधनचैत्यचैत्यालयसंरक्षणसर्वविघ्नोपनोदनानिकायिकानां। संभावितसर्वमाननीयमाव्यधिपवास्तुदेवपूजाधिकरणभूतस्य । समुचितोद्देशविरचित एकचतुर्द्वादशविंशत्यष्टोत्तरविंशतिषट्त्रिंशत्प्रमाणाष्टकमालाशिलाषट्कमूत्रसंधिचतुष्टयादिविशिष्टलक्षणोपलक्षितचतुःषष्टिकोष्टमंडितमंडुकपदस्य मध्यमभागे स्थितब्रह्मणस्तदभिमुखदेवभागाः । पूर्वादिदिग्गतत्रित्रिभागभागिनां चतुर्णामार्यादिदेवानां। मानुषपदाग्नेयादिकोणचतुष्टयार्धार्धसमास्थितिसाविंद्राद्यष्टदेवानां। पूर्वादिदिग्गताष्टदिक्पालकेशवामतरालादिपदवर्त्तिपजघन्यादिचतुर्विंशतिदेवोपलक्षितपैशाचिकपदे वर्तमानानां । स्वस्वदक्षिणैकैकांतपदभोगिनां । जयांतांतरे पर्जन्यादिपावकपूषनैर्ऋतदौवारिकपवननागाभिधानदेवानां। अग्नेयादिचतुःकोणबाहिरवस्थितानां । विचारीप्रभृत्यपकचतुर्देवानां। ब्रह्मणो

दक्षिणमत्र्यलोकं यथा महेशां सर्वेषां । आर्यांशिगंब्रह्मकायथिवस्वद्भूधरदक्षिणोत्तरपार्श्वमित्रमोह्नत्नसर्वि-
द्यायुगापनवेतरभुजेंद्रद्वयदक्षिणोत्तरभरणकुबदोर्मुखशायिनां । मर्मादिनीतवास्तुसहभारितसर्ववास्तुदे-
वानां । जलगंधाक्षतपुष्पदीपधूपान्वितेन पपव्यंजनमोदकस्वस्वरूपसामान्यबलिना । जलधारांत्यव-
क्ष्यमाणविशेषबलिना । पुनर्जलधारावसानेन स्वस्वमंत्राभिमंत्रितेन समलंकृतकन्यासुयोगगणिकान्यत-
मोद्धृतेन सुप्रसादमापादयतुकामाः । स्नानानुस्नानमितधौतांतरीयोत्तरीयपरिवासभूषानुलेपनमाल्यप्रा-
सादनकलिताः । कृतसकलीकरणक्रियाः । तत्प्रतींद्राः सत्परिचारकाः । एते वयं देवाद्यर्हत्सुहृदादि-
स्वगृहादिसुखविविधेच्छितेषु । विधीयमानेष्वष्टकर्मणि दैवितोपद्रवे वा भवज्ञातितसर्वविघ्नोपशमतासु
मुक्तसर्ववास्तुदेवानां प्रत्येकपूजाक्रमं यथाक्रममुपक्रमामहे । पुनः पुष्पांजलिः ॥ अथाऽर्हदीशप्रतिमा-
प्रतिष्ठाविधाननिर्विघ्नसमाप्तसिद्ध्यै । ततोऽकुराचादिवसाच्च पूर्वे दिने क्षपायां विदधीत नांदीं ॥ १ ॥
तत्राऽपि पूर्वं विदधीत वास्तुदिवौकसां भेकपदे स्थितानां । ततः परे वा विधिवत्सपर्यां क्रमेण
सामान्यविशेषकल्पां ॥ २ ॥ नत्वा समाचम्य समेत्य धाम कृत्वा तदीर्यापथशोधनं च ।
स्तुत्वा च सिद्धान् सकलीविधानं कृत्वैकतानो विजनप्रदेशे ॥ ३ ॥ कृत्वा समासाज्जिनराज-
पूजां श्रुतं समाराध्य तथा मुनींद्रान् । गुरोरनुज्ञां शिरसा गृहीत्वा दत्वा नियोगं परिचा-
रकाणां ॥ ४ ॥ प्रत्यग्रधौतोत्तमशुभ्रवासः कृत्वांतरीयं च तथोत्तरीयं । हैमोपवीतांगदहारमु-

द्राकिरीटकर्णाभरणैर्विभूषितः ॥ ५ ॥ तद्देवपूजासमये समुक्तमंत्रात्परं वाक्यमभाष्यमाणः । चतुः-परिचारविधिज्ञयुक्तः समाहितात्मा यजनप्रवीणः ॥ ६ ॥ इंद्रः प्रतींद्रेण समं विधाय पदं क्रियार्थे मखमंडपादौ । पदेऽत्र दद्यात् पददेवतानां बलिं सुयोगागणिकादिनित्यं ॥ ७ ॥ बलिश्च सामान्यविशेषभेदात् सुरादितुष्टो द्विविधः पदेशां । एकस्तु संव्यंजनपूपभक्तः । शेषस्तु तत्तत्पृथगिष्टवेद्यः ॥ ८ ॥ ब्रह्माणमिंद्राधिवसादिनाथानार्यादिदेवांश्च सविंद्रपूर्वान् । पर्जन्यपौरस्त्यादिवौकसोऽपि विचारिकाद्याश्च यजे क्रमेण ॥ ९ ॥ तदा तु पूजां सकलामराणामुच्चारयन्मानस एव मंत्रं । तत्र प्रयुक्तं वचनं च यद्यो तन्मंत्रतः प्राक् पठनीयमेव ॥ १० ॥ इति प्रारंभनिरूपणं ॥

## ॥ अथ अर्हत्पूजा ॥

विदधामि सलिलमलयजकुसुमैः संपूर्णपाणिपात्रेण । आह्वानस्य करणं स्थितिकरणं सन्निधीकरणं ॥ ॐ ह्रीं अर्हत्परमेष्ठिन् अत्र अवतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

गंगादितीर्थह्रददिव्यतोयैर्गांगेयमुख्योज्वलकुंभपूर्णैः । शीतांशुशीतैर्भवतापहारैः संपूजयामो जिनपादपद्मौ ॥ ॐ ह्रीं अर्हत्परमेष्ठिने जलं निर्वपामि स्वाहा ॥ १ ॥ काश्मीरकालागरुपुष्करंदुव्या-

मिश्रितात्युत्तमगंधसारैः । तापापनोदैः सुरभीकृताशैः संपू० ॥ ॐ ह्रीं अ० ॥ गंधं ॥ २ ॥ शालीयशुभ्राक्षतमंजुपुंजैराविष्कृताराधनपुण्यपुंजैः । पाथेयभूतैः सुदृशां सुमार्गे संपू० ॥ ॐ ह्रीं अ० ॥ अक्षतं ॥ ३ ॥ आघ्राणनप्रीणनकारिभूरिसौरभ्यसंतर्पितसर्वलोकैः । सत्पुष्पमाल्यैः श्रितपुष्पलिड्भिः संपू० ॥ ॐ ह्रीं अ० ॥ पुष्पं ॥ ४ ॥ सुभक्ष्यसंव्यंजनसोपदंशैः शेषार्थतालस्थितशालिवद्भिः । सौरभ्यवद्भिर्मधुरैः सदुष्णैः संपू० ॥ ॐ ह्रीं अ० ॥ चरुं ॥ ५ ॥ कर्पूरधूलीकृतगर्भसर्पिरभ्याक्तवर्तिज्वलितप्रदीपैः । सदुज्वलैर्धूततमःसमूहैः संपू० ॥ ॐ ह्रीं अ० ॥ दीपं ॥ ६ ॥ कर्कोलजातीफलपत्रकादिगंधोल्बणद्रव्यकृतोद्घधूपैः । अंगारसंगप्रभवप्रधूपैः संपू० ॥ ॐ ह्रीं अ० ॥ धूपं ॥ ७ ॥ जंबीरजंबूकदलीकपित्थनारंगधात्रीसहकारपूर्वैः । फलोत्करैः पुण्यफलोपमानैः संपू० ॥ ॐ ह्रीं अ० ॥ फलं ॥ ८ ॥ वार्गंधपूर्वैर्वरवस्तुजातैः सिद्धार्थदूर्वादिसुमंगलैश्च । पवित्रपात्रे रचितं महार्घ्यं निवर्तयामः पुरतो जिनस्य ॥ अर्घ्यं ॥ ९ ॥ ( शांतिं करोतु सततं यतिनां गणस्य । शांतिं करोतु सततं जिनभाक्तिकानां ॥ शांतिं करोतु सततं जनतस्य दातुः ॥ शांतिं करोतु सततं कृतशांतिधारा ॥ शांतिधारा ॥ १० ॥ ) देवेंद्रवृंदमणिमौलिसमर्चितांघ्रेर्देवाधिदेवपरमेश्वरकीर्तिभाजः । पुष्पायुधप्रमथनस्य जिनेश्वरस्य पुष्पांजलिर्विरचितोऽस्तविने यशांत्यै ॥ पुष्पांजलिः ॥ इति जिनार्चनम् ॥

## ॥ अथ श्रुतपूजा ॥

स्याद्वादकल्पतरुमूलविराजमानां रत्नत्रयांबुजगभेवरराजहंसीं । अंगप्रकीर्णकचतुर्दशपूर्वकाया माईत्यसद्गुणमयीं गिरमाह्वयामि ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं ह्म्वीं क्ष्वीं हः सर्वशास्त्रप्रकाशिनि वद वद वाग्वादिनि अत्र अवतरावतर संवौषट् स्वाहा । ॐ ह्रीं श्रीं क्लीं ऐं अर्हं ह्म्वीं क्ष्वीं हः सर्वशास्त्रप्रकाशिनि वद वद वाग्वादिनि अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

वारितापैर्जलौघैश्च सत्तीर्थानि पवित्रितैः । श्रीमज्जैनेश्वरीं वाणीं यायजे ज्ञानसंपदे ॥ ॐ ह्रीं शब्दब्रह्मणे ॥ जलं निर्वपामि स्वाहा ॥ १ ॥ सौगंधिबंधुरैः सर्वानंदनैर्हरिचंदनैः । श्रीम० ॥ ॐ ह्रीं श० ॥ गंधं ॥ २ ॥ अक्षुण्णैः क्षीरवाराशिवलक्षैः कलमाक्षतैः । श्रीम० ॥ ॐ ह्रीं श० ॥ अक्षतं ॥ ३ ॥ उत्फुल्लैर्मल्लिकामाल्यैः रतुलै रलिझंकृतैः । श्रीम० ॥ ॐ ह्रीं श० ॥ पुष्पं ॥ ४ ॥ क्षीरान्नैश्चरुकैर्दिव्यैर्बाष्पमुद्वहमानकैः । श्रीम० ॥ ॐ ह्रीं श० ॥ चरुं ॥ ५ ॥ देदिप्यमानैर्माणिक्यदीपैर्द्विगुणितातपैः । श्रीम० ॥ ॐ ह्रीं श० ॥ दीपं ॥ ६ ॥ दशांगैर्द्वादशांगीयां धूपैस्तुष्टदिशाधिपैः । श्रीम० ॥ ॐ ह्रीं श० ॥ धूपं ॥ ७ ॥ त्रिसम्रैः स्तवकैश्चंचद्रसालादिफलैरलं । श्रीम० ॥

ॐ ह्रीं श्रा० ॥ फलं ॥ ८ ॥ गंधाक्षोदकधारया हृदयहृद्धौविशुद्धाक्षतै । रोचिष्णुप्रसवैर्विचित्रसुरभिस्फारस्फुरद्दीपकैः गीर्वाणस्पृहणीयधूपनिवहैर्मधूपैः सुधासत्फल–स्तोमैः स्वस्तिकपूर्वकैः सुरुचिरं भूत्यै ददेऽर्घ्यं विभो ॥ अर्घ्यं ॥ ९ ॥ इत्यमीभिः समाराध्य पूजाद्रव्यं श्रुतं वरं । भवसंतापविच्छेदा शांतिधारा विधीयते ॥ शांतिधारा ॥ १० ॥ द्वादशांगांगिनीं भास्वद्रत्नत्रयविभूषणां । सर्वभाषात्मकां स्वच्छजैनीं वाणी मुपास्महे ॥ पुष्पांजलिः ॥ ११ ॥ इति श्रुतार्चनम् ॥

## ॥ अथ गणधरपूजा ॥

ये येऽनगरा ऋषयो यतींद्रा मुनीश्वरा भव्यभवाब्धितीर्णाः । तेषां व्रतीशां पदपंकजानि संपूजयामो गुणशीलसिद्ध्यै ॥ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रपवित्रतरगात्रचतुरशीतिलक्षणगुणगणधरचरणा अत्र अवतरतावतरत संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

पुनातु नः सौरभलोललोभमधुव्रतश्रेणिहतानुषंगा । नादेयगंगायमुनार्जितैषा मुनींद्रपादार्चनवारिधारा ॥ ॐ ह्रीं पूर्वाचार्येभ्यो जलं निर्वपामि स्वाहा ॥ १ ॥ मितोपमिश्रीकृतविश्वगंधपरिस्फुरत्नूतनवासवृंदः । तपोधनादेशपदानुलेपो यशो मदीयं विशदीकरोतु ॥ ॐ ह्रीं पू० ॥ गंधं ॥ २ ॥

शशिप्रभाबीजसमानरोचिर्विनेयपुण्यांकुरजालकांतिः । क्षुधादिदुःखक्षतये मुनींद्रपादानतस्तंडुलराशि-रस्तु ॥ ॐ० ह्रीं पू० ॥ अक्षतं ॥ ३ ॥ प्रगल्भगंधाहतषट्पदालिर्विनाकृताशागजगंधभाजः । करोतु योगींद्रपदावतीर्णो मनःसमाधिं सुमनःसमूहः ॥ ॐ ह्रीं पू० ॥ पुष्पं ॥ ४ ॥ सितांबुवाहाहितभक्ष्यभूषं निभर्मं यद् योगिपदार्चितं नः । करोति तृप्तिं परिणामसव्य सुगंधशालीमयि बंधुबुद्ध्या ॥ ॐ ह्रीं पूर्वाचार्येभ्यः ॥ चरुं ॥ ५ ॥ मधुव्रतालंबितकोटिभागप्रत्युज्वलच्चंपककुड्मलश्रीः । सगर्जनो योगिवराघ्र्यदीपः करोति तीतस्तमहापहारः ॥ ॐ ह्रीं पू० ॥ दीपं ॥ ६ ॥ मदन्मयन्विभ्रमभूमिरोहस्तमालनीलः सुरभिः करोतु । विभास्वदंगारविरुद्धयश्रीर्गणेश्वराराधनधूपधूमः ॥ ॐ ह्रीं पू० ॥ धूपं ॥ ७ ॥ हस्तद्वये संकरनीरमूर्भि गंधच्छलाब्जांतनभोऽतराणि । मुनीश्वरश्रीचरणार्चितानि स्वयं फलानीष्टफलाय संतु ॥ ॐ ह्रीं पू० ॥ फलं ॥ ८ ॥ गुणगणमणिसिंधून् भव्यलोकैकबंधून् । प्रकटितजिनमार्गान् तथ्यनित्यात्मवर्गान् ॥ परिचितनिजतत्वान् पादके शेषदत्तान् । समरसजिनचंद्रानर्घ्यंयामो मुनींद्रान् ॥ अर्घ्यं ॥ ९ ॥ ज्वलितसकललोकालोकलोकत्रयश्री-कलितललितमूर्तेः कीर्तितैर्द्रैर्मुनींद्रैः ॥ जिनवर तव पादोपांततः पातयामो जिनसमयविधित्तान् वर्त्तितान् शांतिधारां ॥ शांतिधारां ॥ १० ॥ देवासुरेंद्रमनुजेंद्रफणीश्वराणां । रत्नोज्वलन्मकुटकुंडलघृष्टपार्श्वे ॥ सिद्धेंदुयक्षखचरस्तवनीय वंदे । पुष्पांजलिप्रकरपादयुगं मुनीश ॥ पुष्पांजलिः ॥ ११ ॥ इति गणधरार्चनं ॥

## ॥ अथ पुष्पांजलिपुरःसरब्रह्मादिवास्तुदेवानां पृथगिष्टिः ॥

श्रीमज्जैनमहामहोत्सवविधिव्यापारसंसिद्धये । भव्यानामपि नर्द्धियोगनिचयश्रद्धापरीतात्मनां ॥ क्षेमार्थं क्रियमाणवास्तुविधिवत्संस्थानसंपूजने । प्रस्तावे प्रविकीर्यते जय जयाऽऽरवेण पुष्पांजलिः ॥ ॐ ह्रीं श्रीं क्ष्वीं भूः स्वाहा प्रस्तावनपुष्पांजलिः ॥ ग्रामक्षेत्रगृहादिभेदविविधोर्वीभागमध्याश्रय स्तत्त्व-ज्ञागपरिच्छदो बहुविधस्यात्मप्रदेशो विभुः । ब्रह्मादीक्षितिपूर्वदेवनिकरैर्गतमोन्मुखैर्वेष्टितो लाजाज्यान्वि-तदुग्धभक्त मधुना गृण्हातु रक्तप्रभः ॥ ॐ आं क्रों ह्रीं रक्तवर्ण सर्वलक्षणसंपूर्ण स्वायुधवाहनवधू-चिन्हसपरिवार । हे ब्रह्मन् आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

### ॥ बलिमंत्रः ॥

ॐ ब्रह्मणे स्वाहा । ब्रह्मपरिजनाय स्वाहा । ब्रह्मानुचराय स्वाहा । ब्रह्ममहत्तराय स्वाहा । अग्नये स्वाहा । अनिलाय स्वाहा । वरुणाय स्वाहा । सोमाय स्वाहा । प्रजापतये स्वाहा । ॐ स्वाहा । ॐ भूः स्वाहा । भुवः स्वाहा । भूर्भुवः स्वाहा । स्वः स्वाहा । स्वधा ॥ हे ब्रह्मन् इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं दीपं चरुं बलिं फलं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ इति स्वाहा ॥ ( ब्रह्मास भाताच्या लाह्या, तूप, साखर व क्षीरान्न ह्या सर्व जिनसा द्रोणांत भरून ठेवणें. ) एवं इंद्रादिसर्वत्र योज्यं ॥ ( याप्रमाणें इंद्र आदिकरून सर्व वास्तुदेवांची पूजा करणें. ) ऐरावतस्कंधमधिश्रयंतं वज्रायुधं रूप्यशचीसमेतं ॥ प्रत्यूहविध्वंसकमर्हदिष्टौ कोष्ठप्रसूनैः

प्रयजामि शक्रं ॥ ॐ आँ क्रों ऱ्ही सुवर्णवर्ण सर्वल० हे इंद्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

इंद्राय स्वाहा । इंद्रपरिजनाय स्वाहा । इत्यादि ॥ हे इंद्र इदमर्घ्यं पाद्य मित्यादि ॥ ( इंद्रास कोष्ठ व फुलें. ) २ ज्वालाकलापात्मकशक्तिहस्तो बस्ताधिरूढः सुपरिष्कृतांगः । स्वाहामहिष्या सममग्निदेवः प्रीणातु दुग्धैस्तगरैस्तथाज्यैः ॥ ॐ आँ क्रों ऱ्हीं रक्तवर्ण सर्वल० हे अग्ने आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा । आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

अग्नये स्वाहा । अग्निपरिजनाय स्वाहा । इत्यादि ॥ हे अग्ने इदमर्घ्यं पाद्यमित्यादि ॥ ( अग्नीस दुध, तूप व तगर. ) ३ छायासमेतं महिषाधिरूढं दंडायुधं दंडितवैरिवर्गं । वैवस्वतं विघ्नहरं तिलाद्यैः सिद्धान्नयुक्तैः परितर्पयामि ॥ ॐ आँ क्रों ऱ्हीं कृष्णवर्ण सर्वल० हे यम आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

यमाय स्वाहा । यमपरिजनाय स्वाहा । इत्यादि ॥ हे यम इदमर्घ्यं पाद्यमित्यादि ॥ ( यमास तिळाचें चूर्ण व वर्णाच्या घुगऱ्या. ) ४ नैर्ऋत्यधीशो निऋतिः सुऋक्ष मृक्षांगबाहं

द्विपदं सुरक्षः । आरूढवानुद्धृतमुद्गराग्रः पिण्याकमायच्छतु तैलमिश्रं ॥ ॐ आँ क्रों ऱ्हीं नील-वर्ण सर्वल० नैर्ऋत आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा । आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

नैर्ऋताय स्वाहा । नैर्ऋतपरिजनाय स्वाहा । इत्यादि ॥ हे नैर्ऋत इदमर्घ्यं पाद्यमित्यादि ॥ ( नैर्ऋत्यास तिळाचें तेल व तिळाचें पेंड. ) ५ करधृतफणिपाशो मंडनोद्योतितांशः करिमकरस-मूर्तिर्लोकसंक्रामकीर्तिः । सुरचिरवरुणानीप्राणनाथः सुयुक्तो वरुण इह समेत्य लातु दुग्धान्न-धान्यं ॥ ॐ आँ क्रों ऱ्हीं सुवर्णवर्ण सर्वल० हे वरुण आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

वरुणाय स्वाहा । वरुणपरिजनाय स्वाहा । इत्यादि ॥ हे वरुण इदमर्घ्यं पाद्यमित्यादि ॥ ( वरुणास घर्णे व क्षीरान्न. ) ६ ऊर्वीरुहाग्रायुधशक्तिहस्तमश्वाधिरूढं परिमंडितांगं । सद्वायुवे-गीमुखदत्तदृष्टिं पितृर्निशायाः पवनं यजामि ॥ ॐ आँ क्रों ऱ्हीं सुवर्णवर्ण सर्वल० हे पवन आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा । आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

पवनाय स्वाहा । पवनपरिजनाय स्वाहा । इत्यादि ॥ हे पवन इदमर्घ्यं पाद्य मित्यादि ॥ ( पवनास हळदीचें पीट. ) ७ सद्रत्नरुक्पुष्पितपुष्पकाभ्रयानाधिरूढस्फुरितोग्रशक्ते । सजानियूथ्यव्रज यक्षराज दत्तं मया स्वीकुरु पायसान्नं ॥ ॐ आँ क्रों ह्रीं सुवर्णवर्ण सर्वेल० हे कुबेर आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

कुबेराय स्वाहा । कुबेरपरिजनाय स्वाहा । इत्यादि ॥ हे कुबेर इदमर्घ्यं पाद्यमित्यादि ॥ ( कुबेरास तांदळाचें पायस. ) ८ उमासमेतो वृषभाधिरूढो जटाकिरीटः फणिभूषितांगः । त्रिशूलहस्तः प्रथमाधिनाथो गृण्हातु दुग्धान्नमिदं ममर्पिः ॥ ॐ आँ क्रों ह्रीं शुभ्रवर्ण सर्वेल० हे ईशान आगच्छ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

ईशानाय स्वाहा । ईशानपरिजनाय स्वाहा इत्यादि ॥ हे ईशान इदमर्घ्यं पाद्यमित्यादि ॥ ( ईशानास तूप व क्षीरान्न-अटवीखीर. ) ९ ॥ येऽग्रः पुरोदेशमवंतमार्य ध्वस्तात्मदेशप्रतिरोधवीर्य । सत्पूरिकामोदकपूपकादिभक्ष्यैः प्रहृष्टं विदधे फलैश्च ॥ ॐ आँ क्रों ह्रीं शुभ्रवर्ण सर्वेल० हे आर्य आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

आर्याय स्वाहा । आर्यपरिजनाय स्वाहा । इत्यादि ॥ हे आर्य इदमर्घ्यं पाद्यमित्यादि ॥ ( आर्यास कानवले व फळ. ) १० ब्रह्मापसव्यं पद्मावसानो बभासमानो मकुटादिभाभिः । सामीप्यसंवीतभुजिष्यवर्गो देवो समापात्ततिलैर्विवस्वान् ॥ ॐ आँ क्रों र्‍हीं रक्तवर्ण सर्वल० हे विवस्वन् आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

विवस्वते स्वाहा । विवस्वत्परिजनाय स्वाहा । इत्यादि ॥ हे विवस्वन् इदमर्घ्यं पाद्यमित्यादि ॥ ( विवस्वान् यास उडदाच्या घुगऱ्या व तीळ. ) ११ शत्रुशक्तिविनिवारणक्षमो मित्ररक्षणविधान-दक्षिणः । प्रत्यगीश इह मित्रनिर्जरः स्वीकरोतु दधिदूर्विकामपि ॥ ॐ आँ क्रों र्‍हीं सुवर्णवर्ण सर्वलक्ष० हे मित्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

मित्राय स्वाहा । मित्रपरिजनाय स्वाहा । इत्यादि ॥ हे मित्र इदमर्घ्यं पाद्यमित्यादि ॥ ( मित्रास दही, हाराळी व कानवले. ) १२ प्रजापतेः सव्यसुधासिभागे महीमवंतं महिमानमात्तं ॥ महीधरं मंडनमंडितांगं महामहस्कं महयामि दुग्धैः ॥ ॐ आँ क्रों र्‍हीं कृष्णवर्ण सर्वल० हे भूधर आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

भूधराय स्वाहा । भूधरपरिजनाय स्वाहा । इत्यादि ॥ हे भूधर इदमर्घ्यं ॥ पाद्यमित्यादि ॥ ( भूधरास दूध. ) १३ सविंद्रदेवाय सविक्रमाय तनूनपात्पक्षमुपाश्रिताय । वनामरानीकपुरःसराय ददामि पुंजीकृतधान्यलाजं ॥ ॐ आँ क्रों ऱ्हीं नीलवर्ण सर्वल० हे सविंद्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

सविंद्राय स्वाहा । सविंद्रपरिजनाय स्वाहा । इत्यादि ॥ हे सविंद्र इदमर्घ्यं पाद्यमित्यादि ॥ ( सविंद्रास धणे व भाताच्या लाह्या. ) १४ वैश्वानरा दिक् समुपाश्रिताय सार्विंद्रदेवाय सविक्रमाय । कर्पूरकाश्मीरलवंगकोष्ठैरुपस्कृतं पुण्यजलं ददामि ॥ ॐ आँ क्रों ऱ्हीं धूम्रवर्ण सर्वल० हे सार्विंद्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

सार्विंद्राय स्वाहा । सार्विंद्रपरिजनाय स्वाहा । इत्यादि ॥ हे सार्विंद्र इदमर्घ्यं पाद्यमित्यादि ॥ ( सार्विंद्रास कापुर, काश्मीर, लवंग व कोष्ठ या सुगंधद्रव्यांनीं मिश्र केलेलें पाणी. ) १५ इंद्रं वनामर्त्यकदंबकेंद्रं मंद्रारवं पुण्यजनस्य पक्षं । प्रत्यूहजालं विनिपातयंतं मुद्गस्य चूर्णैः प्रयजे

सपुष्पैः ॥ ॐ आँ क्रों ऱ्हीं अरुणवर्णं सर्वेल० हे इंद्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

इंद्राय स्वाहा । इंद्रपरिजनाय स्वाहा । इत्यादि ॥ हे इंद्र इदमर्घ्यं पाद्यमित्यादि ॥ ( इंद्रास मुगाचें चूर्ण व फुलें. ) १६ इंद्रराज गततंद्र निर्जितारातिवर्ग निजवर्गपोषक । आशारादिप्रतिपक्ष-माश्रिताऽऽदेहि पूपयुतमुद्गचूर्णकं ॥ ॐ आँ क्रों ऱ्हीं श्वेतवर्णं सर्वेल० हे इंद्रराज आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

इंद्रराजाय स्वाहा । इंद्रराजपरिजनाय स्वाहा । इत्यादि ॥ हे इंद्रराज इदमर्घ्यं पाद्यमित्यादि ॥ ( इंद्रराजास तांदळाचे वडे व मुगाचें चूर्ण. ) १७ समीराग्रभूमौ समुद्धासमानं निजं देशभागं सदा पालयंतं । यजे रुद्र मक्षुद्रवन्यामरेंद्र गुडापूपवर्गैरुपस्कारयुक्तैः ॥ ॐ आँ क्रों ऱ्हीं प्रवालवर्णं सर्वेल० हे रुद्र आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

रुद्राय स्वाहा । रुद्रपरिजनाय स्वाहा । इत्यादि ॥ हे इदमर्घ्यं पाद्यमित्यादि ॥ ( रुद्रास गूळ व कानवले. ) १८ रुद्रजयाख्यं परिमितरौद्रक्षुद्रानिकायं वनसुरमुख्यं । मारुतविघ्नं गुडपरिपिष्टैः

पिष्टकवर्गैरिह महयामि ॥ ॐ आँ क्रों ऱ्हीं पीतवर्ण सर्वल० हे रुद्रराज आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥



## ॥ बलिमंत्रः ॥

रुद्रराजाय स्वाहा। रुद्रराजपरिजनाय स्वाहा। इत्यादि ॥ हे रुद्र इदमर्घ्यं पाद्यमित्यादि ॥ ( रुद्रराजास गूळ, तांदळाचें पीठ व अंबोळी. ) १९ आमोदमाप्नोति गुणाधिकेषु विक्षेपमुद्धृत्य जनेषु यश्च। आपः स देवो गुडपिष्टयुक्तं सकैरवं शंखमुपैतु सैव ॥ ॐ आँ क्रों ऱ्हीं श्वेतवर्ण सर्वल० हे आप आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

आपाय स्वाहा। आपपरिजनाय स्वाहा। इत्यादि ॥ हे आप इदमर्घ्यं पाद्यमित्यादि ॥ ( आपयास गूळ, तांदळाचें पीठ, पांढरें कमळ, शंख आंबोळी. ) २० धर्मानुरक्तानतुमोदमानं पापानुशक्तानपसार्यंनं। महेश्वरायुक्तमिहाऽऽपवत्सं संपूजयेऽहं बलिना तथैव ॥ ॐ आँ क्रों ऱ्हीं शंखवर्ण सर्वल० हे आपवत्स आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा। आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

आपवत्साय स्वाहा। आपवत्सपरिजनाय स्वाहा। इत्यादि ॥ हे आपवत्स इदमर्घ्यं पाद्यमित्यादि ॥ ( आपवत्सास गूळ, तांदळाचें पीठ, पांढरें कमळ, शंख व आंबोळी. ) २१ पर्जन्य

पर्जन्यनिनादतुल्य--नादेह दूरीकृतवैरिलोक । स्वतर्जनीचालनतर्जितात्म वाचाटभृत्याज्यमुपैहि माद्र ॥ ॐ आँ क्रों ह्रीं जलवर्ण सर्वल० हे पर्जन्य आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

पर्जन्याय स्वाहा । पर्जन्यपरिजनाय स्वाहा । इत्यादि ॥ हे पर्जन्य इदमर्घ्यं पाद्यमित्यादि ॥ ( पर्जन्यास तूप. ) २२ जयं तनोति प्रतिरोधरोधात् स्वयं तनोति स्वजानानुवृत्तेः । योऽसौ जयंतो हरिदक्षिणस्थो गृण्हातु पूतं नवनीतमेतत् । ॐ आँ क्रों ह्रीं कृष्णवर्ण सर्वल० हे जयंत आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

जयंताय स्वाहा । जयंतपरिजनाय स्वाहा ॥ इत्यादि ॥ हे जयंत इदमर्घ्यं पाद्यमित्यादि ॥ ( जयंतास ताजी लोणी. ) २३ संक्रंदनापुष्ट्युपदेशितारं तापप्रकाशं प्रतिभासमानं । तमोपहं भास्करदेव मेतं कुर्वे प्रहृष्टं मधुकुंददानात् ॥ ॐ आँ क्रों ह्रीं श्वेतवर्ण सर्वल० हे भास्कर आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

भास्कराय स्वाहा। भास्करपरिजनाय स्वाहा। इत्यादि ॥ हे भास्कर इदमर्घ्यं पाद्यमित्यादि ॥ ( भास्करास गूळ व कुंदपुष्प. ) २४ सत्यामरं नित्य मसत्यदूरं गोत्रद्विपद्वामपदे वसंतं। सद्धर्म-नित्यानुकृतप्रमोदं संपूजये पूर्वसपर्ययैव ॥ ॐ आँ क्रों ऱ्हीं श्यामवर्ण सर्वल० हे सत्यक आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

सत्यकाय स्वाहा। सत्यकपरिजनाय स्वाहा। इत्यादि ॥ हे सत्यक इदमर्घ्यं पाद्यमित्यादि ॥ ( सत्यकास गूळ व कुंदपुष्प. ) २५ भृशं विवक्षुर्गुणवप्रसंगं भृशं दिदृक्षुर्मुनिमुख्यसंगं। भृषामरः संश्रितवृत्रशत्रु रातु प्रमोदान्नवनीतपिंडं ॥ ॐ आँ क्रों ऱ्हीं पुष्पवर्ण सर्वल० हे भृष आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

भृषाय स्वाहा। भृषपरिजनाय स्वाहा। इत्यादि ॥ हे भृष इदमर्घ्यं पाद्यमित्यादि ॥ ( भृष यास ताजा लोण्याचा गोळा. ) २६ अथांऽतरिक्षे विहरन् विनोदं वनेषु पश्यन् सुजनोपसर्गं। नुदन् बृहन्नानुसखांऽतरिक्षश्चूर्णं निशामाषज माददैतत् ॥ ॐ आँ क्रों ऱ्हीं कुंदवर्ण सर्वल० हे अंतरिक्ष आगच्छ २ संवौषट्। स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

अंतरिक्षाय स्वाहा । अंतरिक्षपरिजनाय स्वाहा । इत्यादि ॥ हे अंतरिक्ष इदमर्घ्यं पाद्यमित्यादि ॥ ( अंतरिक्षास हळदीचें व उडदाचें चूर्ण. ) २७ पुष्णातु यः सज्जनतोपकारं मुष्णाति चाऽसज्जनदुर्विलासं । कूपीटयोनेः सुहृदेष पूषः शिवाच्च मेतत् सपयः प्रतीच्छेत् ॥ ॐ आँ क्रों ऱ्हीं रक्तवर्ण सर्वल० हे पूष आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

पूषाय स्वाहा । पूषपरिजनाय स्वाहा । इत्यादि ॥ हे पूष इदमर्घ्यं पाद्यमित्यादि ॥ ( पूष यास वर्ण्यांच्या घुगऱ्या व दूध. ) २८ वितथाख्यं वितथीकृतारिशक्तिं प्रधानं साधुजनोपकारं । प्रतीतं दंडधराख्यं प्रदक्षिणस्थं वरकट्वन्नममर्चितं करोमि ॥ ॐ आँ क्रों ऱ्हीं इंद्रचापवर्ण सर्वल० हे वितथ आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

वितथाय स्वाहा । वितथपरिजनाय स्वाहा । इत्यादि ॥ हे वितथ इदमर्घ्यं पाद्यमित्यादि ॥ ( वितथास सुंठ, मिरें व पिंपळ. ) २९ रक्षः परिचारकसत्वरक्षं दक्षं सुमार्गे विहितप्रमोदं । कालापसव्याश्रयराक्षसेंद्रं मधुप्रदानात् सुखिनो भवंति ॥ ॐ आँ क्रों ऱ्हीं इंदुवर्ण सर्वल० हे राक्षस आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

राक्षसाय स्वाहा । राक्षसपरिजनाय स्वाहा । इत्यादि ॥ हे राक्षस इदमर्घ्यं पाद्यमित्यादि ॥ ( राक्षसास गूळ. ) ३० सुगंधगंधर्वसुपर्वहस्तप्रशस्तवीणाननगानगीतं । गंधर्वदेवं घनसारपूर्वैर्गंधैः समर्चे यममाश्रयंतं ॥ ॐ आँ क्रों ऱ्हीं पद्मवर्ण सर्वेल० गंधर्व आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

गंधर्वाय स्वाहा । गंधर्वपरिजनाय स्वाहा । इत्यादि ॥ हे गंधर्व इदमर्घ्यं पाद्यमित्यादि ॥ ( गंधर्वास कर्पूर व चंदन यांचा गंध. ) ३१ यो विक्रमाक्रांतजनप्रसंग स्तपोधनाधीशपदाब्जभृंगः । स भृंगराज श्रितधर्मराज पवित्रदुग्धान्न मुपाददातु ॥ ॐ आँ क्रों ऱ्हीं नीलवर्ण सर्वेल० हे भृंगराज आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

भृंगराजाय स्वाहा । भृंगराजपरिजनाय स्वाहा । इत्यादि ॥ हे भृंगराज इदमर्घ्यं पाद्यमित्यादि ॥ ( भृंगराजास क्षीरान्न. ) ३२ मृषीकृताधर्मपरप्रभावं मृषोक्तिदूरं मृषनामधेयं । रक्षादपायात्तमुदारशक्तिं माषान्नसंतर्पितमातनोमि ॥ ॐ आँ क्रों ऱ्हीं मेषवर्ण सर्वेल० हे मृषदेव आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

मृषाय स्वाहा । मृषपरिजनाय स्वाहा । इत्यादि ॥ हे मृषदेव इदमर्घ्यं पाद्यमित्यादि ॥ (मृषदेवास उडिदाच्या घुगऱ्या.) ३३ तपोधना जन्यनिवारणार्थं वनाश्रमद्वारि सदा निषण्णं । दौवारिकं सेवितयातुधानं संतर्पयेऽहं वरशालिपिष्टैः ॥ ॐ आँ क्रों ह्रीं सर्वेल० हे दौवारिक आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

दौवारिकाय स्वाहा । दौवारिकपरिजनाय स्वाहा । इत्यादि ॥ हे दौवारिक इदमर्घ्यं पाद्यमित्यादि ॥ (दौवारिकास तांदळाचें पीठ.) ३४ सुग्रीवया तन्त्रितवीणया वै गायन् नितांतं गुणिनां गुणौघं । सुग्रीवदेवः श्रितपाशहस्तः प्रमोदवान् मोदकदानतोऽस्तु ॥ ॐ आँ क्रों ह्रीं चंद्रवर्ण सर्वेल० हे सुग्रीव आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

सुग्रीवाय स्वाहा । सुग्रीवपरिजनाय स्वाहा । इत्यादि ॥ हे सुग्रीव इदमर्घ्यं पाद्यमित्यादि ॥ (सुग्रीवास मोदक.) ३५ बिभांति पुंसां गुणसंकथा ये पुष्पावदाताः खलु यस्य दंताः । स पुष्पदंतो वरुणांतिकस्थः पुष्पाणि गृण्हातु जलान्वितानि ॥ ॐ आँ क्रों ह्रीं श्वेतवर्ण सर्वेल० हे पुष्पदंत आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

पुष्पदंताय स्वाहा । पुष्पदंतपरिजनाय स्वाहा । इत्यादि ॥ हे पुष्पदंत इदमर्घ्यं पाद्यमित्यादि ॥ ( पुष्पदंताम पुष्प व पाणी. ) ३६ असुरकल्पसुरोऽभितक्रियो गिरिनदादिविहारलोलुपः । वरुण-प्रांतमहीमुपाश्रितो भजतु लोहितमन्नमुत्तमं ॥ ॐ आँ क्रों ऱ्हीं कृष्णवर्ण सर्वल० हे असुर आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

असुराय स्वाहा । असुरपरिजनाय स्वाहा । इत्यादि ॥ हे असुर इदमर्घ्यं पाद्यमित्यादि ॥ ( असुराम तांबडा भात. ) ३७ संशुद्धमार्गप्रतिरोधिवाहिनीशोषं सदा यः कुरुते प्रभावात । शोषः सपक्षीकृतयादसांपतिर्लातु प्रधौतं तिलमक्षतं च ॥ ॐ आँ क्रों ऱ्हीं धवलवर्ण सर्वल० हे शोष आगच्छ २ संवौषट् स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

शोषाय स्वाहा । शोषपरिजनाय स्वाहा । इत्यादि ॥ हे शोष इदमर्घ्यं पाद्यमित्यादि ॥ ( शोषास तीळ व अक्षता. ) ३८ रोगोपघातांगतपोधनानां दृष्टास्थिचिंता मनुकंपमानं । रोगं मरुत्पक्षकृतानुरागं सुखीकरोम्युत्तमकारिकाभिः ॥ ॐ आँ क्रों ऱ्हीं सवितृवर्ण सर्वल० हे रोग आगच्छ २ संवौषट् स्वाहा । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

॥ बलिमंत्रः ॥

रोगाय स्वाहा । रोगपरिजनाय स्वाहा । इत्यादि ॥ हे रोग इदमर्घ्यं पाद्यमित्यादि ॥ ( रोगास घारग्या. ) ३९ नागं समाराधितयोगिनाथं नागाधिनाथेन पलायितारं । वातापसव्याश्रय माश्रयंतं मधुप्रदुग्धैर्महयामि लाजैः ॥ ॐ आँ क्रों ह्रीं शंखवर्ण सर्वल० हे नाग आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

॥ बलिमंत्रः ॥

नागाय स्वाहा । नागपरिजनाय स्वाहा । इत्यादि ॥ हे नाग इदमर्घ्यं पाद्यमित्यादि ॥ ( नागास साखर, दूध व भाताच्या लाह्या. ) ४० मुख्यं यजे व्यंतरदेवमुख्यं यक्षेण सत्रा कृतचारुसख्यं । विख्यातकांतारविहारशक्तं संतं प्रवेकैर्वरवस्तुयुक्तैः ॥ ॐ आँ क्रों ह्रीं मौक्तिकवर्ण सर्वल० हे मुख्य आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

॥ बलिमंत्रः ॥

मुख्याय स्वाहा । मुख्यपरिजनाय स्वाहा । इत्यादि ॥ हे मुख्य इदमर्घ्यं पाद्यमित्यादि ॥ ( मुख्यास श्रीखंड. ) ४१ मह्लाटदेवं प्रतिमल्लदट्टसंघट्टनाविष्कृतसर्वशक्ति । वीरं कुबेरं प्रवणं प्रतीतं गुडान्नदानेन सुखीकरोमि ॥ ॐ आँ क्रों ह्रीं श्वेतवर्ण सर्वल० हे मह्लाट आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

भल्लाटाय स्वाहा । भल्लाटपरिजनाय स्वाहा । इत्यादि ॥ हे भल्लाट इदमर्घ्यं पाद्यमित्यादि ॥ ( भल्लाटास गूळभात. ) ४२ मृगगणैस्तपसाऽववशीकृतं मृगयते मुनिपं नमनायते । तमहमत्र मृदंगनदाश्रयं परिचरामि गुडान्वितपूपकैः ॥ ॐ आँ क्रों ऱ्हीं रक्तोत्पलवर्ण सर्वेल० हे मृगदेव आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

मृगदेवाय स्वाहा । मृगदेवपरिजनाय स्वाहा । इत्यादि ॥ हे मृगदेव इदमर्घ्यं पाद्यमित्यादि ॥ ( मृगदेवास गुळाचें कानवलें. ) ४३ धनदवामधरातलभागवीस्तवदातिनंदनमुख्यसुगद्दतः । अदितिरुग् भवनामरपूजितो मुदितवान् भवतादिह मोदकैः ॥ ॐ आँ क्रों ऱ्हीं कपिलवर्ण सर्वेल० हे अदिते आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

अदितये स्वाहा । अदितिपरिजनाय स्वाहा । इत्यादि ॥ हे अदिते इदमर्घ्यं पाद्यमित्यादि ॥ ( अदितीस मोदक. ) ४४ मोचाफलस्येव घुतिर्यदास्यादुदेति वाचाटनिवारणार्थं । मुमुक्षुसाक्षादुदितिः सुभुंक्ते भक्ष्यं तिलोपेतमुपास्यते सः ॥ ॐ आँ क्रों ऱ्हीं कुंदवर्ण सर्वेल० हे उदिते आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

उदितये स्वाहा । उदितिपरिजनाय स्वाहा । इत्यादि ॥ हे उदिते इदमर्घ्यं पाद्यमित्यादि ॥ ( उदितीस तिळाचें कानवलें. ) ४५ विचारि सत्कृत्यविनोदशक्ते विचारयुक्ते सुजनानुरक्ते । कृशानुबाह्यावनिभागयुक्ते गृण्हातु भक्तं लवणप्रयुक्तं ॥ ॐ आँ क्रों ऱ्हीं अग्निवर्ण सर्वलक्षणसंपूर्णे स्वायुधवहनचिन्हसपरिवारे हे विचारि आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

विचार्यै स्वाहा । विचारिपरिजनाय स्वाहा । इत्यादि ॥ हे विचारि इदमर्घ्यं पाद्यमित्यादि ॥ ( विचारीस मीठ घालून केलेला भात. ) ४६ कायेन वाचा मनसा पवित्र मावर्जयंती तपसामधीशं । रक्षोवहिस्था तिलपिष्टकाभ्यां संतुष्यतां संप्रति पूजनाख्या ॥ ॐ आँ क्रों ऱ्हीं हेमवर्ण सर्वल० हे पूतने आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

पूतनायै स्वाहा । पूतनापरिजनाय स्वाहा । इत्यादि ॥ हे पूतने इदमर्घ्यं पाद्यमित्यादि ॥ ( पूतनेस तीळ व तांदुळाचें पीठ. ) ४७ पापान्महापौरुषकारिणो या राक्षासिरूपाद्पराय तर्जेत् ।

सा मोहनाशावनिवाध्यगांश्रिता कुल्मापमायच्छतु पापराक्षसी ॥ ॐ आँ क्रों ह्रीं मेघवर्णे सर्वलक्षणसंपूर्णे स्वायुधवाहनचिन्हसपरिवारे हे पापराक्षसि आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥



## ॥ बलिमंत्रः ॥

पापराक्षस्यै स्वाहा । पापराक्षसीपरिजनाय स्वाहा । इत्यादि ॥ हे पापराक्षसि इदमर्घ्यं पाद्यमित्यादि ॥ ( पापराक्षसीस मुगाच्या घुगऱ्या. ) ४८ यत्र यत्र मुनयो वसंति ते तत्र तत्र तदजन्यवारिणी या चरत्यवनिमीशवाह्यतां सा ददातु चरकी घृतं मधु ॥ ॐ आँ क्रों ह्रीं शंखवर्णे सर्वलक्षणसंपूर्णे स्वायुधवाहनचिन्हसपरिवारे हे चरकि आगच्छ २ संवौषट् । स्वस्थाने तिष्ठ २ ठठ स्वाहा ॥ आह्वानस्थापनं ॥

## ॥ बलिमंत्रः ॥

चरक्यै स्वाहा । चरकीपरिजनाय । इत्यादि ॥ हे चरकि इदमर्घ्यं पाद्यमित्यादि ॥ ( चरकीस तूप व गूळ. ) ४९ एते वास्तुसुराः समस्तचरणां मंत्रार्पिता वाऽसतः । प्रत्यूहस्य विधायिन स्तवपचिताः प्रत्यूहसंहारकाः ॥ अद्याऽत्रार्पितपूजनात् प्रमुदिताः सर्वप्रभावान्विता । यष्टुर्याजकभूपमांत्रिशुभकृज्ञानाश्च संतु श्रियै ॥ ॐ आँ क्रों ह्रीं ब्रह्मेंद्रादिचरकीवास्तुदेवतांत्यवास्तुदेवताः पूर्णार्घ्यदानेन बहु

मानयेत् ॥ पूर्णार्घ्यं ॥ यस्यार्थं क्रियते पूजा वास्तुदेवा धराधिपाः । शांतिके पौष्टिके चैव सर्वविघ्नोपशांतये ॥ शांतिधारां ॥ इत्थं प्रार्थनयाऽनुगृह्य विदितं सामान्यमन्यं बलिं । सर्वे वास्तुसुराः प्रसीदत भवत्स्वाव्यंतरायास्तु ये ॥ गेहे धाम्नि विदित्सने च विविधोत्साहेऽथवा विष्टपे । संत्येतान् सकलान् निवारयत तत्सर्वं सदा रक्षत ॥ एवं जिनाधीश्वरयज्ञकाले संतर्पिताः स्वस्वविभूतियुक्ताः ॥ वन्यामगः किन्नरदेवमुख्याः कुर्वंतु शांतिं जिनभाक्तिकानां ॥ १ ॥ संपूजिता इत्यसुरेंद्रमुख्या महामहेऽमी प्रतिभासमानाः । दशप्रकारादितभावनेंद्राः कुर्वंतु शांतिं० ॥ २ ॥ मुख्याविमौ चंद्रदिवाकरौ च शेषग्रहा अश्वयुगादितारा: । प्रकीर्णकाज्योतिरमर्त्यवर्गाः कुर्वंतु० ॥ ३ ॥ जिनेंद्रचंद्रस्य महामहेऽस्मिन् संपूजिताः कल्पनिकायवासाः । सौधर्ममुख्यास्त्रिदशाधिनाथाः कुर्वंतु० ॥ ४ ॥ पृथ्वीविकारात् सलिलप्रदेशादग्नेश्च दाहात् पवनप्रकोपात् । चोरप्रयोगादपि वास्तुदेवाश्चैत्यालयं रक्षतु सर्वकालं ॥ १ ॥ तिर्यक्प्रचारादशनिप्रघाताद्बीजप्ररोहाद्रुमखंडपातात् । कीटप्रवेशादपि वास्तुदेवाश्चैत्यालयं० ॥ २ ॥ इष्टप्रार्थनाय पुष्पांजलिः ॥ संस्थाप्य मध्येऽष्टदिशासु बाह्ये जलप्रपूर्णान् सहिरण्यगर्भान् । सद्वस्त्रमाल्यांबुजदर्पणाढ्यान् कुंभान् यजे वास्तुसमृद्धिसिद्ध्यै ॥ ॐ ह्रीं समस्तनदीतीर्थजलं भवतु । कुंभेषु हिरण्यं निक्षिपामि स्वाहा । नेत्राय संवौषट् कलशार्चनं ॥ अथ पुण्याहवाचनसंकल्पः ॥ इति वास्तुविधानं ॥

## ॥ अथ ग्रहहोमविधानं ॥

श्रीमत्त्रिलोकजनशांतिकरप्रशांतिं । संसारसंततिपरिभ्रमणोपशांतिं ॥ श्रीशांतिनाथमभिवंद्य समस्तशांतिं । होमोत्सवाय कुसुमांजलिमुत्क्षिपामि ॥ ॐ ह्रीं श्रीं क्षीं भूः स्वाहा होमप्रस्तावनाय पुष्पांजलिः ॥ १ ॥ भेरी गंभीरनादा प्रवितितकहलाशंखढक्कामृदंगाः । प्रध्वानध्वानघंटा झणझणरवसज्झर्झरादिप्रघोषैः ॥ रंगद्गंगातरंगोद्भवतुमुलरवाशंकितैः क्षुभ्यदब्धिध्वानैरेकैः प्रगर्जद्घनरवसदृशैः श्रीजिनांघ्रिं यजामः ॥ ॐ ह्रीं पुष्पाक्षतं विनिक्षिप्य ध्वानकेन वाद्यमुद्घोषणं ॥ ( येथें सकल वाद्यांवर फुलें व अक्षता टाकून, सकल वाद्यें वाजविणें. )

## ॥ अथ पंचकुमारपूजा ॥

उत्खातपूरितसमीकृतसंस्कृतायां पुण्यात्मनीयभगवन्मखमंडपोर्व्यां । वास्त्वर्चनादिविधिलब्धिमखादिभागं वेद्या यजामि शशिभृद्दिशि वास्तुदेवं ॥ ॐ ह्रीं हे वास्तुकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापसन्निधीकरणं ॥ १ ॥ ॐ ह्रीं हे वास्तुकुमारदेव इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ शांतिधारां ॥ १ ॥ आयात भो वायुकुमारदेवाः । प्रभोर्विहारावसरात्तसेवाः । यज्ञांगमुक्तेदसुगंधि-

शांनमृद्वायुना शोधयनाऽश्रवर्गवी ॥ ॐ ह्रीं हे वायुकुमारदेव सर्वविघ्नविनाशन महीं पूतां कुरु २ हूँ फट् स्वाहा। पटुदर्भपूलेन भूमिं सम्मार्जयेत ॥ १ ॥ ॐ ह्रीं हे वायुकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ ह्रीं० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ ॐ ह्रीं हे वायुकुमारदेव इदमर्घ्यमित्यादि ॥ २ ॥ आयात भो मेघकुमारदेवाः प्रमोदिनाऽऽगवमगाधमेवाः । गृण्हीत यज्ञं समुदीर्णशंपा गंधोदकैः प्रोक्षत यज्ञभूमिं ॥ ॐ ह्रीं मेघकुमारदेव धरां प्रक्षालय २ अंहंसंवंझंठं क्ष फट् स्वाहा । षडूदर्भपूलोपात्तज्जलेन भूमिं सिंचेत ॥ ॐ ह्रीं हे मेघकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे मेघकुमारदेव इदमर्घ्यमित्यादि ॥ ३ ॥ आयात भो वन्हिकुमारदेवा आदानविद्यादिविधीयमेवाः ! भजध्वमिज्यां समिधां सम्बोधीं ज्वालाकलापेन परं पुनीत ॥ ॐ ह्रीं वन्हिकुमारदेव ज्वल प्रज्वल अमिततेजसे स्वाहा । षड्दर्भपूलानलेन भूमिं ज्वालयेत ॥ ॐ ह्रीं हे वन्हिकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे वन्हिकुमारदेव इदमर्घ्यमित्यादि ॥ ४ ॥ नागाः समुत्थाय महीमुपेत्य संचारशीलाः सुभिनः समर्थाः । जिनाध्वरे षष्टिसह-

